पण्डितराजमारवाडकेसरिश्रीलेहिरामजीशास्त्रिस्मारक-

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः-

* निदाङ्कुसुमम् *

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं-

# पातञ्जलं महाभाष्यम्

महामहोपाध्यायश्रीनागोजीभट्टविरचितमहा-
भाष्यप्रदीपोद्द्योतोद्भासितेन महामहो-
पाध्यायश्रीकैयटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम्।

तस्यायं—

## तृतीयोऽध्यायः

पण्डितराजश्रीलेहिरामशास्त्रिणा पौत्रेण, न्यायाचार्य,-पण्डितश्रीशिव
नारायणशास्त्रिणा पुत्रेण श्रीगुरुप्रसादशास्त्रिणा व्याकरण
चार्येण महता परिश्रमेण संशोधितं, टिप्पण्या समन्वितश्च।

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्य चित्॥ मनुः।

प्रथम संस्करणम्

मूल्य २)

## अत्यावश्यक सूचना—

जन्मना ब्राह्मण क्षत्रिय वैश्य के सिवाय अन्य किसी जाति को हमारी इस महाभाष्य के खरीदने व पढ़ने का अधिकार नहीं है। अतः जो जन्मना द्विज नहीं हैं वे इसे न खरीदें और न पढ़ें। ब्राह्मण क्षत्रिय आदि भी इसे शुद्ध होकर शान्तिपाठपूर्वक ही पढ़ें और पढ़ायें और अन्त में भी शान्तिपाठ करें। अन्यथा वे प्रत्यवायभाजन होंगे।

महाभाष्यस्य आद्यावन्ते चावश्यपठनीया शान्तिमन्त्राः —

तत्रादौ—ॐ शनो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शनो विष्णुरुरुक्रमः ॥ ॐ नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ ॥

[ ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाऽधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् अवतु वक्तारम्। ] ॥

ॐ शान्तिः शान्तिः शान्तिः।

ॐ नमः श्रीपाणिनिकात्यायनपतञ्जलिभ्यो मुनिभ्यः ॥

ॐ कारश्चाऽथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

पाठस्य अन्ते च—ॐ नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्माऽवादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

*Published by —*
**Pandit Nandkishore Shastri Ayurvedacharya,**
SHRI RAJASTHAN SANSKRIT COLLEGE GRANTH MALA,
Dharmakoop Meerghat, BENARES CITY


मुद्रक—माधव विष्णु पराडकर, ज्ञानमण्डल यन्त्रालय, काशी। ७६८४-९५

॥ श्रीमद्गणपतये नमः ॥

श्रीमद्भगवत्पतञ्जलिमुनिविरचित—

# व्याकरण-महाभाष्यम् ।

उद्द्योतोद्भासितप्रदीपविराजितम् ।

अथ तस्य—

## तृतीयाध्यायस्य प्रथमः पादः ।

❀ तस्येदं प्रथममाह्निकम् ❀

### प्रत्ययः ॥ ३।१।१ ॥

[॥*॥ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनां प्रतिषेधः ॥*]॥ अधिकारोऽयं

---

प्रदीप ] प्रत्ययः । अधिकारोऽयमिति । यदि तु प्रकारान्तरेण प्रकृतिस्वरूपनिर्देशादिना संज्ञा क्रियते ततो न स्यादतिप्रसङ्गः । यदा तु गौरवादतिप्रसङ्गपरिहाराधिकारेण क्रियते तदाऽतिप्रसङ्ग इत्यर्थः । तत्र यदि सर्वा संज्ञिनः स्वरूपेण निर्दिश्येरँस्ततो गौरवं स्यात् । अत्र 'सप्रत्यय' इति सन सकारादारभ्य कप पकारेण प्रत्याहाराश्रयणं सता विपरीतेन तदाऽनेकस्य पकारस्य सम्भवात्सन्देहः स्यात् । ननु प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात्प्रकृत्यादीनां प्रत्ययसंज्ञा न भविष्यति । तथाहि 'हन्तेर्यण्णोर्नियतयोः प्रत्ययोपपदयोः पष्ठी कर्तरि प्रत्ययो भवतीत्येक

---

उद्द्योत ] प्रत्ययः । 'अधिकारोऽयं'त्यस्य प्रयोजनमाह—यदि त्विति । अनेकस्येति । प्रत्याहाराश्रयणे सिद्धे पकारेण, व्याख्यानतो 'तप्रत्ययनार्थे'ति तदेव पकारेण्त्यर्थः । एवञ्च गौरवाऽतिव्याप्त्यादिदोषपरिहाराधिकार एव कर्तव्यः । तथा च प्रकृत्यादिष्वतिप्रसङ्ग इति भावः । तमाश्रित्य—नन्विति । विधीयमानस्य सनादे

---

टिप्पणी—१ इदं वार्तिकं क्वचिदपि न दृश्यते मन्महे तु कारिका गौडः । २ 'दोषपरिहारा' पा० । ३ 'धातो' इति 'प्रत्यय' इति च क्वचिन्न । ४ 'सस्वतुल्ये'ति सिप पकारणत्यर्थः । 'तिप' इति सत्पाठः । ५ 'तप' पा० ।

प्रत्ययसंज्ञा क्रियते । सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः।प्रकृति–'गुप्तिज्किद्भ्यः सन्' । उपपद–'स्तम्बकर्णयो रमिजपोः'।उपाधि

प्र ] वाक्यम् । 'ते च प्रकृतिप्रभृतिनाथपदार्थाः प्रत्ययसंज्ञा' इति द्वितीयं वाक्यम् । न चैकवाक्यतायां सम्भवन्त्यां वाक्यभेदो युक्त । नैतदस्ति । सनादीनामपि वाक्य भेदेनैव संज्ञा विधेया, न ह्यसत संज्ञिनि संज्ञाविधानमुपपद्यते । तत्रैकेन वाक्येन सनादीनां विधिः । अपरेण तेषामेव संज्ञाविधिः । ततश्च यथा सनादीनां वाक्यभेदेन संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्रतिनियतसंज्ञिनि प्रत्ययसंज्ञोपस्थानसामर्थ्यात्संज्ञासंज्ञि सम्बन्धप्रतिप्रत्तियोग्यविभक्त्यन्तराऽध्याहारेण प्राप्नोति । सनाद्युपात्तवाक्य एव प्रथम मेतेषां पारार्थ्यमवगतम् । द्वितीये तु संज्ञासंज्ञिसम्बन्धप्रतिपादनवाक्ये सम्बन्ध प्रतिपत्तौ स्वार्थता स्यात् , यथा च सप्तमीनिर्दिष्टस्य वाक्यभेदेनोपपदसंज्ञा अधिकारा-द्भवति तथा प्रत्ययसंज्ञापि प्राप्नोति । उपाधिशब्देन चेह तुल्यन्यायत्वाद्विशेषण-मप्युच्यते । क्वचित्तु तयोर्भेदेन व्यवहारो दृश्यते, यथा 'नोपाधेरुपाधिर्भवति विशे षणस्य वा विशेषण'मिति।'अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः । अनुपाधिरतोऽन्यः स्याच्छ्रायादि विशेषणं यद्वत् ॥' इति ॥

उ.]प्रथमान्ततया प्रत्यय'इत्यनेन सामानाधिकरण्यादेकवाक्यतया संज्ञासम्बन्धः।अन्ये-षान्तु विविभक्तित्वाद्वाक्यभेदेनैव संज्ञासम्बन्ध इति भावः । सम्भवत्येकवाक्यत्व एव वाक्यभेदो दोषो न त्वसम्भव इति समाधत्ते–नैतदस्ति । ननु विविभक्तित्वात्स्य 'प्रत्यय' इत्यनेन तेषां सम्बन्ध इत्यत आह—विभक्त्यन्तरेति। ननु सनादिविधा नार्थत्वात्प्रकृत्यादेरप्रधानतया संज्ञा न भविष्यतीत्यत आह–सनादीति । अन्यत्राऽ प्रधानत्वेऽप्यन्यत्र संस्कार्यत्वलक्षणस्वार्थत्वेऽविरोध इति भावः । ननु प्रकृतीनां प्रत्ययविधावुद्देश्यतया तासामेव संज्ञायामप्युद्देश्यत्वं न्याय्यं न तु प्रत्ययानामिति चेन, समानविभक्तिकत्वेन प्रत्ययानां क्रमोद्देश्यतया विभक्त्यन्तराऽध्याहारेण प्रकृ-त्यादीनामपि तत्सम्भवादित्यभिमानः । छायादिविशेषणस्य प्रत्ययसंज्ञा कुतो नोक्ता-नित्यत आह—उपाधिशब्देनेति । तुल्यन्यायत्वादिति । प्रत्ययनिमित्तत्वेन प्रकृत्या तुल्यन्यायत्वमित्यर्थः । एवञ्चोपाधिषु तदुद्भावनेनैव विशेषणेऽप्युद्भावि-तैवेति भावः । तदन्तवाच्य –प्रत्ययान्तवाच्य इत्यर्थः । समानशब्द इति । प्रयोगे भिन्नशब्दबोध्यत्वादशायां समानाधिकरणशब्दबोध्यो योऽर्थः प्रत्ययान्तशब्दवाच्य स उपाधिरुच्यत इत्यर्थः । यथा पञ्चालानां विषय 'पाञ्चाल' इत्यत्र देशो, 'दति-हारे'रित्यादौ च स्वादि पशु । नानार्थत्वासन्देहवारणाय–'दतिहरिः श्वे'त्यादौ विशेषनियमार्थाय स्पष्टप्रतिपत्तये वा क्वचित्समानाधिकरणशब्दप्रयोगोऽपि। आभ्या-

१ 'प्रकृति' । 'उपपद' 'उपाधि' इति निर्विभक्तिक क्वचित्पाठान्तरम् ।

'हरतेर्दृतिनाथयोः पशौ'। एतेषां प्रतिषेधो वक्तव्यः ॥ किं च स्याद्यद्येतेषामपि प्रत्ययसंज्ञा स्यात्? ॥ परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधयः प्रसज्येरन् ॥

---

प्र] किञ्च स्यादिति। नहि संज्ञाप्रणयनमात्रादेव दोषो भवति किन्तु तन्निमित्तकार्यप्रवर्तनात्, न च प्रकृत्यादीनां किञ्चित्तन्निमित्तं कार्यं सम्भवति। परत्वं तावदन्तर्निविशेषोपादानेन सनादिभिरेव प्रतिपन्नम्। न च गुपादीनां सनादीनां च परस्परयोः परत्वं युज्यते विरोधात्। उपपदस्यापि-समासे सति पूर्वनिपातेन भवितव्यमिति परत्वाऽभावः। उपाधेरपि-पौर्वापर्यस्य लौकिके प्रयोगे नियमाऽभावात् स्थितस्यैव च परत्वस्य शास्त्रेणाऽनुवादात् तत्त्वस्य विधायकत्वाऽभावादनुवादकत्वाद् यस्य चोपाधित्वात्तस्य च परत्वाऽसम्भवात् परत्वाऽभावः। आद्युदात्तत्वमपि न भविष्यति, यथास्वं लक्षणैः तेषां स्वरस्य विहितत्वात्। अङ्गसंज्ञा च विधानप्रतिबद्धा, न च प्रकृत्यादयः कुतश्चिद्विहिता इति तेषु परतः सा नान्यस्य भविष्यतीति प्रश्नः ॥

परत्वमिति। प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात्। शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य। उपपदस्यापि-परत्वादुपसर्जनेन पूर्वनिपातेन-द्रव्यपुरुषादिषु मानकृता कारिता परत्वं स्यात्। 'भोक्तुं व्रजति' इत्येव च नित्यं स्या-

---

उ] सनः प्रकृत्यादीनामुपाधित्वस्योक्तिः, अस्मादिष्याद्युक्तिश्च। धात्वादीति। आदिना 'धातोः कर्मणः समानकर्तृका'दित्यादि। अत एव तदसमानाधिकरणमेव, 'गार्गिकया श्लाघते' इति पदान्तराऽभिप्रेयञ्च। तत्प्रयोगे च तुमोऽसाधुत्वमेव ॥ 'अर्थविशेष उपाधि'रित्यादि कात्यायनवचनमिति न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्रः ॥ न च प्रकृत्यादीनामिति। न च प्रातिपदिकत्वाऽभावः फलम्, ख्याप्यातिपदिकादित्याद्युद्देश्यतावच्छेदकत्वेन तत्स्वरूपज्ञानात्। ननु प्रतिसाद्ये 'परश्चे'त्युभयथा प्रकृतिशब्दयोरविशेषाऽनुवादेऽपि सन्निधानात्सनादेरेव परे भवन्त्वित्यत आह—न चेति। 'गुपः' इति शेषः। समासे इति। नित्यसमासे इत्यर्थः। लौकिके प्रयोगे पौर्वापर्यस्य नियमाऽभावादुपाधेरपि परत्वाऽभाव इत्यन्वयः। तत्र हेतुमाह—स्थितस्यैवेति। तदनूद्य साधुत्वस्यैव विधेयत्वमिति भावः। विधायकत्वाऽभावादिति। परत्वादिविधायकत्वाऽभावादित्यर्थः।

तद्बोधकत्वेऽप्याह—अर्थस्य चेति। यथास्वमिति। तेषामनवकाशत्वेन बाधकत्वमिति भावः ॥ पर्यायेणेति। यौगपद्ये हि विरोध इति भावः। सन्नादीनां परत्वं चेद्वचनेनैव सूत्रोपात्तानां सनिन्नादेर्विभक्तिविपरिणामादिनाऽर्थान्तरवर्णनमनुपपन्नमित्यत आह—शब्दान्तरापेक्षमिति। प्रकृत्यपेक्षं त्विति। तासां पञ्चम्यन्तत्वादिति भावः।

ननु सनादीनामपि 'प्रातिपदिका'दिति निर्दिश्यत्वात् प्रत्ययसंज्ञाया 'परश्चे'त्यस्य प्राप्तौ कथमुपसर्जनं पूर्वनिपातेनेत्यावकाशमत आह—भोक्तुं व्रजतीति। अत

अत उत्तरं पठति—॥*॥ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः ॥*॥ अधिकारेणाऽपि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेध ।अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ प्रत्ययसंज्ञा कस्मान्न भवति ? ॥ ॥*॥ निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि ॥*॥निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति॥

प्र.] स तु 'व्रजति भोक्तु'मिति । उपाधिवाचिनोऽपि प्रयोगार्ऽनियमे प्राप्ते 'परश्चे'ति नियम स्यात् । 'य प्रत्ययस्स पर' इति परिभाषणात् । आद्युदात्तत्वमपि स्वरान्तर बाधित्वा स्यात् । अत्रसज्ञेति । ननु विधानप्रतिबद्धाऽत्रसंज्ञा, न चेह प्रकृत्यादयो विधीयन्ते । नैष दोष । सिद्धशब्दाऽन्वाख्यानात् तेषामपि शास्त्रेण विधानात्। परत्वेन च पूर्वस्याऽवधेराक्षेपात्। ननु पूर्वाक्षेपेऽपि परत्वे तस्माद्विधिर्नास्तीत्यत्रसज्ञा न भविष्यतीति चिन्त्यमेतत् ॥ निमित्तस्येति । प्रकृत्यादीना भूतविभक्त्या निर्देशात्सनाद्युत्पत्तौ निमित्तभावेनोपादानात्परार्थ्यात्स्वसस्कार प्रति प्रयोज

उ.] समासाऽभावेनोपपदस्य परत्वं स्यादिति भाव ।अर्थं परत्वाऽसम्भवस्योक्तत्वादाह उपाधिवाचिन इति।स्वरान्तरमिति। योऽनवकाशस्तद्विषये मा भूत्, सावकाशविषये तु स्यादिति तात्पर्यम् । न च प्रातिपदिकाद्धातोरित्यनेन सर्वप्रकृतिनिर्देशात्तदशे सावकाशविषयो दुर्लभ इति वाच्यं, स्वरान्तरगत नित्यत्व बाधित्वा पर्याय स्यादित्यत्र तात्पर्यात् । सिद्धेति । 'टकि लोप' इत्यनुवादेन ढको विध्यनुमानवदिहाप्यनुवादेनैव प्रकृतिविधानाऽनुमानमिति भाव । ननु कुतश्चित्पूर्वस्माद्विधिर्नास्तीति कथमत्रत्वमत आह—आक्षेपादिति। तथा च पूर्वोद्देशेन परत्वेन तेश विधानमिति भाव । पूर्वाक्षेपेऽपि परत्वे इति । अनुमितो विधि सामान्यत एव, पूर्वोद्देशेन तु परत्वमात्रविधानम् । वस्तुतो ढगादेर्मानान्तरेणाऽसिद्ध्या भवतु तद्विध्यनुमानम्, प्रकृत्यादीनान्तु मानान्तरेण सिद्धतया तद्विध्यनुमानमेव दुर्लभमिति भाव । चिन्त्यमेतदिति । 'इत्यादय प्रत्ययसज्ञा भवन्ति, ते च प्रत्ययेभ्य शब्दान्तरेभ्यो वा परे भवन्ती'त्यत्र परशब्दस्य धर्मिप्रधानतया परत्वविशिष्टाना तेषामेव विधान शास्त्रम् । प्राप्ताऽव्याप्तविवेकन्यायेन तु देशमात्रविधानम् । अतएव सर्वोऽपि विशिष्टविधिरेव, प्राप्ताऽप्राप्तन्यायेन तु कस्य चिद्गुणविधित्वमिति मीमांसका. । न हि 'यस्मात्प्रत्ययविधि'रित्यत्र प्राप्ताऽव्याप्तविवेकन्यायलब्धविधेयत्वमेव गृह्यत इत्यत्र मानमस्तीत्यत्रसंज्ञा प्रयोजनमेव । ननु विधिग्रहणसामर्थ्यान्न्यायलब्धविधेयत्वस्य ग्रह । 'स्त्री ईयनी'त्यादावविदग्निहृपितानात्वस्य दुर्वारत्वेन व्याप्त्यर्थोऽभावादिति चेत्र, 'भवत्ती'त्यादौ दीर्घवारणाय विधिग्रहणस्यावश्यकत्वादित्याशयात् ॥ भूतविभक्त्या—सिद्धत्वबोधकविभक्त्या। ननु भित्ते वास्ये स्वसस्कार प्रति प्रयोज-

१ 'अनभिव्यक्तो' पा० ।

तद्यथा बहुष्वासीनेषु कश्चित्कं चित्पृच्छति–कतरो देवदत्तः कतमो यज्ञदत्त इति[1]। स तस्मायाचष्टे–'योऽश्वे यः पीठे' [इति। योऽश्वे यः पीठे] इत्युक्ते निमित्तस्य निमित्तिकार्यार्थत्वादध्यवस्यति–'अयं देवदत्तोऽयं यज्ञदत्त' इति। नेदानीमश्वस्य पीठस्य वा 'देवदत्त' इति संज्ञा भवति ॥ [किं पुनर्निमित्तं को वा निमित्ती ? ॥ निर्ज्ञातोऽर्थो निमित्तमनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययोऽनिर्ज्ञातः, प्रकृत्युपपदोपाधयो निर्ज्ञाता ॥ क ?॥ धातूपदेशे प्रातिपदिकोपदेशे च। ते निर्ज्ञाता निमित्तत्वेनोपादीयन्ते।] ॥*॥ प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् ॥*॥ अथवा [प्रधाने कार्यसंप्रत्ययात्सिद्धमेतत्।][3]। प्रधाने कार्यसंप्रत्ययो भवति ॥ किं च प्रधानम् ? ॥ प्रत्ययः ॥ तद्यथा बहुषु यास्तु कश्चित्कं चित् पृच्छति–'को यातो'ति ?॥ स आह 'राजे'ति। 'राजे'त्युक्ते प्रधाने कार्यसंप्रत्ययाच्च पृच्छति यश्चाचष्टे[6] उभयोः संप्रत्ययो भवति ॥ किं कृतं पुनः प्राधान्यम् ? ॥ अर्थकृतम् ॥ यथा पुनर्लोकेऽर्थकृतं प्राधान्यं, शब्दस्येदानीं किंकृतं

प्र.] कतर इति। 'किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति सूत्रद्वये उपाधिप्रत्याख्यानाद्बहूनामेकस्य निर्धारणे कतरशब्दः प्रयुक्तः॥

प्रधान इति। प्रत्ययसंज्ञा स्वनिरूपप्रकृतये प्रधानतयेष्यते न तु पारतन्त्र्याद-प्रधानमित्यर्थः। किंकृतमिति। भवतु राज्ञः प्राधान्यं तदधीनस्थितित्वादन्येषाम्, इह तु कथमिति प्रश्नः। अर्थकृतमिति। प्रयोजनकृतमित्यर्थः। यस्याऽपूर्वं

उ.] उपायभावेनेति। प्रत्यासन्नप्रकृत्यादिसम्बन्धविभागमुपायत्वेनाश्रित्याऽन्वाख्यानादित्यर्थः। तदनुगुणेति। तत्र निमित्तित्वाऽनुगुणा प्रथमा, अन्या प्रकारेण निमित्तत्वाऽनुगुणा इत्याहुः। बहुषु निर्धारणे डतरोऽनुपपन्न इत्यत आह–किं यदिति ॥ 'प्रधाने कार्य्यसम्प्रत्ययादि'त्यस्य 'निमित्तिकार्यार्थत्वा'दित्यनेन पौनरुक्त्यमाशङ्क्याह–प्रत्ययसंज्ञेति। पूर्वं प्रत्ययसंज्ञाया आकाङ्क्षाभावात् प्रकृत्यादीनां निरपेक्षत्वात्तत्राऽभाव इत्युक्तम्। इदानीन्तु प्रत्ययसंज्ञाया अपि गुणभूतेभ्य आकाङ्क्षा नास्तीति प्रतिपाद्यत इति विशेष इति भावः। वाक्यभेदभिया तैस्तस्या असम्बन्ध इति प्रागुक्तम्। अनेन तु तत्राऽन्वयप्रसक्त्यभाव एवोच्यत इति विशेष इति तत्त्वम्। भाष्ये—को यातीति। डतरस्य वैकल्पिकत्वात्तदप्रयोगः। उभयोः सम्प्रत्ययो भवतीति। तत्र कथन्तु सम्प्रत्ययः–तन्मूलकप्रयोगः। तथाऽत्रापि आचार्यस्तेनैव तात्पर्येण प्रयुक्तवान्, शिष्याणाञ्च तथैव बोध इति भावः। प्रयोजनकृतमिति। प्रयोजकत्वकृतं। प्रेरणाकृतमित्यर्थः। भाष्ये—यथा पुनरित्यव्ययम्–अस्तु पुनरित्यर्थे। किं कृतमिति।

१ 'कतमो देवदत्त' 'कतरो यज्ञदत्त' पा०। २ 'स आह' पा०। ३ अयं पाठो न सार्वत्रिकः। ४ 'नाश्रीयते'। ५ 'प्रधानस्य कार्ये संप्र'। ६ 'यश्च कथयति' पा०।

प्राधान्यम् ? ॥*॥ तदन्याऽपूर्वोपदेशः प्राधान्यम् ॥*॥ यस्याऽपूर्वोपदेशः स प्रधानम् । प्रकृत्युपपदोपाधयश्चोपदिष्टाः ॥ क ? ॥ धातूपदेशे प्रातिपदिकोपदेशे च ॥ यद्येव निमित्तस्य निमित्तिकार्यार्थत्वादयोऽपि प्रधाने कार्यमप्रत्ययान्प्रकृत्युपपदोपाधीना न भवति, विकारागमानां तु प्राप्नोति । 'हनस्त च' । 'त्रपुजतुनोः षुक्' [ इति ] । एतेषां ह्यपूर्वोपदेशः प्राधान्यं, निमित्तिनश्चैते ॥*॥ विकारागमेषु च परविज्ञानात् ॥*॥ विकारागमेषु च परविज्ञाना

प्र ]इति । तदर्थत्वादन्यथा तस्यैव प्राधान्यमित्यर्थः ॥ यद्येवेति । ननु ये तावत्प्रकृतेर्विकारागमास्ते प्रकृत्यनुप्रवेशात्प्रकृतिवत्सञ्ज्ञया न सम्भन्त्स्यन्ते । ये तु प्रत्ययस्य ते तद्ग्रहणेन गृह्यन्त एवेति नास्त्यनिष्टप्रसङ्गः । नैतदस्ति । प्रकृतिविकारागमानां तत्सम्बन्धित्वेऽपि प्रयोजकत्वाप्रधानत्वाच्च स्यादेव प्रत्ययसञ्ज्ञा । प्रत्ययसम्बन्धिनामपि तदवयवत्वे सिद्धे पृथक् प्रत्ययसञ्ज्ञा स्यादेव, योग्यतासम्भवात् ॥ विकारागमेष्विति । 'य परः स प्रत्ययो, न च विकारागमाः परे । तेन ते प्रत्ययसञ्ज्ञा न भविष्यन्ती'त्येव न व्याख्येयम् , नहि परत्वनिमित्ता प्रत्ययसञ्ज्ञा, अपि तु प्रत्ययसञ्ज्ञानिमित्तं परत्वम् । तथा च परत्वाऽभावेऽपि श्यन्हुतश्चा प्रत्ययसञ्ज्ञा भवति । तस्मादेवं व्याख्यायते–प्रयोजनाऽभावाद्विकारागमानां प्रत्ययसञ्ज्ञा न भवति । यद्यपि परविज्ञानं प्रत्ययसञ्ज्ञाफलम्, तच्च तेषां न सम्भवति । षष्ठ्याः स्थानसम्बन्धस्याऽवयवसम्बन्धस्य च प्रतिपादनात् । आगमानां चाऽनुदात्तत्वेन भवितव्यमित्याद्युदात्तत्वाऽभावः । विकाराणां ये ऽनन्त्यास्ते न स्वरभाजः , ये तु साऽन्त्यास्ते प्रकृतिशक्त्यान्तरङ्गत्वात्स्थानिस्वरयुक्ताः । अदसज्ञाऽपि तन्निमित्ताऽन्यस्य न प्राप्नोति । सा

उ ]प्रेरकत्वाऽभावादिति भावः । अपूर्वोपदेशमात्रेण कथं प्राधान्यमत आह–तदर्थत्वादिति । तन्निष्पादकत्वादित्यर्थः ॥ प्रयोजकत्वादिति । प्रयुज्यत इति प्रयोजकः – प्रयोज्यः ,तत्त्वान्निमित्तित्वादित्यर्थः । प्रधानत्वाच्चेति । अपूर्वोपदेशादित्यर्थः । योग्यतासम्भवादिति । समानविभक्तिकत्वरूपयोग्यतासम्भवादित्यर्थः ॥ नहि परत्वनिमित्तेति । तद्व्याप्येत्यर्थः । तथा हि सति व्यापकाऽभावेन व्याप्याऽभावः सिद्ध्येदिति भावः । अपि तु प्रत्ययसञ्ज्ञानिमित्तं परत्वमिति । इदं चिन्त्यम् , 'राजपुरुष' इत्यादौ प्रत्ययत्वाऽभावेऽपि पुरुषादिपदस्य परत्वदर्शनात् । श्यन्हुतश्चामिति । श्नुश्च प्रत्ययत्वफलं प्रत्ययस्याद्युदात्तत्वम् । परविज्ञानमिति । परश्चेति परिभाषा । प्रत्ययसञ्ज्ञा चाऽस्या लिङ्गम् । प्रत्ययसञ्ज्ञकः परो भवतीत्यर्थ इति भावः । अन्तरङ्गत्वात्स्थानी-

१ 'निर्दिष्ट' पा० । २ 'यद्यव' पा० । ३ 'यद्वा' पा० । ४ इदं क्वचिन्न । ५ 'ह्यपूर्व उपदेशः निमित्तिनश्चैते, प्राधान्यञ्च' । 'ह्यपूर्वश्चैवोपदेशः निमित्तिनश्चैते' पा० । ६ च क्वचिन्न । ७ 'आदि'रिति क्वचिन् ।

प्रत्ययसंज्ञा न भविष्यति । 'प्रत्ययः परो भवती'त्युच्यते न च विकारागमाः परे सम्भवन्ति ॥ किं पुनः कारणं समानेऽपूर्वोपदेशे प्रत्ययः परो, विकारागमा न परे ? ॥॥*॥ षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् ॥*॥ षष्ठीनिर्दिष्टं विकारागमयुक्तं [भवति] । पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते ॥ ॥*॥ प्रत्ययविधानानुपपत्तिस्तु ॥*॥ प्रत्ययविधिस्तु नोपपद्यते ॥ क ? ॥ यत्र विकारागमा

---

प्र.] हि प्रत्ययविधानपरत्वेनैतद्वा । प्रयोजनैकदेशे तु श्नम आगमत्वेऽपि शकारस्येत्संज्ञार्थं प्रत्ययसंज्ञा प्रवर्तत एव । परत्वविज्ञानादिति । 'विभाषा गुणे' इति हेतौ पञ्चमी । फलमपि प्रयोजनत्वाद्धेतुरित्युच्यते, यथा 'ऽध्ययनेन वसती'ति । तत्रायमर्थः — प्रत्ययसंज्ञायाः परत्वं फलं तच्चाऽत्र न सम्भवतीति प्रत्ययसंज्ञा प्रयोजनाऽभावान्न भविष्यति ॥ किं पुनरिति । परत्वमेव भवतु प्रत्ययसंज्ञाप्रयोजनमिति भावः ॥

षष्ठीनिर्दिष्टस्येति । षष्ठ्या च पूर्वोदितस्य सम्बन्धस्य प्रतिपादनाद्विरोधः परत्वा-ऽभाव इत्यर्थः । पञ्चमीनिर्दिष्टाच्चेति । पञ्चमीनिर्देशे पर्यायेण पूर्वपरत्वतो प्राप्तयो 'परश्चे'त्यनेन परत्वं नियम्यत इति नास्ति कश्चिद्विरोध इत्यर्थः ॥ प्रत्ययेति । षष्ठीनिर्देशेष्विति भावः । क्वेति । 'गारोट'मित्यादावानन्तर्यसम्बन्धे षष्ठीविधानादुप-

---

उ.] ति । आन्तरतम्येनेत्यर्थः । आद्युदात्तत्वं तु तस्यादौ चरितार्थमिति भावः । सा हीति । प्रत्ययविधानेन परत्वेन च प्रतिबद्धेत्यर्थः । शकारस्येत्संज्ञार्थमिति । अत एव 'तृणह' इत्यादिनिर्देशाः सङ्गच्छन्ते । श्नम शकारस्तु 'श्नसोरल्लोपः' इत्यत्र विशेषणार्थ इति भावः । नन्वेवमपरत्वविज्ञानादिति पञ्चम्यनुपपन्ना, हेतुत्वाऽभावादित आह—फलमपीति । भाष्ये 'न च विकारागमाः परे' इत्येव पाठः, तदुत्तरं 'सम्भवन्ती'त्यपाठ इत्याशयः । अत्राहुः—'प्रत्यय' इत्यादीनां त्रयाणामप्यधिकारत्वेन प्रतिसूत्रमुपस्थितावेकवाक्यतया युगपदेव त्रयाणां विधानस्य न्याय्यत्वेन नाऽन्योऽन्यं प्रत्यन्योऽन्यस्योद्देश्यता न्याय्येति कथं प्रत्ययसंज्ञायाः परत्वं फलं, कथं वाऽऽद्युदात्तत्वमिति । अत एव 'लुटः प्रथमस्ये'त्यादिसूत्रस्थभाष्याऽविरोधः । तस्मादयमर्थः—"स्थानषष्ठ्यादिनिर्देशादेशागमानां विकारादीनामभावेन 'परः' इत्यस्याऽनन्वये सन्नियोगशिष्टन्यायेन 'प्रत्यय' इत्यादीनामप्यसंबन्धः" इति । 'परविज्ञाना'दित्यस्य तत्सन्नियोगशिष्टत्वादित्यर्थः । क्वचित्तु 'तृणह इ'मित्यादिनिर्देशान्न श्नमश्चेति ज्ञापकाच्च सन्नियोगशिष्टन्यायस्याऽनित्यत्वेन प्रवर्तत एव संज्ञेति दिक् ॥ एतदेव ध्वनयन् विकारागमेषु परश्चेत्यस्याऽप्रवृत्तिं प्रश्नमुखेनोपपादयति भाष्ये—किम्पुनरिति ॥

पूर्वोदितस्येति । स्थानसम्बन्धस्याऽवयवसंबन्धस्य चेत्यर्थः ॥ आनन्तर्यसंबन्धे

---

१ 'न विकारागमाः परे' पा० । २ च क्वचिन्न । ३ इदं क्वचिन्न ।
४ 'प्रयोजनाऽभावे तु' पा० । ५ 'एवे'ति क्वचिन्न । ६ 'पूर्वपरयोः' पा० ।

निर्दिश्यन्ते। 'हनस्त च' 'त्रपुजतुनोः षुगिति'॥ किं पुनः कारणं न सिध्यति?॥ विकारागमयुक्तत्वादपञ्चमीनिर्दिष्टत्वाच्च। ॥*॥ तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥*॥ तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः ॥ न कर्तव्यः । इह तावद्धनस्त चेति,—'धातो'रिति वर्तते। इह 'त्रपुजतुनोः षुगिति,—'प्रातिपदिका'दिति वर्तते ॥ यद्येवं 'हनस्त च—धातोः क्यब्भवती'ति धातुमात्रात्क्यप् प्राप्नोति ॥

नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'न धातुमात्रात्क्यब्भवती'ति यदयमेतिस्तुशास्वृदृजुषः क्यबिति परिगणनं करोति ॥ अथ वा हन्तिमेवात्र धातुग्रहणेनाभिसम्भन्त्स्यामः—'हनस्तो भवति धातोः क्यब्भवती'ति ॥ कस्मात्?॥ हन्तेरिति ॥*॥ अर्थाश्रयत्वाद्वा ॥*॥ अथ वा—अर्थाश्रय प्रत्ययविधिः । यस्तमर्थं सम्प्रत्याययति स प्रत्ययः ॥ किं वक्तव्यमेतत्?॥ न हि ॥ कथमनुच्यमानं गंस्यते?। 'प्रत्यय' इति महती संज्ञा क्रियते । संज्ञा च नाम

प्र.] यत एव प्रत्ययविधिरिति प्रश्नः । हनस्त चेति । श्रुतत्वेन स्थान्यादेशयोरागमागमिनोश्च सम्बन्धप्रतिपादने वाक्यस्योपयोगाद्वाक्यान्तराऽभावाच्च प्रत्ययविधिर्न प्रकल्पत इत्यर्थः ॥ इह तावदिति । प्रकृतिग्रहणाऽनुवृत्तिसामर्थ्यात्प्रत्ययोऽपि विधास्यते, निराकाङ्क्षा इत्यर्थः ॥ यद्येवमिति । हन्तरादेशविधानुपयोगाद्विविभक्तित्वाच्च धातोरविशेषितत्वादिति भावः ॥ अथवेति । पूर्वं लिङ्गेन धातुश्रुतेर्हन्त्यनुपसंहृता, इदानीं वाक्यभेदेन सन्निधानाद्धन्तिस्तकारसम्बन्धं च प्रतिपद्यन् धातुं विशिनष्टीत्युच्यते ॥ अर्थाश्रयत्वाद्वेति । अन्वर्थसंज्ञाश्रयेणाऽर्थवत् संज्ञाविधानाद्विकारागमानामाऽनर्थकत्वात्प्रत्ययसंज्ञा न भवतीत्यर्थः । किं वक्तव्यमिति । पूर्वोपात्तार्थपरित्यागेन स्वरूपेणैव संज्ञान्वसंज्ञाशब्दा अनुभवन्तीति प्रत्यायकः प्रत्यय इत्येव वक्तव्यमिति मत्वा प्रश्नः । महतीति । महत्त्वात् प्रत्ययशब्दस्याऽऽवृत्तिरनुमीयते । तेन

उ.] इति । 'धातो'रिति पञ्चमीनिर्देशेन परविधानमुपपद्यत इति भावः । ननु 'धातो'रित्यनुवृत्त्या क्यपोऽनुवृत्त्या च वाक्यभेदेन प्रत्ययस्याऽपि विधानं स्यादत आह—श्रुतयोरेवेति ॥ नन्वनुवृत्तप्रकृतेरपि विभक्तिविपरिणामेन पञ्चम्यन्तविशेषणतया कथं प्रत्ययविधिरत आह—प्रकृतिप्रत्ययेति ॥ ननु हन्तिना धातुविशेषणात्कथं धातुमात्रप्रसङ्गोऽत आह—हन्तेरिति ॥ भाष्ये—य स्वमर्थमिति। प्रत्यायकत्वञ्च शब्दस्य स्वार्थविषयमेव गृह्यते, योग्यत्वादित्यर्थः । पूर्वोपात्तेति । यौगिकार्थस्य शब्दस्य

१ 'दिश्यन्ते' पा० । २ 'तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥ न तर्हि पञ्चमीनिर्देशः कर्तव्यः' इति तु गौडाः पठन्ति । ३ इदं क्वचिन्न ।

४ 'हन्तिरेवाऽत्र' पा० । ५ 'सम्भन्त्स्यते' पा० । ६ 'हन्तेस्तो' पा० । ७ 'य स्वमर्थं' पा० । ८ 'प्रत्या- ययति' पा० । ९ 'सा हि' पा० ।

श्लो न लघीय ॥ कुत एतत् ? ॥ लघ्वर्थं हि सञ्ज्ञाकरणम् । तत्र महत्याः सञ्ज्ञाया करण एतत्प्रयोजनम्–अन्वर्थसञ्ज्ञा यथा विज्ञायेत–'प्रत्याययतीति प्रत्यय' ॥ यदि प्रत्याययतीति प्रत्ययोऽविकादीनां प्रत्ययसञ्ज्ञा न प्राप्नोति, नहि ते किंचित्प्रत्याययन्ति ॥ एव तर्हि प्रत्याय्यते इति प्रत्यय ॥

[यदि प्रत्याय्यते इति प्रत्यय इति–] एवमपि सनादीनां न प्राप्नोति ॥ एवं तर्हि उभयसाधनोऽयं, कर्तृसाधन कर्मसाधनश्च ॥ एवमपि कुत एतत् समानेऽपूर्वोपदेशे अप्युप जातुपमित्यत्राऽकारस्समर्थं सप्रत्याययति न पुन पकार इति? ॥

प्र ]य प्रत्याययत स प्रत्यय । महत्त्वसूचित प्रकारान्तरमपि यद्भवान् तत्सर्वादिसूत्रे व्याख्यात तत एवावधारणीयम् ॥ नहि त इति । अन्वयव्यतिरेकाभ्या वादीना वाच्योऽर्थो नावधार्यते । तदभावेऽपि केवलया एव प्रकृतेस्तदर्थाऽवगमात् । नाऽपि तत्वादिवत्कश्चिद्द्योत्योऽर्थ इति भाव । यदप्युच्यते–'अनिर्दिष्टाऽर्था प्रत्यया स्वार्थे भवन्तीति प्रकृत्यर्थ एव तेषामर्थ' इति । तदपि कल्पनामात्रम् । सत्यर्थवत्त्वे प्रत्यय सञ्ज्ञया भाव्यमित्यभिहिते तदभावे स्वार्थाऽवगमादर्थवत्त्व वादीना नोपपद्यत इत्यु क्तस्य दुरुत्तरत्वात् ॥ प्रत्याय्यत इति । अभिधेयधर्मस्याऽभिधाने उपचारादेवमुक्तम् । अयमत्रार्थ –यस्यार्थं प्रकृत्या प्रत्याय्यते स प्रत्याय्यमानार्थत्वात्प्रत्याय्यमान स्वार्थिक प्रत्ययसञ्ज्ञो भवति ॥ एवमपीति । नहीच्छादावर्थे विधीयमाना सनादय प्रकृत्या प्रत्याय्यमानाऽर्था इति भाव । यो गुपादिभ्य स प्रकृत्या प्रत्याय्यमानाऽर्थ इतीच्छा सनेवात्राभिप्रेत ॥एवन्तर्हीति। एक एव शब्दोऽनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्त द्वयोऽधिक्रियते । तत्र यथासम्भव निमित्ताश्रयणेन सनादीना वादीना च प्रत्यय संज्ञा प्रवर्त्तते । ण्यन्तस्य निपातनादचि णिलुक् ॥ एवमपीति । आगमस्याऽर्थवत्ता

उ ]सञ्ज्ञात्वेन विनियोगकाले शब्दस्यैव प्रवृत्तिनिमित्तत्वाऽङ्गीकारेण पूर्वोपात्तयौगिकार्थ त्यागादित्यर्थ । सञ्ज्ञाना कृत्रिमत्वात्तस्य पूर्वोपात्त च बोध्यम् । प्रकारान्तरम्–अन्यत्र शब्दस्य प्रवृत्तिनिमित्तत्वेऽपि महासञ्ज्ञाविषये तादृशार्थवच्छब्दस्यैव तत्त्व मित्यादि ॥ दुरुत्तरत्वादिति । अन्वयव्यतिरेकाभ्या वाच्यद्योत्याऽर्थाऽभावनिश्चयेन तेषामर्थवत्त्वाऽभावे शङ्किते 'प्रकृत्यर्थ एवाऽस्याऽप्यर्थ' इत्यसदुत्तरमित्यर्थ । स्वार्थे इत्यस्य च-अर्थपरित्यागे एव तात्पर्यमिति भाव ॥ वादीना केनापि प्रत्याय्यमानत्वा भावात् कर्मव्युत्पत्तावपि कथ तेषा प्रत्ययत्वम्, अर्थस्यैव तु तत्प्राप्नोतीत्यत आह–अभिधेयेति। अभिधान–शब्द ॥ एकस्य शब्दस्य कथमुभयसाधनत्वमित्यत आह–एक एवेति । निपातनादिति । वस्तुतोऽन्तर्भावितण्यर्थात्प्रत्यय इति चकुसुचि-

१ 'प्रत्यय इति' पा० । २ इद क्वचिन्न । ३ 'यदुच्यते' पा० । ४ 'प्यर्थावगमा' पा०। ५,'प्राप्यमान पा०। ६ 'इत्यादि ' पा०। ७ 'णेर्लुक्' पा०।

अन्यत्राऽप्यकारेण तस्यार्थस्य वचनान्मन्यामहे—अकारस्तमर्थं सम्प्रत्याययति न पुनः पकार इति ॥ क्वाऽन्यत्र ? ॥ 'बिल्वादिभ्योऽण्' बैल्व ॥ [प्रत्यय]।

परश्च ॥ ३।१।२ ॥

किमर्थमिदमुच्यते ?॥ परो यथा स्यात्पूर्वो मा भूदिति ॥ नैतदस्ति प्रयोजनम्, यमिच्छति पूर्वमाह तं,— 'विभाषा सुपो बहुच्पुरस्तात्तु' इति ॥ मध्ये

---

प्र ] निरासितुमुपन्यास ॥ अन्यत्रापीति । प्रत्ययस्यागममन्तरेणाऽपि प्रयोगदर्शनात्त्वाऽवगति । आगमस्य तु प्रत्ययमन्तरेण प्रयोगाऽभावादन्वयव्यतिरेकाभ्यामर्थवत्त्वं नाऽवधार्यत इत्यर्थ । [ प्रत्यय ] ॥

परश्च । किमर्थमिति । पञ्चमीनिर्देशे परशब्दाध्याहारेण पञ्चमीविधानात् परत्वं सिद्धम् । षष्ठीनिर्देशेऽपि 'गापोष्टग्'इत्यादावानन्तर्यसम्बन्धे षष्ठीविज्ञानादिति भाव ॥ पर इति । पूर्वशब्दाध्याहारेणाऽपि पञ्चमीविधानात्पूर्वत्वमपि स्यादिति नियमार्थं परवचनम् । तथाऽऽनन्तर्यस्य पूर्वत्वेऽपि भावात्षष्ठीनिर्देशेऽपि नियमार्थमित्यर्थ ॥ यमिच्छतीति । 'बहुच पुरस्तात्तद्धितो नाऽन्य प्रत्यय' इति बहुचि पूर्वदेशस्य नियतत्वादन्य प्रत्यय पर एव भविष्यतीत्यर्थ ॥ मध्ये तर्हीति । पश्री

---

उ ] तम् ॥ प्रत्ययस्येति । अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवाऽर्थवत्त्वं नाऽऽगमानामिति भाव । यत्तु नभ विरहाद्यादेशानामपि न स्वीयार्थप्रत्यायकता, किन्तु स्थान्यर्थप्रत्यायकत्वम्। अत एव कोशादौ तेषां पृथगर्थाऽनिर्देश । अत एव च नभ्यशब्दादपि नाभिरूपप्रकारकसन्दर्शनार्थो 'नाभिहित' इति, न तु कदाचिदपि 'नभहित' इति। येऽपि शास्त्राऽनभिज्ञास्तेऽपि वृद्धव्यवहारात्तदर्थं प्रतियन्ति । एतदर्थमेव भाष्ये 'स्वमर्थ'मित्यत्र 'स्व'मितिपदोपादानम् । स्थानिनो नष्टत्वादन्येन प्रत्याय्यमानार्थत्वेऽपि नेति दिक् । [ प्रत्यय ] ॥

परश्च । पञ्चमीति । परशब्दाऽध्याहार एव व्याख्यास्यते न तु पूर्वशब्दाध्याहार । 'गापोष्ट'गित्यादावपि षष्ठ्या आनन्तर्यार्थत्वेन 'धातो'रिति पञ्चम्या पूर्ववदेव परशब्दाध्याहार इति भाव । परशब्दाध्याहारेणेति । तदर्थघटितवाक्यार्थेऽस्यैव देशस्य प्रतीतिस्वीकारेणेत्यर्थ । एतेन 'पूर्वशब्दाध्याहारेणे'त्यपि व्याख्येयम् ॥ पूर्वशब्देति । व्याख्यानं दुर्ज्ञेयमिति भाव । आनन्तर्यस्येति । 'हलोऽनन्तरा' इत्यादौ तस्याऽव्यवहितपर्यायत्वादित्यर्थ ॥ प्रत्ययनियमेऽन्येषामपरदेशनियमस्याऽलाभादभिमतदेशनियमं दर्शयति—बहुजेवेति ॥ पञ्चमीनिर्देशे मध्यशब्दाध्याहाराऽसम्भवादाह—षष्ठीति । 'व्रीहिशाल्योर्ढ'गित्यादौ ॥ 'अव्ययसर्वनाम्ना'मित्यादौ 'प्राक्टे'रित्युपादान

---

१ 'प्रत्यायनात्' पा० । २ 'तदर्थं' पा० । ३ 'प्रत्याय' पा० । ४ इदं क्वचिन्न । ५ 'परोऽय' पा० । ६ 'तु' क्वचिन्न ।

तर्हि मा भूदिति ॥ मध्येऽपि यमिच्छयाह तम्–'अव्ययसर्वनाम्नामकच्प्राक् टे'रिति। य इदानीमितोऽन्य प्रत्यय शेष सोऽन्तरेण वचन पर एव भविष्यतीति नार्थ परवचनेन ॥ एवमपि येषामेव प्रत्ययाना देशो नियम्यते त एव नियतदेशा स्युर्य इदानीमनियतदेशा स कदाचित्पूर्व, कदा चित्पर, कदा चिन्मध्ये स्यात्। तद्यथा मातुर्वंस कदा चिदग्रत कदा चित्पृष्ठत कदा चित्पार्श्वतो भवति, पर एव यथा स्यादित्येवमर्थं परवचनम् ॥*॥परवचननन

प्र ]निर्दिष्टपु मध्यशब्दाध्याहारेणापि षष्ठीविधान स्यादिति भाव ॥मध्येऽपीति।'अव्ययसर्वनाम्ना'मिति मध्यशब्दाध्याहारेण षष्ठीविधानादकच् प्राप्ते सिद्ध एवति 'प्राक्टे'रिति नियमार्थम्– अत्र नव प्रवृत्तिमन्ये भवति नाऽन्य' इति । मध्यमात्रपरिग्रहेण च नियमो विज्ञायते न लस्तेव प्राक् टेरित्यव मध्यविशेषाश्रयण। अन्यथा मध्या ऽन्तरे प्रत्ययान्तर स्यात्, मध्यविशेषे तु यन्मध्यसामान्यमस्ति तदाश्रयण नियमे विज्ञायमाने नाऽस्तिदाप ॥ एवमपीति। बहुचकचोर्विषयतया प्राधान्यात्तावेव दशविशेषे नियम्येयाताम् –'पुरस्तादेव बहुच्' 'प्राक् टरेवाऽक'नित्यवमिति भाव । देशो नियम्यत इति।प्रत्ययनियमेऽप्यनियतदेशप्रसङ्गे विशिष्टदशप्रतिपादनमेव'देशनियम' इत्यभिप्रत्यैनदुक्तम् । मातुर्वंस इति । अनेन प्रकृते कार्यशब्ददर्शने मातृस्थानीयत्वमुच्यते॥ परवचनमिति । 'तस्मादित्युत्तरस्य'त्यनेनैव नियमस्य सिद्धत्वादिति

उ ]विना टे प्राग्विधेरसिद्धे कथ नियमोऽत आह—अव्ययेति । मध्यश्च तत्र निप्राप्त एव प्राप्तो, व्याख्यानादित्यभिमान । केचित्तु 'प्राक्टे'रित्यावर्त्य नियमो व्याख्येय इत्याहु । 'प्राक्टे'रित्युपादानात्कथ मध्यमात्राऽपेक्षो नियमोऽत आह–मध्यमात्रेति । मध्यान्तरे इति । श्रीहिरण्यदे रेफैकारयोरीकारहकारयोर्मध्ये च स्यादिति भाव ।सामान्यनियमाश्रयणे तदुपस्थितिबीजमाह–यन्मध्यसामान्यमिति ॥ नन्वत्र देशनियमे बहुजादीना नियतदशत्व न स्यात्, किंच देशनियमाऽसम्भव, प्राधान्येन प्रत्ययनियमस्यैव युक्तत्वादित्यभिप्रेत्य भाष्ये–एवमपीति । तदाशयमाह–बहुजकचोरिति । न चेव 'देशो नियम्यत' इति भाष्यमनुपपन्नमत आह–प्रत्ययनियमे पीति । ननु देशनियमेऽप्रधानसङ्कोच, प्रत्ययनियमे प्रधानसङ्कोच तत्र प्रधानसङ्कोचाऽपेक्षयाऽप्रधानसङ्कोचस्य न्याय्यत्वेन देशनियम एवोचित इति चेन्न, 'आगन्तूनामन्ते निवेश' इति न्यायेन तदग्र एवैवमादिनिवेशात्। 'कर्मणि द्वितीये' त्यादौ सूत्रकारस्य प्रधानसङ्कोचवत्प्रत्ययनियमे एव तात्पर्याच्च । किंच लोकेऽपि प्रधानस्य राजादेरेव स्थाननियमादिर्दृश्यते 'राज्ञाऽत्रैव स्थेय'मित्यादिप्रकारेणेति दिक् । भाष्ये—स कदाचित्पूर्व कदाचित्पर इति । प्रतिलक्ष्य लक्षणभेदादि

१ दद क्वचिन्न । २ एव क्वचिन्न । ३'कदा चित्पर कदाचित्पूर्व'। ४ 'मध्यश्च' पा०।

र्थकं पञ्चमीनिर्दिष्टाद्धि परस्य ॥*॥ परग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ [ 'पञ्चमीनिर्दिष्टाद्धि परस्य' ]। पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते । तद्यथा 'द्व्यन्तरुपसर्गेभ्योऽप ई'दिति ॥ विषम उपन्यासः । सतस्तत्र परस्य कार्यमुच्यते, इहेदानीं कस्य सतः परस्य कार्यं भवितुमर्हति ? ॥ इहापि सत एव ॥ कथम् ? ॥ परत्वं स्वाभाविकं ॥ अथ वाचनिके परत्वे सत्यर्थं स्यात्परग्रहणेन ॥ वाचनिके च नाऽर्थः । एतद्धि तस्य परस्य कार्यं यदसौ परतः स्यात् । अथ

प्र ]भावः ॥ सतस्तत्रेति । यत्र विद्यमानमेव कार्यान्तरविधानार्थं कर्थितेन निर्दिश्यते तत्र 'तस्मा'दिति परिभाषा नियमार्थाऽवतिष्ठते । अत्र तु सनाद्यो्ऽपूर्वा एवोत्पाद्यन्त इति न तस्याः परिभाषाया प्रवृत्तिरिति भावः । कस्य सत इति । असतः सनादिर्विधीयत इति भावः ॥ इहापीति । नित्याः शब्दाः प्रयोगस्थास्तत्र स्वभावत एव गुप्तादिभ्यः परस्य सनादेः साधुत्वमात्रं प्रतिपाद्यत इत्यर्थः ॥ एतद्धीति । 'तस्मादि'त्युत्तरस्ये'त्यस्य प्रदेशेष्वर्थाऽभिव्यक्तिर्भवति । ततश्च यत्र सदेव कार्यित्वेनोपादीयते तत्रोत्तरस्य कार्यं भवतीति कार्यापेक्षा सम्बन्धे षष्ठी । यत्र त्वसत एवोत्पत्तिः क्रियते तत्रोत्तरस्य भावो भवतीति भावापेक्षया कर्तृषष्ठी विज्ञायत इत्यर्थः ।

परस्य कार्यमिति । उत्पत्तिरेव कार्यमित्यर्थः । नन्वेवं सति सन्नित्यादिप्रथमानिर्देशः षष्ठीप्रकल्पने सति निरर्थकोऽकृतार्थत्वात्स्यात् । नैष दोषः । निर्देशमात्रार्था प्रथमा स्यात् । उत्तरकालं तु षष्ठी प्रकल्पते । यत्त्वन्यत्रोच्यते—'न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका' इति,—तदस्मिन् सूत्रे स्थित इति द्रष्टव्यम् । अथवेति । अनर्थं —उत्पत्तिः सनादेरनियतदेशा भवतु । पश्चात्तु सत एव परस्य यत्कर्तव्य-

उ ]त्वेनिगमनाविरहाद्वा । तस्मादिति । त प्रागधातो'रित्यादौ उत्तराऽशाविकल्पाया इव, 'परश्चे'ति कृतेऽपि व्यवहितप्रयोगवारणाय प्रकृते एवोत्तराद्यविकल्पस्य इव च सूत्राऽभावे पाक्षिकविकल्पया प्रवृत्तिरिति गूढोऽभिप्रायः ॥ उक्तमभिप्रायमजानानः शङ्कते भाष्ये—सतस्तत्रेति । कार्यशब्ददर्शनाद्भ्रमेण वैषम्यमित्याह—यत्रेति । 'उत्तरस्ये'ति षष्ठीनिर्देशादिति भावः ॥ स्वाभाविके परत्वे किं तस्मादित्युत्तरस्येत्यनेनेत्यत आह—नित्या इति ॥ नन्वस्याः पक्षे अर्थद्वयपरत्वं कथमित्यत आह-प्रदेशेष्विति । तत्र तत्रोपस्थितं भिन्नं भिन्नमेवेत्यर्थः । उत्तरस्य भावो भवतीति भाष्ये 'परतः स्या'दित्यनेन सूचितम् । 'प्रत्ययः परो भवती'त्यनेनाऽस्य समानार्थत्वादिति भावः । निर्देशेति । लुप्तनिर्देशेत्यर्थः । ननु प्रत्ययस्याऽनियतदेशत्वे पूर्वमपि प्रत्ययप्रयोगे साधुत्वं स्यादत आह—अयमर्थ इति । एतच्च परस्य सतः प्रत्ययसंज्ञाविधान-

१ 'परस्य कार्य' मित्यन्ये पठन्ति । २ 'स्वाभाविकं परत्वं' पा० । ३ 'सत्यर्थं परग्रहणेन स्यात्' पा० । ४ 'निके परत्वे च' पा० । ५ 'परस्य' । ६ 'परः' पा० ।

वा यदस्य परस्य सतः संज्ञा स्यात् ॥ यत्र तर्हि पञ्चमी नास्ति तदर्थोऽयं योगो वक्तव्यः ॥ क्व च पञ्चमी नास्ति ? ॥ यत्र विकारागमाः शिष्यन्ते ॥ क्व च विकारागमाः शिष्यन्ते ?॥ 'हनस्त च' 'ग्रपुजनुनो' युगिति ॥

*॥विकारागमेष्वपि चोक्तम् ॥*॥[विकारागमेष्वपि चोक्तम्]॥किमुक्तम्॥ प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमीनिर्देशात्सिद्ध'मिति ॥

*॥अत्यन्ताऽपरदृष्टाना वा परभूतलोपार्थम्*॥अत्यन्तापरदृष्टाना तर्हि परभूत

---

प्र.] प्रत्ययादिसंज्ञासामर्थ्यात् विधीयमानं तदन्यदेशस्य । यथोद्देशस्य च शास्त्रीय कार्यं तद्देशस्यैव साधुत्वात् प्रयोगो भविष्यतीत्यर्थः ॥ विकारागमेष्विति । तदेवेहाऽप्यनुसन्तव्यमित्यर्थः । 'गाङ्कुट'मित्यादौ 'धातो'रित्यधिकाराद्धातोः परस्मिन्भवति गायोस्त्वनन्तर इति व्यवस्थेयम् । अत्यन्तापरदृष्टाना वेति । वाशब्दस्त्वर्थे । परेण-प्रधानेन प्रत्ययेन प्रत्ययेन न दृष्टा ये क्विबादयस्तेषां नित्यशब्द-दर्शने कार्यदर्शने वा सत्ताया अभावात्तस्मादित्युत्तरस्येत्यस्योपस्थानाऽभावादनिर्देशो लोप स्यादिति परभूतलोपार्थमेतद्वचनम् । अस्मिन्हि सति क्विबादयः परभूता लुप्य-न्त इति बुद्धिरुत्पद्यते । तत्राऽग्निचिदित्यादौ प्रत्ययलक्षणेन परभूतप्रत्ययाश्रया-स्तुगादयः सिध्यन्ति न तु पूर्वभूतक्विबादिलोप इति भावः । ननु कार्यदर्शने उत्तरस्य भाव इत्येवं व्याख्यानात्परभूताः क्विबादयो भविष्यन्ति । नैतदस्ति । नहि तेषु भावबुद्धिरस्ति, लोपविधानेनाऽभावबुद्धेरुत्पादात् । स्वरूपलाभो हि भावः, नैते कदा चित्स्वरूपं लभन्ते, सदाविशेषात् लुप्यमानत्वात् । अत एवा'ऽत्यन्ताऽपरदृष्टाना'मित्युक्तम् ।

---

उ.] सामर्थ्यात्परशब्दाऽध्याहारे आवश्यकेऽन्याध्याहारे मानाऽभावाच्चाऽन्यदेशस्यस्य साधुत्वमिति भावः ।अनियतदेशा भवन्त्विति अभ्युपगमवादेनोक्तम् । भवन्त्विति भवन्त्विति प्रसज्यतामिति वाऽर्थः । परश्चेति सूत्राऽकरणलाघवाऽनुरोधात्-प्रत्ययसंज्ञा सम्भव-त्यप्येकवाक्यत्वे वाक्यभेदेन विधेयेति तात्पर्यम् ।तदेवेति ।धातो' प्रातिपदिका-दित्याद्यनुवृत्तेस्तत पर एव भविष्यति । ततः परस्यैव वा सन्देहादित्यर्थः ॥

पूर्वम्प्रयोजनाऽनुक्तेर्वाशब्द भाष्यकृत्तदर्थे व्याचष्टे इत्याह-वेति । शास्त्रेण दृष्टानामेव लोपविधानात्कथमत्यन्ताऽपरदृष्टतेत्यत आह—परेणेति । ननु परत्वेऽप्यस्यैव प्रत्ययत्वेनाऽपृक्तत्वप्रयुक्तलोप इति पूर्वभूताना न लोपो नेति मानुमत आह-तेषामिति । ततश्च परस्य सतः प्रत्ययसंज्ञेति नियमाऽभावात्पूर्वोपजातस्यापि लोपादि सिध्यतीत्यर्थः । अनुपसंज्ञा कदाचित्प्रत्ययत्वलोऽपीति भावः । ननु पूर्वभूतेति । तथा चा'ऽग्निची'त्यपि कदाचित्स्यादिति भावः । न हि तेष्विति । एवश्चोत्तरस्येत्यनाऽसंबन्ध इति भावः । परश्चेत्यस्य करणे तु

---

१ अपि क्वचित्र ।२ इदं लुप्तं सम्प्रति । ३ 'अत्यन्ताऽपरिदृष्टानां' पा० ।

लोपार्थं परग्रहणं कर्तव्यम्। ये पुनरेऽयन्तापरदृष्टा क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यादपरभूतानां मा भूदिति ॥ किं पुनरयन्ताऽपरदृष्टानां परभूतलोपवचने प्रयोजनम्?॥ क्विति णितीति कार्याणि यथा स्युरिति ॥ एतदपि नास्ति प्रयोजनम् आचार्यप्रवृत्तिर्ज्ञापयति-'अयन्ताऽपरदृष्टा परभूता लुप्यन्त' इति,-यदयं तेषु कांश्चिदनुबन्धानासजति ॥ कथं कृत्वा ज्ञापकम्?॥ अनुबन्धासङ्ग एतत्प्रयोजनं-'क्विति णितीति कार्याणि यथा स्यु'रिति। यदि चात्रा-ऽयन्ताऽपरदृष्टाः परभूता लुप्यन्ते ततोऽनुबन्धासङ्गोऽनर्थकः स्यात्॥ ॥-॥ प्रयोगनियमार्थं वा ॥*॥ प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम्। परभूतानां प्रयोगो यथा स्यादपरभूतानां मा भूदिति ॥ अस्ति पुनः किंचिदनिष्टं दृश्यते

प्र ]केवलप्रत्ययप्रयोगवचनेन कार्यमात्रं तथाभूतस्यान्त्याऽसत्त्वमपि निर्धार्यते ॥ यदयमिति। यदि पूर्वभूता लुप्येरंस्तदाऽनुबन्धासङ्गोऽनर्थकः स्यात्, सर्वस्यानुबन्धकार्यस्य परभूतप्रत्ययाश्रयत्वात्। नन्वनियतदेशत्वेऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति के चिदाहु। तन्नयुक्तम्। एवं पक्षेऽनुबन्धासङ्गस्यानर्थक्यमभ्युपगतं स्यात्। 'स्पृशोऽनुदके' इत्यादौ च सप्तमी श्रुता, सा किं पूर्वशब्दाध्याहारेण भवत्वथ परशब्दाध्याहारेणेति सन्देहे पूर्वशब्दाध्याहारेण पञ्चम्या सत्यामानर्थक्यमेवानुबन्धासङ्गस्येति कथं परभूतलोपेऽनुबन्धासङ्गो न लिङ्गं स्यादिति भाष्यविद आहु। प्रयोगनियमार्थं वेति। पूर्वं प्रयोजनं स्थितमिति

उ ]तत्सामर्थ्यात्परत्वबुद्धिविशिष्टो बोद्ध क्विनित्यर्थ इति तात्पर्यम्। नन्वत्यन्ताऽप्रतामुपन्निलोपो वा क्रियेति विधीयते इत्यत आह-केवलमिति। प्रसक्ताऽदर्शनस्यैव लोपत्वेन प्रसक्तत्वबुद्धये उत्पत्तिबोधनमिति भावः ॥ णिकार्य-णौ। परभूतेति। 'क्विति णिति' 'पिति कृती'त्यादीनां परसप्तमीत्वादिति भावः। यदेति। यद्विपये इत्यर्थः। एकविधेने आवृत्त्या नानादेशविधाने मानाऽभावात्। युगपत्तु दिक्चतुष्टयेनाऽन्वयाऽसम्भवः। 'एवं पक्षे' इत्यस्यापि विषयविशेष इत्यर्थः। अन्यथाऽसङ्गतिः स्पष्टैव। अतएव 'स्पृश' इत्यग्रिमग्रन्थसङ्गतिः। प्रकारान्तरेण व्याख्याने तदसङ्गतिः। विषयविशेषमेवाह-स्पृश इति। अत्रैकस्य स्पृश एव लक्ष्यत्वात् लक्ष्यभेदेनापि लक्षणभेदाप्ति। एवञ्च क्वित्त्वसामर्थ्येनोत्तरस्य बोद्धो भावी भवतीत्यर्थौ वकुशस्य परग्रहणाऽभावेऽपीत्याशय ॥ भाष्ये-अपरभूतानामिति। न परभूता अपरभूता इति, न विद्यन्ते परभूता येषामिति चाऽर्थ। तेन केवलप्रत्ययानां केवलप्रकृतीनाञ्चेत्यर्थ। तदेतदुक्तम्-अप्रत्ययिकेत्यादिना भाष्ये। प्रकृतिरर्थाऽभिधाने कर्तव्येऽप्रत्ययिकाऽपि प्रयुज्यमाना दृश्यत इत्यर्थ। तथा च लोके दृश्यमाना

१ 'परभूता एव' पा०। २ 'चाऽयन्ता' पा०। ३ 'अपरभूत' पा०।

स्तथा ॥*॥ वावचने चानुत्पत्त्यर्थम् ॥२॥ वावचने चानुत्पत्त्यर्थं परग्रहणं कर्तव्यम्। वावचनेनाऽनुत्पत्तिरपि यथा स्यात् ॥ अथ क्रियमाणेऽपि वै परग्रहणे कथ-

---

प्र.] जादय इति। अवृत्तिना अपि भ्रान्त्या केवला लोके प्रयुज्यमाना दृश्यन्त इत्यर्थः। यथा बहुरिति। ईषदसमाप्तौ यो बहुच्प्रत्ययस्तत्सदृशो बहुशब्दस्सङ्ख्यावैपुल्यवाची यथा लोके प्रयुज्यते तथा द्वयसजादयोऽपीति कश्चिद्व्याचक्षते। अन्ये त्वाहुः—केवल एवेषदसमाप्तौ यो बहुशब्दो लोके प्रयुज्यते स दृष्टान्तोऽसाधुत्वे द्वयसजादीनामुपात्तः ॥ वावचने चेति। 'तस्मादित्युत्तरस्य' त्येव प्रत्ययस्य सिद्धे परत्वे पुनः परवचनं वावचने प्रत्ययस्य पक्षेऽनुत्पत्तिं प्रतिपादयति। 'वा परः सन् भवति'—परत्वोपलक्षितस्सन् पक्षे भवति। पक्षे तु नैवोत्पद्यत इत्यर्थः, न त्वत्र परत्वं विकल्प्यते

---

उक्तरीत्याऽभ्यासं गोमतिनाथा बहुरित्यस्य, प्रमाणमित्यर्थे द्वयसजादिमात्रस्येत्यर्थः। अथ भाव—'समानेऽर्थेऽन्वाख्यातोऽनन्वाख्यातस्य निवर्त्तक' इत्युक्तेस्तन्मार्गे प्रत्ययान्तस्य साधुत्वकथनात् केवलप्रकृत्यादेरसाधुत्वमिति। 'ऋतां णित्यादौ तु तदन्ते रघुत्वारोपेण रघुत्वेनैव रूपेण तेषां बोधात्साधुत्वम्। तत्सम्बन्ध्यपत्यमित्यर्थे हि अल्पसमासयोरेव साधुत्वमिति सूत्रार्थात्। बभ्रुसण्ट—गर्गादी, त्यक्तो नडादिरश्वादिश्च। साधुत्वयुक्तिभिः परत्वे सिद्धे परश्चेत्यनेन प्रत्ययः परो भवत्येवेति नियमार्थत्वेन केवलप्रकृतेर्न प्रयोगो, नापि केवलप्रत्ययस्येति सिद्धम् ॥ भाष्ये असाधुत्वोपपादकस्य परश्चेत्यस्योदाहरणबोधकस्य—अवृत्तिना इति। 'एकार्थीभावस्य वृत्तिविषयाऽभावेऽपि जाता इच्चारिता वृत्तिजद्वयसादिसदृशाः प्रमाणार्थका बहुच्सदृशबहुशब्दवद्द्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं—परश्चेती'ति भाष्यार्थः। बहुजपेक्षया भिन्नार्थत्वादस्तु बहुशब्दस्य साधुत्वम्, एषां त्वर्थान्तरवृत्तित्वाऽभावादसाधुत्वमेवेति भावस्तदाह—अवृत्तिजा अपि भ्रान्त्येति। तत्तदानुपूर्वीकत्वात्तदर्थत्वभ्रान्त्येत्यर्थः। 'प्रत्ययः पर एवे'ति नियमेऽर्थेन शब्दतश्च यः प्रत्ययतानीयः स पर एवेत्यर्थेनास्याऽसाधुत्वं बोध्यम्। अन्यथाऽस्य प्रत्ययत्वाऽभावेन कथं नियमेनाऽसाधुत्वं बोध्येत। एतेन प्रकृत्युद्देश्येनैव प्रत्ययानां विधानात्केवलप्रत्ययस्याऽसाधुत्वे सिद्धे कथमिदं परश्चेत्यस्य प्रयोजनमित्यपास्तम्। अन्ये त्विति। अत्र पक्षे बह्वोगपि द्वयसादितुल्यत्वेन दृष्टान्तताऽनुपपत्तिरित्यरुचिः ॥ धातोरिच्छायां वा सन् प्रत्ययसंज्ञो भवतीत्यर्थे प्रधानता स्याऽन्याय्यत्वेनाऽप्रधाने संज्ञाया एव विकल्पः स्यात्, न च स इष्टः। परग्रहणे तु तत्सामर्थ्यात्प्रधानत्वाऽऽधानेन सन एव विकल्प इति वावचने चेत्यादिभाष्यस्य तात्पर्यार्थः। तदुपपादयति—तस्मादित्युत्तरेति। 'परश्चे'त्यस्य सत्त्वेऽप्यप्रधानत्वात्परत्वस्यैव विकल्पः स्यादिति दूषयति—न त्वत्रेति। नियतत्वा-

---

१ वावचने चानुत्पत्ति' पा० । २ 'वावचनेन' पा० ।

मिव वावचनेनाऽनुत्पत्तिर्लभ्या ?॥ क्रियमाणे परग्रहणे वावचने 'वा परः' इत्येतदभिसंबध्यते । अक्रियमाणे पुनः परग्रहणे वावचनेन किमन्यच्छक्यमभिसंबन्द्धुमन्यदतः संज्ञायाः। न च संज्ञाया भावाऽभावाविष्येते॥ ॥*॥ वावचने चोक्तम्॥*॥वावचने चोक्तम्॥ किमुक्तम्?॥ 'वावचनानर्थक्यं च तत्र नित्यत्वात्सनः' इति॥ प्रयोगनियमार्थमेव तर्हि परग्रहणं कर्तव्यम्॥ अथैतस्मिन्प्रयोगनियमार्थे सति किमयं प्रत्ययनियमः 'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्योऽप्रकृतिपरो ने'ति, आहो स्वित्प्रकृतिनियमः 'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्याऽप्रत्ययपरा ने'ति ॥ कश्चात्र विशेषः ?॥*॥ तत्र प्रत्ययनियमे प्रकृतिनियमाऽभावः ॥*॥तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति । अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति । क्व स देवदत्त क्व स यज्ञदत्तो बभ्रुर्मण्डुर्लमक इति॥ अस्तु तर्हि प्रकृतिनियमः ॥*॥ प्रकृतिनियमे प्रत्ययाऽनियमः ॥*॥ प्रकृतिनियमे सति प्रत्ययस्य नियमो न प्राप्नोति, किमस्य द्वयम किमस्य मात्रं कार्यं तिर्याति,—अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति ॥*॥ सिद्धं तूभयनियमात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'उभयनियमात्' । उभयनियमोऽयं–'प्रकृतिपर एव प्रत्ययः प्रयो-

प्र.] 'पक्षे पूर्वो भवती'ति । परत्वस्य प्रयोगे नियतत्वात्तस्मादिति वचनाद्वा नियतत्वात् ॥ अक्रियमाण इति । प्रतियोगं प्रत्ययसञ्ज्ञोपस्थानात्तस्या एव विकल्पः स्यात् । कृते त्वस्मिन् पराधिकारे प्रतियोगमुपस्थिते 'परो वा भवति'–परत्वोपलक्षितः पक्षे भवति, पक्षे नैव भवतीत्यर्थः सम्पद्यते ॥ नित्यत्वात्सन इति । वृत्तिपक्षे नित्य एव सन्निष्यते, कर्तुमिच्छतीत्यवृत्तिपक्षे नैव सन उत्पत्तिः प्राप्नोतीति प्रत्या-

उ.]दिति। तथा च तद्विकल्पो नेष्ट इति भावः। तस्मादिति वचनाद्वेति। तेन सूत्रेणोत्तरस्येत्यस्याप्युपस्थितावेकार्थकशब्दद्वयेन नित्यं परत्वस्य बोधनेन पश्चात्तद्विकल्पो विकल्पस्तस्य बोधयितुमशक्य इत्यर्थः ॥ भाष्ये–वा पर इत्येतदभिसंबध्यत इति । यः परः स वा भवतीत्यर्थः । तस्या एवेति । प्रधानत्वेन प्रत्ययविकल्पस्याऽन्याय्यत्वादिति भावः ॥ प्रत्याख्यात इति । सत्त्वेऽपि न संज्ञाया विशेषणं, तद्विकल्पाऽनिष्टे, 'परश्चे'ति सत्त्वेऽपि परत्वविकल्पाऽभाववत्। तत्र सामर्थ्याद्वृत्त्या वाक्यबाधप्रसक्तिनिवृत्त्यर्थं सन एव विशेषणं वाग्रहणम् । ध्वनितं चेदं 'समर्थानामप्रथमा'दिति सूत्रे भाष्य इत्यपि बोध्यम् । प्रयोगार्थमिदमिति । प्रयोगनियमार्थमेवेदमित्यर्थः । क्वचित्तथैव पाठः ॥ भाष्ये–प्रत्ययपरैवेति । सामर्थ्यात्प्रत्ययो नित्यं सदा परः प्रयोक्तव्य इत्यर्थेनैतन्नियमसिद्धिरित्यर्थः । ननु 'पर एव स्या'दिति नियमे बभ्रुरित्यादेरपि

१ 'वचनेन' । २ 'पुन' इति क्वचित् । ३ 'परवचने' पा० । ४ इदं क्वचित् । ५ 'प्रकृतेर्नियमः' । ६ 'प्रत्ययनियम' । ७ 'क्वाऽस्य निर्धा' पा० ।

स्य' 'प्रत्ययपरैव च प्रकृति'रिति ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गम्यते ? ॥ परग्रहणसामर्थ्यादन्तरेणाऽपि परग्रहणं स्याद्य परः । पर एव यथा स्यादित्येवमर्थं परग्रहणम् । [ परश्च ] ॥

आद्युदात्तश्च ॥ ३।१।३ ॥ अनुदात्तौ सुप्पितौ । ३।१।४।

किमर्थमिदमुच्यते ? ॥ आद्युदात्तो यथा स्यादन्तोदात्तो मा भूदिति ॥ नैतदस्ति प्रयोजनं यमिच्छत्यन्तोदात्तं, करोति तत्र चकारमनुबन्धम्, आह च 'चितोऽन्तोदात्त' इति ॥ मध्योदात्तस्तर्हि मा भूदिति ॥ मध्योदात्तमपि यमिच्छति तत्र रेफमनुबन्धं करोति, आह च–'उपोत्तमं रिती'ति ॥ अनुदात्तस्तर्हि मा भूदिति॥अनुदात्तमपि यमिच्छति तत्र पकारमनुबन्धं करोति, आह च–'अनुदात्तौ सुप्पिता'विति ॥ स्वरितस्तर्हि मा भूदिति ॥ स्वरितमपि यमिच्छति करोति तत्र तकारमनुबन्धम्, आह च–'तित्स्वरित'मिति । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणाऽपि वचनमाद्युदात्त एव भविष्यतीति नार्थं आद्युदात्तवचनेन ॥ एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव

प्र ] स्थाने वावचने प्रयोगनियमार्थमिदम् ॥ सिद्धे तस्मादिति वचनात्परत्वे 'नित्यं परः प्रत्ययो यथा स्यात्स कदाचित्परो न प्रयोक्त'त्येवं सामर्थ्यादुभयनियमलाभः ॥

आद्युदात्तश्च । अस्वरकस्याऽच उच्चारणाऽभावात्स्वरान्तरस्य प्रत्ययान्तरेषु नियतत्वात्पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यतीति मत्वा प्रश्नः –किमर्थमिति ॥ येषामेवेति । चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येवं नियमात्तेषामेव

उ ]माद्युत्वं स्यादिति चेत्, 'पर स्यादेवे'त्यर्थात्। तद्व्यतयन्व्याचष्टे–नित्यं पर इति। स कदाचित्परो न प्रयोक्तेति । तेनोभयनियमफलस्लाभ इति भावः । [ परश्च ] ॥

आद्युदात्तश्च । एते त्रयोऽप्यधिकाराः ।यत्तु परश्चाद्युदात्तश्चेत्यनयोः परिभाषात्वमुक्तं, तन्न, लिङ्गाऽभावात् । न च प्रत्ययमत्रैव लिङ्गम्, एकवाक्यतया त्रयाणामपि विधानेनान्यतरस्याऽन्यतरस्मिन्नित्वाऽयोगात्। सहविधानञ्चात्रैव सूत्रे भाष्येऽग्रे स्फुटतरम्॥भाष्ये–अन्तोदात्तो मा भूदिति। अस्वरकस्याऽच उच्चारणाऽभावेऽपि आद्युदात्तत्वनियमो न स्यादित्यर्थः ॥ नैतदिति । अस्वरकोच्चारणाऽभावादनियतान्तोदात्तत्वादौ प्राप्ते 'चित' इत्यादि 'चित एवे'त्यादिनियमार्थमित्यर्थः । प्रत्ययविषयैर्नियमैरन्येषु स्वरेषु प्रतिबद्धेषु अस्वरकोच्चारणाऽसम्भवादाद्युदात्त एव भविष्यतीति किमनेन सूत्रेणेति भावः । ननु लोके त्रैस्वर्यनियमाऽभावेनाऽस्वरकस्याऽप्यच उच्चारणमस्त्येव,उदात्तादीनामभावस्यैकश्रुतित्वात्।एकश्रुतेरतिरिक्तत्वे तु सापि स्यादिति कथमाद्युदात्तत्वसिद्धि [1]।न च दूरात्सम्बुद्धावेव साऽपि नियता, विभाषाछन्दसीत्यादेश्च

[1] 'यथे'ति क्वचित् ।

नियतस्वरा स्युर्य इदानीमनियतस्वर स कदा चिदाद्युदात्त कदा चिदन्तोदात्त कदा चिन्मध्योदात्त कदा चिदनुदात्त कदा चित्स्वरित स्यात्, आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते ॥

अथ किमर्थं प्रत्यसंज्ञासंनियोगेनाद्युदात्तत्वमुच्यतेऽनुदात्तत्वञ्च, न यत्रैवाऽन्य स्वरस्तत्रैवाऽयमप्युच्येत- ञ्नित्यादिर्नित्यम्'। 'प्रत्ययस्य च'। 'अनुदात्तोपदेशाल्लसार्वधातुकमनुदात्तम्'। 'सुप्पितौ चे ति ?। तत्रायमप्यर्थो द्विराद्युदात्तग्रहण द्विश्चाऽनुदात्तग्रहण न कर्तव्य भवति। प्रकृतमनुवर्तते ॥

अत उत्तर पठति॥*॥आद्युदात्तत्वस्य प्रत्ययसंज्ञासंनियोगे प्रयोजनं यस्य संज्ञाकरण तस्याद्युदात्तार्थम् ॥*॥आद्युदात्तत्वस्य प्रत्ययसंज्ञासंनियोगकरणे एतत्प्रयोजन यस्य संज्ञा क्रियते तस्याद्युदात्तत्व यथा स्यात्॥*॥असंनियोगे हि यस्मात्स विहितस्तदादेराद्युदात्तत्व तदन्तस्य चानुदात्तत्वम् ॥*॥ अक्रियमाणे हि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण भवती'ति तदादेरेवाद्युदात्तत्व प्रसज्येत तदन्तस्य चानुदात्तत्वम् ॥

अथ क्रियमाणेऽपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वेऽनुदात्तत्वे च कस्मादेव तदादेराद्युदात्तत्व न भवति तदन्तस्य-चाऽनुदात्तत्वम्[१]॥उत्पन्न प्रत्यय प्रत्ययाश्रयाणा कार्याणा निमित्त भवति नोत्पद्यमान । तद्यथा कृतो घटो घट

प्र ]नियतस्वरत्व स्यात्, अन्येषा त्वनियतस्वरत्वम् इत्यर्थ ॥प्रत्ययाश्रयाणामिति। तदन्तग्रहणादीनामित्यर्थ । 'आद्युदात्तश्च'स्यास्य तु प्रतियोगमुपस्थाने सति-उत्पद्यमान एव तव्यादिराद्युदात्तो भवत्येव तिबादिरनुदात्त इति दोषाऽभाव ।घटाश्रयाणामिति।

उ ]र्व्याप्त्ते ।तेनाऽत्रापि पाक्षिक्यास्तस्या दुर्वारत्वमिति चेन्न, लोके नैस्वर्यपक्षे, वेदे चाद्युदात्तार्थमिद सूत्रं नियमे सिद्धत्वात्स्वार्थमिति भाष्याशयात्। पक्षे लोके एकश्रुतिरिष्टैवेत्याहु ॥अनियतस्वरेति। पूर्वनियमे तु चितोऽन्यस्वराऽव्यावृत्त्या नियतशास्त्रार्थोऽन्यथा इष्टाऽनुरोधादावृत्त्योभयविधनियमे मानाऽभावाच्चाऽन्तोदात्त एव चिदित्येव नियम स्यादित्यन्यत्राऽनियम स्यादित्यर्थ ॥ भाष्ये–संज्ञासंनियोगेनेति। अत्र करणे त्रयाणामप्यधिकारत्वादेकवाक्यतया नितयविशिष्टत्वादेर्विधानात्। अन्यत्र करणे तु प्रत्ययाऽनुवादेन विधानान्न संनियोग इति भाव ।

भाष्ये-द्विराद्युदात्तग्रहणमिति।'प्रत्ययस्य चे'ति करणेऽपि तस्याद्युदात्तग्रहणलघुत्वमिति भावेनेदम्॥तदादेराद्युदात्तमिति। तदादेरिति तत्पुरुष। तदन्तस्येति बहुव्रीहि ।उत्पन्न प्रत्यय इति। 'प्रत्ययग्रहणे यस्मा दि'ति परिभाषाया अनु

१ 'दात्तत्वमनुदात्तत्वं चोच्यते' पा०। २ नापि क्वचिन्न। ३ 'आद्युदात्तस्य' पा०। ४ 'विहित इति क्वचिन्न। ५ 'तदन्तस्ये'ति क्वचिन्न। ६ 'चानुदा' पा०।

श्रयाणां कार्याणां निमित्तं भवति न क्रियमाण ॥ ॥*॥ न वा प्रकृतेरनुदात्तव-चन ज्ञापक तदादेरग्रहणस्य ॥*॥ न वैष दोष ॥ किं कारण ? ॥ यदयं ञ्नि-त्यादिर्नित्यमिति प्रकृतेराद्युदात्तत्व शास्ति तज्ज्ञापयत्याचार्यो 'न तदादे-राद्युदात्तत्व भवती'ति ॥ तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति॥ ॥*॥प्रकृतिस्वरस्य च विधानसामर्थ्यात्प्रत्ययस्वरोऽभाव ॥*॥ यदय 'धातोरन्त ' 'प्रातिपदिकस्य चाऽन्त' इति प्रकृतेरन्तोदात्तत्व शास्ति तज्ज्ञापयत्याचार्यो 'न तदन्तस्याऽनुदा-त्तत्व भवती'ति ॥ कथ कृत्वा ज्ञापक ?॥ यत्र ह्यनुदात्त प्रत्यय प्रकृतिस्वर-स्तत्र प्रयोजयति॥ ॥*॥आगमानुदात्तार्थं वा॥*॥ आगमानुदात्तार्थं तर्हि प्रत्य-यसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते–'प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते आ-गमा अनुदात्ता यथा स्यु'रिति ॥*॥ न वागमानुदात्तवचनात् ॥*॥ न वैत-दपि प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'आगमानुदात्तवचनात्' । 'आगमा

---

प्र ] उदाहरणादीनामित्यर्थ ॥ यदयमिति । प्रत्ययस्य चेत्यनेनाद्युदात्तत्वे सिद्धे 'ञ्नित्यादिर्नित्य'मित्यनारम्भणीय स्याद्यदि तदादेर्ग्रहणं स्यादित्यर्थ ॥ यत्र ह्यीति । यातीत्यादौ पिति प्रत्यये धातोरुदात्तत्व भवति । यातो यान्तीत्यादौ तु प्रत्ययाद्युदा-त्तत्वेन सति शिष्टत्वाद्बाध्यते । कृष्णतर इत्यादौ च प्रातिपदिकान्तोदात्तत्वं श्रूयते । यदि च प्रत्ययाऽन्तस्याद्युदात्तत्व स्यान्निर्विषय धातुप्रातिपदिकान्तोदात्तत्व स्यादि-त्यर्थ ।'आस्ते' 'शेते' इत्यादौ स्यार्वधातुकानुदात्तत्वे सति धातुस्वरस्य सविषयत्वाद-ज्ञापकत्वमिति चेत्, तत्रापि तदन्तविधिप्रसङ्गाज्ज्ञापकत्वमेव ॥ आगमानुदात्तार्थं वेति । व्याचष्टे–तदर्थे । लविनव्यमित्यादौ तव्यस्योपरिष्टात् एवाद्युदात्तत्वे कृते पश्चादिडागम क्रियमाण शेषनिघातेनाऽनुदात्तो भवति । अन्यथा परत्वादिडागमे कृते तस्य तद्भक्तत्वात्प्रत्ययग्रहणेन ग्रहणादाद्युदात्तत्व क्रियमाणमिट एव प्रसज्येते-

---

उ.] वाद्युदात्तत्वप्रसङ्गादिति भाव । तद्ध्वनयन् व्याचष्टे–उत्पद्यमान एवेति । तथा चेह करणे प्रत्ययस्याद्युदात्तत्वेऽभावान्न परिभाषोपस्थितिरिति भाव । ञ्नित्यादिरिति ञ्निदन्तस्य ञ्निति परे पूर्वस्य वाद्युदात्तविधायकम् । ननु प्रत्ययस्येत्यनेन सिद्धे 'ञ्नित्यादि'रिति सूत्र तस्मिन्नेव तदादितदन्तग्रहणाऽभावस्य ज्ञापक किन्न स्यादिति चेन्न ; प्रथमे 'ञ्नित्यादि'रिति सूत्रे विरोधोपस्थित्यभावेनोत्तरकालिकप्रत्ययस्येत्यस्य बोध एव तदुपस्थित्या तत्रैव तदभावस्यानेत्याशयात् ॥ प्रातिपदिकान्तोदात्तत्व-मिति । 'स्वरविधौ व्यञ्जन वद्भावी'त्यर्थस्य पक्षे वक्ष्यमाणत्वादनुदात्तत्व सर्वस्येति तात्पर्यम् ॥पूर्वप्रयोजनस्य ज्ञापकेन खण्डनादाह–तर्ह्यर्थ इति । अन्यथेति । पक्षे सूत्रकरण इत्यर्थ । तस्मादागमाऽनुदात्तत्वसिद्धये इह वचनमिति भाव । एतदु-

---

१ 'स्वरविधा' पाठ क्वचित्। २ 'गमस्यानुदात्त' पा०।३ 'प्रसज्यते' पा० ।

इषेर्गमि कर्म ॥ एवमपीष्यते ग्रामो गन्तुमिति, परमार्थत उत्पद्यमानेन लेन ग्रामस्याऽभिधानं न प्राप्नोति ॥ एवं तर्हि गमेर्ग्राम कर्म, इषेरुभे कर्मणी ॥

अथ सन्नन्तात्सना भवितव्यम्,– चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति ॥ न भवितव्यम् ॥ किं कारणम् ? ॥ १ ॥ अर्थगत्यर्थः शब्दप्रयोगः ॥ * ॥ अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम्,–'उक्तार्थानामप्रयोग' इति ॥ न तर्हीदानीमिदं भवति

प्र ]यत्कर्म तत्र लकार उत्पद्यते । तच्च गमनमेव न तु ग्राम इत्यर्थः । एवं तर्हीति । 'इष्यते ग्रामो गन्तु'मित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्वितरेक्षया कर्मणारे केन शब्देनाऽभिधानाऽसम्भवात् प्रधाने कार्यसम्प्रत्ययाद्ग्रामस्यैवाऽभिधानं लकारेण भवति । इषिक्रियाश्रयाख्यातवाच्यत्वात् प्राधान्यमिति प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तेरभिहितवच्चकासनाद्गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न भवतः ।

अथेति । प्रयोगाऽदर्शनात्प्रश्नसद्भावाच्च पृच्छति । न भवितव्यमिति । एकत्वादिच्छायाः, तस्याश्च पूर्वसनेनाऽभिहितत्वादपरः सन्न भवतीत्यर्थः । न तर्हीति ।

उ ]भाव । परस्येति । गम्यपेक्षयेत्यर्थः । यदर्थक्रियानिरूपितं यत्कर्म तस्मिन्नेव कर्मणि ततो धातोर्लाद्युत्पत्तिर्न्याय्येत्यर्थः । नन्विषेरुभयकर्मत्वे कदाचिद्गमनरूपे कर्मणि प्रत्यये 'इष्यते ग्राम गन्तु'मित्यपि स्यादत आह–इष्यते ग्राम इति । ग्रामार्थत्वादिति । ग्रामप्राप्त्युद्देश्यकत्वादित्यर्थः । अत एव गमनस्य स्वतोऽनुद्देश्यत्वादप्राधान्यमत आह अप्राधान्यादिति । एतेन युगपदुभयोरभिधानं स्यादिति परास्तम् । भिन्नकक्षयोरिति । प्रधानाऽप्रधानयोरित्यर्थः । नन्वेवं कदाचिदप्रधान एव स्यादत आह— प्रधान इति । नन्वेवमपि गमिनिरूपितकर्मत्वस्याऽनभिधानात्ततो द्वितीया स्यादेवेति पूर्वोक्तप्रयोगापत्तिर्दुर्वारेत्यत आह–इषिक्रियाया इति । एतेन युगपदुभयत्र ग्रामस्य शाब्दाऽन्वयाऽसम्भवात्कदाचिदियं कदाचिदिमौ शाब्दाऽन्वय । तत्र यत्र यत्र शाब्दोऽन्वयस्तदा तत्र तद्विभक्तिरिति 'इष्यते ग्रामो गन्तु' मिष्यते ग्राम गन्तु'मित्युभयमापद्यत इति परास्तम् । एवं तर्हि 'गमेर्ग्राम कर्म इषेरुभे कर्मणी' इति भाष्यविरोधात् तस्य किं कर्तव्यमुपक्रमभाष्यपर्यालोचनयाऽस्यापि भाष्यस्यैकप्रयोगे उभयत्र ग्रामस्याऽऽदरशा शाब्दाऽन्वयपरत्वाभावात् । तथा सति कदाचिद्गमेर्ग्राम कर्म कदाचिदुभाविषेरित्येव स्पष्टत्वात् वदेदिति दिक् । नन्वेकस्या इच्छाया उपात्तपीच्छान्तराऽभिधानाय द्वितीयः सन् भविष्यतीत्यत आह—इच्छाया एकत्वादिति । तत्तदर्थनिरूपितेच्छात्वनैक्यादिति भावः । इच्छाविषयेच्छायां तु न प्रत्ययः, इच्छाविषयेच्छाऽभावादित्यभिमानः । नन्विच्छाविषयेच्छाऽभावात्कथमत्र सन्नित्यत आह

१ केचित्त्विदं भाष्यमिति मन्यन्ते । २ 'प्रत्याययि' पा० । ३ 'कस्य' पा० ।

एषितुमिच्छति—एषिषतीति [1] ॥ अन्यत्र विशेष । एकस्याऽत्रेषेरिषि साधन वर्तमानकालश्च प्रत्यय । अपरस्य वाह्य साधन सर्वकालश्च प्रत्यय ।

इहाऽपि तर्ह्येकस्येषे करोतिविशिष्ट इषि साधन वर्तमानकालश्च प्रत्यय । अपरस्य वाह्य साधन सर्वकालश्च प्रत्यय ॥ येनैव खल्वपि हेतुना एतद्वाक्य भवति–चिकीर्षितुमिच्छतीति, तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मात्सन्नन्ता त्सनः प्रतिषेधो वक्तव्य । त चापि ब्रुवता 'इषि सनै' इति वक्तव्यम् । भवति हि जुगुप्सिषते मीमांसिषते इति ॥

शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिक ।
सरूप प्रत्ययो नेष्ट सन्नन्तान्न सनिष्यते ॥१॥[ इति ] ॥

॥✻॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्या-ध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥✻॥

प्र ]इषिणैव धातुनेच्छाया अभिधानात्सन्न प्राप्नोतीति भाव । एकस्येति । इच्छतीत्यत्र य इषिस्तस्यैषितुमित्येतत्पदवाच्य इषि कर्मेत्यर्थ । तथा हि कश्चिदालस्यादुपहतोऽध्ययनादिविषयामिच्छामेवेच्छति । सर्वकाल इति । 'समानकर्तृकेषु तुमु'नित्यनेन तुमुन कालसामान्ये विधानात् । शैषिकादिति । सन्प्रसङ्गेनाऽन्योऽप्यनिष्टप्रत्ययो निवार्यते । प्रतिव्यक्ति लक्षणप्रवृत्तौ वाचनिको निषेध, आकृतिपक्षे तु सकृल्लक्षण प्रवृत्तौ तत्प्रवृत्ते प्राक्प्रत्ययान्तप्रकृत्यसम्भवात्तदन्तात् प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयं सपद्यते । तत्र शैषिकाच्छैषिक सरूपो न भवति । शालाया भव शालीयो घट । तत्र भवमुदकमिति पुनश्छो न भवति । विरूपस्तु भवति,–अहिच्छत्रे भव आहिच्छत्र , तत्र भव आहिच्छत्रीय । तथा दण्डोऽस्यास्तीति दण्डिक , सोऽस्यास्तीति पुनष्ठन्न भवति । विरूपस्तु भवति–दण्डिमती सेनेति । सन्नन्तान्न सनिष्यत इति । 'सरूप' इत्यपेक्ष्यते । सारूप्यं चात्र मात्रस्य लक्ष्यते, तच्चार्थद्वारक-

उ ]कश्चिदालस्यादीति । तुमुन्ण्वुलाविति तुमुनो भविष्यति विधानात्कथ सर्वकाल-प्रत्ययत्वमत आह—समानेति । त प्रवृत्ते —तत्तल्लक्षणप्रवृत्ते । तत्प्रत्ययान्तेति । सना-दिप्रत्ययान्तेत्यर्थ । न्यायानुवादोऽयमिति । अनुवादफलञ्चाऽन्यत्र व्यक्तिपक्षाश्रयणेन त्वादिसिद्धि घत्वत्वमित्यादौ । अनुवादेनाऽत्रैव तदाश्रयणबोधनादित्याहु । परे तु 'आर्धधातुक' इति सूत्रभाष्योक्तरीत्या तानौ परत्वा(श्रयैता)भावत्तदवधित्वाभावा द्वृत्त्वादित्यादि जातिपक्षे आश्रयितु न शक्यते इति वचनमवेदम् । अतएव त्वान्तात् त्वसिद्धिरित्याहु । शब्दकृतसादृश्यग्रहणे व्यावर्त्याऽसम्भवादाह—तच्चार्थेति ।

१ अत्र ॥*॥ सनन्तात्सन प्रतिषेध ॥*॥ इति वार्त्तिक मित्यन्ये । २ ॥*॥ इषि सन ॥*॥ इति वार्त्तिक भवेत् । ३ इद क्वाचित्कम् । ४ 'सन्न' । ५ 'लक्षणप्रवृत्ते ' पा० ।

## सुप आत्मनः क्यच् ॥ ३।१।८ ॥

किमर्थश्चकारः[1]॥*॥[चकारः] स्वरार्थः॥*॥ चितोऽन्त उदात्तो भवतीत्य-न्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनम्, एकाच्कयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् ॥ विशेषणार्थस्तर्हि[2]॥ क्व विशेषणा र्थेनार्थः । अस्य च्वौ क्यचि चेति । '[3]क्ये चे'ति ह्युच्यमाने 'अपि काक श्येनायते',-अत्रापि प्रसज्येत ॥ नैतदस्ति । 'तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं ने'त्येवमेतस्य न भविष्यति ॥ सामान्यग्रहणाविघातार्थस्तर्हि ॥

क्व च सामान्यग्रहणाविघातार्थेनार्थः ? ॥ न क्ये इति ॥

अथाऽऽत्मग्रहणं किमर्थम्?॥ आत्मेच्छायां यथा स्यात् परेच्छायां मा भूत्,-राज्ञः पुत्रमिच्छतीति ॥ क्रियमाणेऽपि वै आत्मग्रहणे परेच्छायां प्राप्नोति ॥ किं कारणम् ?॥ 'आत्मन' इतीयं कर्तरि षष्ठी । 'इच्छे'त्यकारो भावे । स यथे-

---

प्र ]मिति इच्छासन्नन्तादित्यर्थो लभ्यते॥ इति भाष्यप्रदीपे तृतीयस्य प्रथमे प्रथमाह्निकम्॥

सुप आत्मनः । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । शिष्यबुद्धिपरीक्षार्थं परिहाराऽऽभासमाह-चित इति । प्रत्ययस्वरेणेति । यद्यप्यत्र धातुस्वरेण भाव्यं तथापि पूर्वं प्रत्ययस्वरो भवति, पश्चात्सतिशिष्टो धातुस्वर इति क्रमः । तदनुबन्धकेति । स एव यस्याऽनुबन्धस्तस्य ग्रहणम् । यस्य तु स चाऽन्यश्च तस्य न ग्रहणमित्येवमेतद्वचनसामर्थ्यादाश्रीयते । आत्मेच्छायामिति । आत्मन इच्छेति शेषषष्ठ्या समासो न तु कर्तृषष्ठ्या । सुबन्तद्वारकश्चात्मन इच्छया सम्बन्धो न तु साक्षात् । तेनाऽयमर्थः-'आत्मनः सुबन्तार्थं यदेच्छति तदा यथा स्या'दिति । एवं 'परेच्छाया'मिति व्याख्येयम् । आत्मन इतीयमिति । क्रियाकारकसम्बन्ध

---

ट ]इति नागोजीभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे प्रथममाह्निकम् ॥१॥

सुप आ । वक्ष्यमाण इति । केषाञ्चित्प्रयोजनानामन्यथासिद्धिरूप इत्यर्थः । पश्चादिति । एवञ्चाऽन्तरङ्गत्वात् प्रत्ययस्वरकृतैवाऽन्यथासिद्धिरुक्तेत्यर्थः । ननु यत्किञ्चिदनुबन्धयुक्तस्य ग्रहणे तद्विरहितस्य ग्रहणाऽभावो वचनमन्तराऽपि सिद्ध्यती-त्यत आह-स एवेति । उच्चारित एवेत्यर्थः । वचनसामर्थ्यात्त्ववधारणो बहुव्रीहि-राश्रीयते । 'अत'दित्यादावपिशब्दघटितश्च स आश्रीयत इति भावः । क्यचो ह्यनु-बन्धकत्वात् 'क्य'ग्रहणेन ग्रहणमिति तात्पर्यम् । अथात्मग्रहणं किमिति । इच्छापेक्षया कर्तरि षष्ठीति प्रश्नः । ननु कर्त्रीति । तथा सति राज्ञः पुत्रमिच्छतीत्यादावपि प्रसङ्ग इति भावः । शेषषष्ठ्यामपि साक्षात्सम्बन्धेनाऽन्वये दोषस्तदवस्थ इत्यत आह-सुबन्तेति । आत्मशब्दः स्वपर्यायोऽयं नृपरः । 'आत्मनः पुत्रं परस्य दास'मिच्छतीत्या-

---

१ इदं वार्त्तिकमिति गौडाः । २ इदं ह्युक्तम् । ३ 'क्ये इति' पा० ।

वात्मन इच्छायामपि परस्य, आत्मन एवेच्छाऽसौ भवति ॥ नैष दोषः । नात्मग्रहणेनेच्छाऽभिसम्बध्यते ॥ किं तर्हि ? ॥ सुबन्तमभिसम्बध्यते 'आत्मनो यत्सुबन्त'मिति ॥ यद्यात्मग्रहणं क्रियते छन्दसि परेच्छायां न प्राप्नोति– 'मा त्वा वृका अघायवो विदन्' । तस्मान्नाऽर्थ आत्मग्रहणेन॥ कस्मान्न भवति 'राज्ञः पुत्रमिच्छती'ति ॥ असामर्थ्यात् ॥ कथमसामर्थ्यम् ? ॥ 'सापेक्षमसमर्थं भवती'ति॥ छन्दस्यपि तर्हि न प्राप्नोति–'मा त्वा वृका अघायवो विदन्'। अस्त्यत्र विशेषः । अन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ॥

कथं पुनरन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ? ॥ ते चैव हि वृका एवमात्मका हिंसाः । कथमात्मनोऽधर्ममेषितुमर्हन्ति। अतोऽन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते । यद्येवं तर्हि च्छन्दस्यघशब्दात्परेच्छायां क्यज्भवत्येवं भाषायामपि प्राप्नोति–'अघमिच्छती'ति । तस्मादात्मग्रहणं कर्तव्यम् ॥ छन्दसि कथम् ? ॥ आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यघशब्दाच्छन्दसि परेच्छायां क्यजि'ति यदयम्–'अश्वाघस्या'दिति क्यचि प्रकृते ईत्वबाधनार्थमाकारं शास्ति ॥

अथ सुब्ग्रहणं किमर्थम् ? ॥ सुबन्तादुत्पत्तिर्यथा स्यात्प्रातिपदिकान्मा

---

प्र.]स्यान्तरङ्गत्वादिति भावः ।नात्मग्रहणेनेति। आत्मग्रहणोपादानसामर्थ्यात् । नन्वे-षितारमन्तरेणेच्छा भवतीति व्यभिचाराऽभावादिच्छाया विशेषणस्य निष्फलत्वात् ।

कथमात्मन इति। अघं–व्यसनं, दुःखमुच्यते।न ह्यात्मनो न कश्चिदिच्छतीत्यर्थः । यदयमिति । न च तदाचारक्यजर्थम् , छन्दस्यघशब्दादाचारे क्यच्प्रयोगाऽ-

---

उ.]दौ तु न दोषः , इष्यमाणपरस्याऽसम्बन्धित्वाऽभावात् ।परेच्छेति । परसम्बन्धि-सुबन्तार्थेच्छायामित्यर्थः । कर्तरीयं षष्ठीति । अनेनैव सम्बन्धेनेच्छायास्तदन्वयात् । परम्परासम्बन्धस्तु न पदार्थस्तदाह–क्रियाकारकसंबन्धस्येति । अन्तरङ्गत्वं–आत्मसम्बन्धित्वम् । अत एव सुबन्तविशेषणत्वेन परिहारः । एषितारमिति । स एवा-त्मपदार्थ इति भावः । भाष्ये–एवमात्मका हिंसा इति । एवंस्वभावा हि परस्यैव दुःखमिच्छन्तीत्यर्थः । दुःखमिति । पापवाचिनाऽघशब्देन तत्फलं दुःखं लक्ष्यत इति भावः । 'दुःखीयति सुखहेतो'रित्यादिप्रयोगास्तु वास्तवदुःखस्य मुख्यत्वभ्रमेणेच्छाया बोध्याः । भाष्ये–विध्यर्थं भविष्यतीति । ननु सुब्विधेरभावे प्रातिपदिकात्सु-बन्ताच्चोत्पत्तव्यमविशेषात् । तत्र 'न क्ये' इत्यस्य नियमार्थत्वे नान्तेभ्यः प्राति-पदिकादुत्पत्तौ नलोपो न स्यात् । विध्यर्थत्वे तु 'वाच्यती'त्यादौ सुबन्तादुत्पत्तिप्रसङ्गे ऽश्वादि पदकार्यं स्यादिति चेन्न , 'धातोः कर्मण' इत्यत 'कर्म'ग्रहणमनुवर्तते । तत्र च धातुरूपं कर्म परिनिष्ठितत्वप्रयोजकप्रत्ययान्तत्वाऽनाप्यन्तमतस्तत्साहचर्यो-

भूदिति ॥ नैतदस्ति प्रयोजनम्, नाऽस्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ॥ अयमस्ति विशेषः—सुबन्तादुत्पत्तौ सत्यां पदसञ्ज्ञा सिद्धा भवति, प्रातिपदिकात्पुनरुत्पत्तौ सत्यां पदसञ्ज्ञा न प्राप्नोति । कथम् ?॥ आरभ्यते 'न क्ये' इति ॥ तच्चावश्यं वक्तव्यं सुबन्तादुत्पत्तौ सत्यां नियमार्थं, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति ॥

इदं तर्हि प्रयोजनं 'सुबन्तादुत्पत्तिर्यथा स्याद्धातोर्मा भू'दिति ॥ एतदपि नास्ति प्रयोजनम्, धातोः सन्विधीयते स बाधको भविष्यति ॥ अनवकाशा हि विधयो बाधका भवन्ति [न साऽवकाशाः,] सावकाशश्च सन्॥ कोऽवकाशः ?॥ परेच्छा ॥ न परेच्छायां सना भवितव्यम् ॥ किं कारणम् ?॥ 'समानकर्तृका'दित्युच्यते, यावच्चेहात्मग्रहणं तावत् [च] तत्र समानकर्तृकग्रहणम् ॥

इदं तर्हि प्रयोजनम्—'सुबन्तादुत्पत्तिर्यथा स्याद्वाक्यान्माभू'दिति, महान्तं पुत्रमिच्छतीति ॥ न वा भवति महापुत्रीयतीति ? ॥ भवति यदैतद्वाक्यं भवति—महान् पुत्रो महापुत्रः, महापुत्रमिच्छति महापुत्रीयतीति । यदा त्वेतद्वाक्यं भवति—महान्तं पुत्रमिच्छतीति, तदा न भवितव्यं, तदा च प्राप्नोति, तदा मा भूदिति ॥ अथ क्रियमाणेऽपि सुप्ग्रहणे कस्मादेवाऽत्र न भवति ?, सुबन्तं ह्येतत् [भवति] वाक्यम् ॥ नैतत् सुबन्तम्॥ कथम् ?॥ 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति ॥ अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति ?॥

॥ * ॥ समानाधिकरणानां सर्वत्राऽप्रसिद्धिरयोगादेकेन ॥ * ॥ समानाधि

---

प्र ]भावादिति भावः । महान्तं पुत्रमिति । यद्यत्र सुबन्तसमुदायात्परः क्यच्प्रत्ययः स्यात्तदा प्रत्ययार्थाभिधाने पदद्वयस्य प्रवर्तनात्परस्परस्य समासाऽभावादुत्तरपदनिवर्तनमात्रं न स्यात् । समानाधिकरणानामिति । समानाधिकरणानां

---

उ ]तात्पर्यमेव कर्मणो ग्रहणात्सुबन्तःऽप्राप्तिरिति भाष्याशयात् । भाष्ये—धातोर्मा भूदिति। निष्ठान्तात्तु न शङ्कितं, तस्य कर्ममात्रप्रतिपादकत्वाऽभावात् । ननु महान्तं पुत्रमिति विग्रहेऽपि क्यचि 'सन्महत्'दिति समासे जाते च 'महापुत्रीयती'त्येव साध्यमिति 'तदा न भवितव्य'मिति कथमत आह—यद्यत्रेति । परस्परस्येति । अन्यत्रैकार्थीभावमापन्नयोर्निष्कृष्य परस्परेण सामर्थ्याऽभावादिति भावः । वस्तुतस्तु निमित्तैकार्थीभावाऽभावेऽप्येकार्थीभावमात्रेण समासस्य समर्थसूत्रादित्यभाष्यसम्मततयाऽऽत्र भवत्येव। स्वरे तु भेदः, सति शिष्टतया समासस्वरेण पुत्रीशब्दोदात्तत्वस्य इति भाष्याशयः । तदा न भवितव्यमिति—भाष्ये। 'क्यचे'ति शेषः । तथा च स्वरेऽनिष्टमिति भावः । तदा च प्राप्नोतीति। 'क्य'जिति शेषः । नैतत्सुबन्तमिति। समुदायकर्मेति भावः । प्रत्येकं कर्मत्वे कर्मसमुदायस्याऽकर्मत्वादेवाऽप्रसङ्ग इति बोध्यम् ।

अथाऽस्य क्यजन्तस्य कानि साधनानि भवन्ति ? ॥ भावः कर्ता च ॥ अथ कर्म ? ॥ नास्ति कर्म ॥ ननु चाऽयमपि सकर्मकः यस्याऽसमर्थे क्यन्विधीयते? ॥ अभिहितं तत्कर्माऽन्तर्भूतं धात्वर्थे सम्पन्नो, न चेदानीमन्यत्कर्माऽस्ति येन सकर्मकः स्यात् ॥ कथं तर्ह्ययं सकर्मको भवति–'अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवक मिति ?॥ अस्त्यत्र विशेषो–द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च । उपमानकर्माऽन्तर्भूतम् । उपमेयेन कर्मणा सकर्मको भवति । तद्यथा–अपि काकः श्येनायत इति । अत्र द्वौ कर्तारौ—उपमानकर्ता उपमेयकर्ता च । उपमानकर्ताऽन्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति ॥

अथ तर्हि कथं सकर्मको भवति–'मुण्डयति माणवक मिति ? ॥ अत्रापि द्वे कर्मणी,–सामान्यकर्म विशेषकर्म च । सामान्यकर्माऽन्तर्भूतं, विशेषकर्मणा

---

प्र ]शब्दव्यपदेश्यत्वादपि न भासनमित्यर्थः । भावः कर्ता चेति । कर्माऽभावप्रतिपादनपरमेतत् । अधिकरणादौ हि ल्युडादयो यथायोगं भवन्त्येव । भावस्य च लकारव्युत्पत्तिनिमित्ततया साधनव्यपदेशः । अभिहितमिति । तच्च जानातीत्यादिवदिच्छाक्यजन्तस्याऽकर्मकत्वात्कर्मणि लकाराभावः । न चेदानीमिति । नियतविषयतया इच्छायाः क्यजन्तेन प्रतिपादनात्तस्याश्च वस्त्वन्तरविषयीकरणाऽभावादिति भावः । कथं तर्हीति । अत्राऽपि पुत्रादिकर्मणोऽस्त्यन्तर्भाव इति प्रश्नः । द्वे इति । वाक्य एव कर्मद्वयमावीर्भवतीत्यर्थः । मुण्डयतीति । मुण्डगुणविशिष्टद्रव्यकर्मणो धात्वर्थेऽन्तर्भावादिति भावः । अत्रापीति । ण्यन्तो धातुर्द्रव्यमात्रमन्तर्भावयितु मर्हतीति

---

उ ]भाष्ये–यत्र च गमकमिति । मुण्डयतीति प्रयोगे मौण्ड्यस्य क्रियात्वेनाऽव्यकारे नित्यसापेक्षतया गमकत्वमिति भावः । कर्माऽभावेति । लकारवाच्यसाधनानामेव प्रश्नादिति भावः । नन्वेत्र 'कानि साधनानी'ति प्रश्ने 'भाव' इत्युत्तरमसङ्गतं, तस्य क्रियारूपस्य साध्यत्वेन साधनत्वाऽभावादत आह–भावस्य चेति । लकारनिमित्तमेव साधनशब्देनोच्यत इति भावः । नियतविषयाया इति । कर्मविशेषेणैकार्थीभावादित्यर्थः । अतएव कर्माऽन्तरेणाऽनन्वयो राजपुरुषो भार्याया इतिवदिति भावः । वाक्य एवेति । क्यजर्थाऽऽचारस्य निरूपकतयोपमानविषयत्वेऽप्युपमानस्योपमेयसापेक्षत्वात्कर्मद्वयसद्भाव इति भावः । तत्र मुख्यं कर्मोपमेयमेव । उपमाने तु उपमेयसमानधर्मकतया कर्मत्वव्यवहार इति तस्याऽन्तर्भूतत्वेऽपि न क्षतिरिति तात्पर्यम् । उपमानपुत्रकर्मकः उपमेयमाणवककर्मक इति बोधः । ननु मुण्डयतीत्यत्रापि द्वयोः कर्मत्वं 'मुण्डं करोति माणवक'मिति विग्रहे दर्शनादिति कथमत्र प्रश्न इत्यत आह–मुण्डगुणेति । मौण्ड्यस्य कर्मत्वे सति तस्याऽऽश्रयसापेक्षत्वनाऽसामर्थ्यप्रसङ्गान्मुण्डगुणविशिष्टद्रव्यस्यैव कर्मत्वमभ्युपेयम्, तस्य च धात्वर्थेऽन्तर्भाव इति भावः ।

मुण्डं चैन करोतीति ॥ कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यो 'माणवक मुण्डमिच्छती'ति, नोभावपियुक्तावविति ॥ न कर्तव्य', उभावत्रेपियुक्तौ मुण्डो माणवकश्च ॥ कथम् ? ॥ न ह्यसौ मौण्ड्यमात्रेण सन्तोषं करोति माणवकस्यमसौ मौण्ड्यमिच्छति ॥ इहापि तर्हि न प्राप्नोति–'मुण्डयति माणवक'-मिति । अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च । न ह्यसौ मौण्ड्यमात्रेण सन्तोषं करोति ॥ किं तर्हि ? ॥ माणवकस्यनमसौ मौण्ड्यं निर्वर्तयति ॥

एवं तर्हि मुण्डादयो गुणवचना । गुणवचनाश्च सापेक्षा । तत्र वचनात्सापे-

---

प्र.]न च मुण्ड करोतीति युगपदुभयो करोतिकर्मत्वे विवक्षिते 'मुण्डयति बलीवर्द'-मिति प्रयोगो न भवतीत्यर्थ । कामन्तर्हीति । अत्रापि मौण्ड्यमेवेष्यते, माणवकस्तु तदाधारविशेषप्रतिपादनायोपात्त इति भाव । उभावत्रेति । माणवकस्य मौण्ड्यकरणेन सत्कार्यत्वादुभयो कर्मत्वे सापेक्षत्वादेकतरस्मात्प्रत्ययोत्पत्तिर्न भवतीत्यर्थ । गुणवचनाश्चेति । वचनसामर्थ्यात्सापेक्षेभ्योऽपि मुण्डादिभ्य प्रत्ययो भवति, क्यच्प्रत्ययस्तु निरपेक्षेभ्य पुत्रादिभ्य सावकाश इति 'माणवक मुण्डमिच्छती'त्यादौ सापेक्षेभ्यो न भवति । नन्वयमपि णिज्गुणमात्रविवक्षाया सावकाशो 'मुण्डयत्यय नापित '। प्रवीणो मौण्ड्यकरणे इत्यर्थावगमात्, ततश्च द्रव्यविशेषापेक्षायां प्रत्ययो न प्राप्नोति । नैष दोष । 'तत्करोती'ति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि

---

उ.]भवतीति। 'राजपुरुषो देवदत्तस्ये'त्यादाविवाऽसामर्थ्यादिति भाव । उभयो. कर्मत्वे इति। 'इषिनिरूपिते' इति शेष । सापेक्षत्वादिति। मुण्डस्य माणवक समानाधिकरण विशेषणमिति सापेक्षत्वमिति भाव । एतावता क्यन्ते गमक इव क्यन्यगमकत्वमिति दर्शितम् ॥ भाष्ये–माणवकस्यमसाविति । एवञ्च तदा माणवकस्येच्छाविषयत्ववत्करोत्यर्थविषयत्वमपीत्यभिमान । यद्यपि इषिफलेच्छाश्रयत्वान्नास्य वक्तुं युक्त न तु करोतिफलोत्पत्त्याश्रयत्वन्तस्येत्युभयो करोतियुक्तत्वाऽभावस्तथापि विशिष्य वेषेण तस्याऽपि तदाश्रयत्वमित्यभिमानेनैवं देशित शङ्क्यम् । एवञ्च मुण्डपदार्थस्य विशेष्यसापेक्षत्वेनाऽसामर्थ्यं । वृत्तावुभयत्राऽपि मुण्डशब्दो धर्मिपर इति सद्भाव । तमस्युपेत्य परिहरति–एवन्तर्हीति । गुणवचना इत्यस्य गुणप्रवृत्तिनिमित्तका इत्यर्थ । सापेक्षा इत्यस्य—परिच्छेद्यविशेषसापेक्षा इत्यर्थं । ननु मुण्डो नित्यसापेक्षोऽन्यथा वा ? । नाऽऽद्य, राजपुरुषादौ गमकत्वाभावे गमकस्य गुरुकुलादौ प्रवृत्तिदर्शनापि क्यजापत्ते । नाऽन्त्य णिचोऽप्यभावे, असमर्थे सामर्थ्यादिति शङ्कते–नन्विति। नैष दोष इति। 'वचना'-दिति भाष्यस्य तत्करोतीति सिद्धे वचनसामर्थ्यादित्यर्थ इति भाव । न च तत्करोतीत्यनेन प्रातिपदिकाद्धात्वर्थे सुबन्तादुत्पत्त्यर्थं सिद्धमस्तीति, दोषोद्भावनम्,

क्षणा वृत्तिर्भविष्यति ॥ अथ वा धातव एव मुण्डादयः ॥ न चैव ह्यर्थाः आदिश्यन्ते ॥ क्रियावचनता च गम्यते ॥ अथ वा नेदमुभयं युगपद्भवति—वाक्यं च प्रत्ययश्च । यदा वाक्यं न तदा प्रत्ययः । यदा प्रत्ययः सामान्येन तदा वृत्तिर्भवति । तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः, मुण्डयति, कम् ?, माणवकमिति ॥ मुण्डविशिष्टेन वा करोतिना समासमिच्छति ।

अथ वोक्तमेतत्—'नाऽत्र व्यापारोऽनुगन्तव्य' इति । तमकृत्वादिषु वृत्तिर्भविष्यति—'मुण्डयति माणवक'मिति ॥

---

प्र ] मुण्डादिभ्यो यथा स्यादित्येतमर्थमेव । धातव इति । संज्ञा धातवो मुण्डेभ्यस्तस्मैसूत्रादिव स्वार्थिको णिजित्यर्थः । न चैवेति । यद्यपि नियतविशेषाभिधायित्व मुण्डादीनां नैवापाप्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदव सीयत इत्यर्थः । यथा कण्ड्वादयो द्विविधास्तथा मुण्डादय इति भावः । मुण्डविशिष्टेनेति । पूर्वस्मिन्परिहारे कर्मविशेषाऽनपेक्षाया प्रत्ययोत्पत्तिरित्युक्तम् । अस्मिंस्तु यथा गां दोग्धि पय इति शुद्धस्य दुहेर्गवा पूर्वं सबन्धः, पश्चात्तु गोदुहिना पयस, एवं शुद्धं करोतिर्मौण्ड्येन सबध्यते, मौण्ड्यविशिष्टस्तु माणवकेनेत्युच्यते । अनेनैव न्यायेन 'माणवकं मुण्डमिच्छती'ति क्यच्प्राप्नोतीत्याशङ्क्याह—अथ वेति । व्यापारो नारम्भणीय यन्नमन्तरेणापीष्टस्य सिद्धत्वादित्यर्थः । क्यच्त्वगमकत्वान्न

---

उ ] णिचि भवतीत्याहुः ॥ सोऽत्र इति । उत्तरसूत्रस्थ गतुमङ्गलस्य पूर्वमाकर्षादिति भावः ॥

भाष्ये—न चैवेति शङ्का, क्रियावचनतेत्युत्तरमिति व्याचष्टे—यद्यपीति । यथा कण्ड्वादय इति । तथा च धातुभ्यो णिच्, प्रातिपदिकेन वाक्यमिति भावः ॥ भाष्ये परिहारान्तरमाह—मुण्डविशिष्टेन वेति । ननु पक्षद्वयेऽपि पूर्वं करोतेर्मुण्डसबन्धः, पश्चान्माणवकस्य सबन्ध इति प्रतीतौ को विशेषोऽत्र आह—पूर्वस्मिन्निति । 'अथवा नेदमुभय'मिति परिहारे इत्यर्थः । तत्र पूर्वं कर्मविशेषस्याऽनपेक्षत्वादसबन्धः । उत्तरत्र त्वपेक्षायामपि बहिरङ्गत्वान्न पूर्वं सबन्ध इत्युच्यत इति विशेष इत्यर्थः । गवा पूर्वमिति । प्रधानव्यापारेणाऽऽप्यमानत्वादिति भावः । पश्चात्त्विति । विशेषणव्यापारेणाऽऽप्यमानत्वादिति भावः । अन्ते स्थितवस्तुविभागाऽनुकूल्येऽपरो हेतुरित्यर्थः । मौण्ड्यविशिष्टस्तु माणवकेनेति । मौण्ड्याश्रयत्वार्थं व्यापार इति । भाष्येऽस्मिन्नपि मुण्डादिसूत्रारम्भसामर्थ्यादित्यत्र रूपो, 'धातव' इत्येव रूपो वा, 'नेदमुभय'मित्यादिरूपो वेत्यर्थः । अगमकत्वादिति । अयं भावः—प्रत्ययान्तो मुण्डादौ भावप्रधान इत्युक्तन्यायेन भवति वृत्तिः । क्यजन्तवृत्तौ तु धर्मिपर एव, अतस्तत्र नेच्छा स्यात्, असामर्थ्यात् । अत एव क्यजन्तात्तत्स्मादाचारार्थ

---

१ इह कचित्। २ 'मुण्डम'। ३ 'प्रधान'। ४ 'व्यापारानुकूल्यापार इत्यन्य'।

अथेह क्यचा भवितव्यम्-इष्ट पुत्र इष्यते पुत्रं इति ?॥ के चित्ताव दाहु -'न भवितव्य मिति॥ किं कारणम् ?॥ स्वशब्देनोक्तत्वादिति । अपर आहु -'भवितव्य मिति ॥ किं कारणम् ?॥ धात्वर्थेऽस्य क्यजिर्धीयते । स च

प्र ]भवति। नतूक्त हरिणा-'सदर्थीच्छाक्यच कर्म तदाचारक्यचा हृतम्।वाक्य वाच्यमतोऽव्यक्तेर्यथाऽभ्यास क्रमादिषु' ॥' इति । अथेहति ।इच्छास्यन्ता त्कर्मणि प्रत्ययोत्पत्ति प्रकारान्तरेणाशङ्कत । तथाहि-यथा क्यज्भवति तदेच्छा मात्रस्य क्यचाऽभिधानादस्य कर्मणोऽभिधानाय तद्वाचिना प्रत्ययेनोत्पत्तव्यम् । यथा पुत्रीयतीति कर्त्रभिधानाय तिपा । स्वशब्देनेति । इष्टशब्दसामानाधिकरण्या-त्पुत्र इत्यनेन निर्भुक्तविभिक्त्यपेक्षकर्मभावस्याऽर्थस्य प्रतिपादनादित्यर्थ । अयमर्थ

उ ]प्रतीतिरेव तदाह-सदर्थीति।न्याय्य सम्भवदर्थीत्यर्थ ।आचारक्यचा हृत-नि-रवशेषीकृत, निरूढतया तदर्थस्यैव प्रतीतिरित्यर्थ इति भाव । अतस्तद्वाक्यवाच्य मेव-'माणवक मुण्डमिच्छती'त्यनेनैव बोधनीयं न तु क्यजन्तेन । तत्र हेतुमाह-अत इति । क्यजन्तादव्यक्तेरित्यर्थ । यथा क्रमादिधातुष्वभ्यास पौन पुन्य वाक्येनैव गम्यत न तु यला, तत्प्रकृतिकस्य तस्य यौगिके निरूढेरिति भाव । अन्यत्रोक्त हरिणा—'सदर्थीच्छाक्यच कर्म वाक्य एव प्रयुज्यते। प्रसिद्धेन हृत-शब्दो भावगर्होऽभिधायिना ॥ अभ्यासे तुल्यरूपोऽपि न यङन्त प्रवर्तते' इति।एतन- वेदादिविषयोऽभ्यासो यथा क्रमादिषु व्यज्यत इत्यर्थ ।यत्रा विसर्गरहित पाठेनाऽभ्यासेन वर्णक्रमादिविषयाभिव्यक्ति'रित्यर्थो विवरणकारोक्तोऽपास्त । एत देवात्र मुख्यं समाधानमिति ध्वनयितुमस्य पुनरुक्त । एवञ्च मुण्डादिसूत्र प्रत्याख्यमेवेति बोध्यम् ॥

नन्वकर्मकेभ्य न्तस्यन्तात्कर्मणि प्रत्यया नेति प्रागुक्तमेव, तत्किम् 'अथेहे'त्य नेनाच्यत इत्यत आह-इच्छाक्यजन्तादिति । कर्मणोऽभिधानायेति । 'पुत्र' इति प्रथमान्तस्येष्टशब्दसामानाधिकरण्यात्कर्मत्वमद्रावेऽपि तस्य तद्वाचकवाऽभावात्तत्र क्यचि तत्र कर्मणोऽनभिधानादिति भाव । एवं सर्वत्राभिधानविषये बोध्यम् ॥ इष्ट शब्देति । एवञ्च तत्सामानाधिकरण्यात्तदर्थगतकर्मत्वस्य साधारकर्मवाचिना तनाऽ भिधानात् प्रतिपदिकार्थमात्रपरत्वेन 'पुत्र' इति सुबन्तस्य कर्मत्ववाचि ताऽभावात्त तत्र यत्नेति भाव । निर्भुक्तेति । इतरसामानाधिकरण्यात्प्राकर्मभावस्य न तु स्वत इत्यर्थ । 'निर्भुक्त'ेति पाठे स्ववाच्यतया त्यक्तकर्मभावस्येत्यर्थ । स्वश-ब्देनोक्तत्वादिति भाष्यस्य-स्वं कर्मत्वं, तद्वाचकशब्देन सा कर्मणोक्ते, 'पुत्र' इत्यस्य सुबन्तस्य कर्मत्ववाचकताऽभावाञ्च भवितव्यं तदर्थं क्यचेत्यर्थ ।

१ इति कर्मणि क्यच । २ 'अवर्त्तेनात्' पा० ।

धात्वर्थः केन चिदेव शब्देन निर्दिष्टस्य इति ॥ इह भवन्तस्त्वाहुः 'न भवि-तव्य'मिति ॥ किं कारणम् ? ॥ इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते—इष्टः पुत्र इष्यते पुत्र इति, नाऽसौ जातु चित्प्रत्ययान्तेन गम्यते ॥

॥*॥ क्यचि मान्ताव्ययप्रतिषेधः ॥*॥ क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः । इह मा भूत्—इदमिच्छति किमिच्छति। उच्चैरिच्छति नीचैरिच्छति। ॥*॥गोसमानाक्षरनान्तादिति वक्त ॥*॥ [गोसमानाक्षरनान्तादित्येके वक्तव्यमि-

ष ]यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव प्रयुज्यते पुत्र इष्ट इत्यादि, न तु क्यजन्तं, तस्याऽकर्मकत्वात् कर्मणि प्रत्ययानुत्पादात् ।

स च धात्वर्थ इति । अन्यथा प्रत्ययार्थेन दर्शयितुं वाक्यमुपादेयम् । तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यतां कर्मप्रत्ययो वा । प्रत्यये तूत्पन्नेऽकर्मकत्वात्कर्मप्रत्ययो न भवति । नाऽसौ जातु चिदिति । प्रत्ययान्तस्याऽकर्मकत्वात् कर्मणि प्रत्ययोत्पत्त्य-सम्भवादित्यर्थः । गोसमानाक्षरेति । अकारादयो दश समानाः । तत्र ऌवर्णान्तस्य प्रातिपदिकस्याऽसम्भवाद् ऋकारान्तस्य च, सतानां ग्रहणम् । अस्मिंस्तु न्यासेऽव्ययानि , वाच्यनीत्याद्यसिद्धिप्रसङ्गात् । भाष्यकारेण तु मतभेदप्रदर्शनायोपन्यासः कृतः ।

ष ]यदा क्रियाफलस्येति। तथा च विग्रहे फलस्य विशेष्यतया पुत्रीयतीत्यादौ व्यापा-रस्य विशेष्यतया भिन्नार्थत्वान्न तदर्थेऽयं क्यच् , किन्तु पुत्रमिच्छतीत्यत्रार्थ एव । कर्मणि च फलस्य विशेष्यत्वम्—इष्टः पुत्र इत्यादौ सामानाधिकरण्याऽनुरोधेनाऽवश्य मङ्गीकार्यमिति भावः । कर्मण इति । कर्मतात्पर्यविषयकस्येत्यर्थः । वस्तुत इत्य व्याख्या 'इष्ट भवन्त' इति मते उचिता । कर्मण इत्यस्य कर्मत्वविशिष्टबोधकस्ये-त्यर्थ इत्येवैतद्व्याख्योचिता । अस्मिन्मतद्वये तु वस्तुतः कर्मत्वविशिष्टो यस्तद्वा-चकादिति सूत्रार्थ इत्याशयः ॥[भाष्ये] इह भवन्त इति । सर्वत्र वृत्तिवाक्ययोः समा-नार्थत्वमेव । चित्रगुरित्यादेर्विग्रहेऽपि विशेष्यविशेषणभावव्यत्यासात्त्वमिति तदा-शयः ॥ भाष्ये—मान्ताऽव्ययानामिति । मान्तत्वं न सुबन्तविशेषणं, पुत्रीयतीत्यादे-रसङ्गत्यापत्तेः । किन्तु मान्तप्रकृतिकेत्यर्थकम् । तेन कमिच्छतीत्यादावपि नेति बोध्यम् ॥ तत्र ऌवर्णेति । यद्यप्यनुकरणे ऌकारान्त ऌकारान्त ऋकारान्त च सम्भवति तथापि तत्र क्यच प्रयोगदर्शनाऽभाव इत्यर्थः । ऋकारान्तस्य चेति । 'असम्भवा'दित्यपकर्षः । वस्तुतस्तादृशाऽनुकरणस्यैव लोके प्रयुज्यमानस्याऽभाव इति तात्पर्यम् । मतभेदेति । तथा चेदमसतमविप्रसन्नमिति भावः । अन्ये तु

१ 'स्त्वाहुः' पा० । २ 'इष्टे'ति क्वचित् । ३ 'रिच्छतीति' पा० ।
४ इष्ट इत्यादिति केचित् । ५ 'योगान्तरमि' पा० ।

स्याहु.]।गामिच्छति गव्यति।समानाक्षरात्–घटीयति पटीयति दधीयति मधूयति कर्त्रीयति । हर्त्रीयति । [समानाक्षरात् ] ॥ नान्तात्–राजीयति तक्षीयति ॥

काम्यच्च ॥ ३।१।९ ॥

किमर्थश्चकार ?॥१॥[चकार ]स्वरार्थ ॥ ॥चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनं,धातुस्वरेणाप्येतत्सिद्धम् ॥ ककारस्य तर्हीत्संज्ञापरित्राणार्थं आदितश्चकार कर्तव्य·। अत उत्तर पठति–॥२॥काम्यचश्चित्करणमनर्थक कस्येदर्थाभावात् ॥ ·॥ काम्यचश्चित्करणमनर्थकं ॥ ककारस्येत्संज्ञा कस्मान्न भवति ? ॥ 'इदर्थाभावात्' । इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ॥ ननु च लोप एवेत्कार्यम् ? ॥ अकार्यं लोप· । इह हि शब्दस्य कार्यार्थो वा स्यादुपदेश श्रवणार्थो वा । कार्यं चेह नास्ति । असति कार्ये यदि श्रवणमपि न स्यादुपदेशोऽनर्थक स्यात् ॥ नैतदस्ति प्रयोजनं, सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्यय· शेष आर्धधातुकसंज्ञा लभते । न चायं धातोर्विधीयते ॥ इद तर्हि प्रयोजनम् उपयङ्काम्यति । विर्गीति सम्प्रसारण यथा स्यात् ॥ एतदपि नास्ति प्रयोजनं, यजादिभिरत्र कित विशेषयिष्यामो 'यजादीनां य. कि'दिति ॥ कथ यजादीना कित् ?॥ यजादिभ्यो यो विहित इति॥ अथापि कथं चिदित्कार्यं स्यादेवमपि न दोष. । क्रियते न्यास एव द्विचकारको निर्देश.–'सुप आत्मन. क्यच्च्काम्यचे'ति॥अथ वा छान्दसमेतत् ।दृष्टाऽनुविधिश्छन्दसि भवति । न चात्र संप्रसारणं दृश्यते ॥

उपमानादाचारे ॥ ३।१।१० ॥

॥१॥ अधिकरणाच्च ॥१॥ अधिकरणाच्चेति वक्तव्यम् । इहापि यथा स्यात्

---

प्र.]काम्यच । आदित इति । अन्तेऽपि कृत आदिकृतफलमपादनादादित गम्यते । तथा हि यदाऽऽदौ क्रियते तदा ककारस्याऽनादित्वादित्संज्ञा न भवति । एवमन्तेऽपि कृताधिकारस्येऽन्तोदात्तत्वे सिद्धे नियमार्थं संश्रयते–'चिदेवाऽयं व्यपदेष्टव्यो न त्वनुबन्धान्तरेण कि'दिति । यजादिभ्यो यो विहित इति । अयं तु सुबन्ताद्विहित । अथापीति । यदा यजादिभि किंत विशेष्यते तदाचित्वेनैव यजादयो निर्दिश्यन्त इति भाव । अथ वेति। 'विजुपे छन्दसी'ति विषयश्छन्दसि विधानात्।

---

उ.]अजन्तेभ्यो गामसमानाक्षरेभ्य एव,अनुनासिकान्तेभ्यस्तु नान्तेभ्य एवेत्यस्याऽर्थः । अत एव 'रै शब्दः स्वच्छान्दस इत्युक्तं स्थानेऽन्तरतम सूत्रे भाष्ये।'गान्धर्वी'त्यादौ च न दोष । वानानि सुन्वनानि च 'न यर्वे' इति सूत्रे भाष्ये प्रयुक्तमित्याहु ।

काम्यच्च । ननु चवयाऽऽदित पाठे सूत्रभेद स्यादत आह–अन्तेऽपीति ।

---

१इदं प्रक्षिप्तम् । २'मनेदुर' पा० । ३'कार्येऽसति' पा० । ४'इदमस्ति' पा० ।

कुटीयति [1]प्रासादे । प्रासादीयति कुट्याम् ॥ [ अधिकरणाच्च ] ॥

कर्तुः क्यङ् सलोपश्च ॥ ३।१।११ ॥

सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्रैव सलोपस्तत्रैव क्यङ् स्यात् [2] । पयायते । इह न स्यात्–अपि काक श्येनायते ॥ नैतदस्ति । प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपो, यत्र च सकारं पश्यामीति । तद्यथा कश्चित्कञ्चिदाह–ग्रामे [3]भिक्षां चर देवदत्तं चानय । स ग्रामे भिक्षां चरति यदि च देवदत्तं पश्यति तमप्यानयति ॥ सलोपो वा ॥ सलोपो वेति वक्तव्यम् । पयायते पयस्यते ॥ ओजसोऽप्सरसो नित्यम् ॥ ओजसोऽप्सरसोर्नित्यं सलोपो वक्तव्यः । ओजायमानो यो [4]अहिं जघान । अप्सरायते । अपर आह–सलोपोऽप्सरस एव, पर्यस्यत [5] इत्येव भवितव्यम् ॥ कथमोजायमानो यो अहिं जघानेति ? ॥ [6]छान्दसः प्रयोगः, छन्दसि च दृष्टमनुविधीयते ॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः । अवगल्भते । अवगल्भायते । गल्भ ॥ क्लीबे–[7]विक्लीबते । विक्लीबायते । क्लीबे ॥ होडे–[8]विहोडते । विहोडायते ॥ [ होड ] ॥

प्र ]इह 'वाक्काम्यती ति सम्प्रसारणं किं कार्यमस्ति । तस्मात् पूर्वं परिहार आश्रयणीय इत्यतो स्वरूपग्रहणं तत्प्रत्यये कार्यविज्ञानम्' । [ काम्यच्च ] ।

उपमाना । कुट्यामिति । उपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षायामनेन प्रयोगासम्भवाद्वार्तिकारम्भः । [ उपमानादाचारे ] ॥

कर्तुः क्यङ् । सलोपविधौ 'रुत्तुं'रिति स्थानषष्ठी सकारेण कर्तुर्विशेषणात्तदन्तविधिसिद्धावात्ममायन इत्यादौ सलोपाऽभावः । सलोपसन्नियोगेनेति । एकवाक्यतया सन्नियोगार्थं च चशब्द मत्वा चोद्यते । वाक्यभेदमन्वाचये च चशब्दमाश्रित्य

उ ]नियमार्थतयाऽऽदिष्टफल सम्पन्नमित्यर्थः । वाक्काम्यतीति । 'क्विब्वचिप्रच्छ्या'ति वार्तिकेन क्विब्दीर्घाऽसम्प्रसारणानि । अस्य प्रयोगस्य सत्त्वे दृष्ट मान चिन्त्यम् । पूर्वपरिहार इति । यजादिभ्यो विहित इत्यर्थः । वाच् अम् इत्यवस्थायां सम्प्रसारणनाऽस्य यजादिभ्यो विहित । 'काम्यचश्चित्करणाऽऽनर्थक्य'मिति वार्तिके विरोधन 'पुत्रकाम्यती'त्यादौ 'सति शिष्टस्य स्वरः बलीयस्त्वा' दिस्वर एव यथा स्यादिति चित्त्व'मिति हरदत्ताक्रमपास्तम् । [ काम्यच्च ] ॥

कर्तुः क्यङ् । एकवाक्यतोपपादक–सन्नियोगार्थश्चेत्यादि । एतावतैव

१ 'प्रासादीयति कुट्या, कुटीयति प्रासाद इत्यत्रापि यथा स्यात्' पा० । २ 'तत्रैव स्यात्' पा० । ३ 'भैक्षं' पा० । ४ 'ऽहिं' पा० । ५ 'ओजस्यत' पा० । ६ 'छान्दसत्वादिदम्' पा० । ७ 'विक्लीव' पा० । ८ 'विहाड' पा० ।

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३।१।१२ ॥

हलो लोपसन्नियोगेनास्य क्यङ्विधीयते । तेन यत्रैव हलो लोपस्तत्रैव प्राप्नोति॥ नैष दोषः–प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टो हलो लोपः, यत्र च हल् पश्यामीति ॥*॥ भृशादिष्वभूततद्भावग्रहणम् ॥*॥ भृशादिष्वभूततद्भाव ग्रहणं कर्तव्यम् । इह मा भूत्–क्व दिवा भृशा भवन्तीति॥*॥ च्व्यप्रतिषेधा नर्थक्यं च भवत्यर्थे क्यङ्वचनात् ॥ ॥ च्विप्रतिषेधश्चाऽनर्थकः ॥ किं कारणम् ? ॥ 'भवत्यर्थे क्यङ्वचनात्' । भवत्यर्थे हि क्यङ्विधीयते ॥*॥ भवतियोगे च्विविधानम् ॥*॥ भवतिना योगे च्विर्विधीयते । तत्र च्विनोक्तत्वात्तस्यार्थस्य क्यङ् भविष्यति॥ डाजन्तादपि तर्हि न प्राप्नोति–पटपटायते । पटपटायति । डाजपि हि भवतिना योगे विधीयते, भवत्यर्थं क्यष् ॥*॥ डाचि वचन प्रामाण्यात् ॥*॥ डाचि वचनप्रामाण्याद्भविष्यति ॥ किं वचनप्रामाण्यम् ? ॥ 'लोहितादिडाज्भ्यः क्यष्'इति ॥ इह किं चिदक्रियमाणं चोद्यते किं चिच्च क्रिय

---

प्र ]भृशादिभ्यो । हल इति । हल्य भृशादयो विशेष्यन्ते तेन हलन्तानामेव क्यङ्लोपाभ्यां भवितव्यमित्यर्थः । प्रधानशिष्ट इति । वाक्यभेदेन सर्वेभ्यो भृशादिभ्यः क्यङ् विधाय हलन्तानां लोपो विधीयत इत्यर्थः । अन्यथाऽनर्थकः पाठः स्यादहलन्तानाम् । क्व दिवा भृशा भवन्तीति । रात्रौ भृशाऽऽलोका नक्षत्रादयस्ते दिवसे क्व प्रदेशे भवन्तीत्यर्थः । अत्राऽभूततद्भावोऽभावः । च्विनोक्तत्वादिति । च्विसहचारितेन भवतिनेत्यर्थः । डाचि वचनप्रामाण्यादिति। अप्रयुक्त एव भवतौ भवत्यर्थविवक्षायां वचनप्रामाण्याड्डाचं विधाय भवत्यर्थे क्यष्विधीयत इत्यर्थः ।

---

उ ]न विशेषः' इति 'हलन्तत्वात्' इति सूत्रस्थभाष्य सङ्गच्छते। अन्यथा गत्यादिहलन्त प्रकृतिके विशेषः स्यात्।अन्यहलन्तस्यन्वाचारत्वे नेति तदाशय ॥[कर्तुं क्यङ्]। भृशादिभ्यो । ननु भृशादीनां हलन्तानामेव सत्त्वात्तत्रैव प्राप्नोतीत्यस्य व्यावर्त्योऽभाव इत्यत आह–हल इति । आवृत्त्या विभक्तिविपरिणामेनेति भावः । अन्यथा हि सर्वत्र हलो लोपः स्यादित्यापादयेदित्याशयः । भृशाऽऽलोका इति । अधिकाऽऽलोका इत्यर्थः । भवत्यर्थे च्वेरविधानेन 'च्विनोक्तत्वा'दित्य सङ्गतमित्यत आह–च्विसहचरितेनेति । भाष्ये-डाजन्तादपीति । 'क्यष्'इति शेषः । वचनप्रामाण्यस्य क्यष्प्रवृत्ति हेतुत्वे क्यषन्तसमभिव्याहारे भवतेरपि प्रयोगः स्यादत आह—अप्रयुक्त इति । भवत्यर्थेति । 'कृभ्वस्तियोग' इत्यस्य डाज्विधावनुवृत्तस्य तदर्थत्वेन इत्यर्थः । त्रिविधौ तु शब्दयोग इत्येवार्थ इति भावः । कृभ्वस्तियोग इव क्यषोऽपि डाचीति ज्ञाप्यत इति वृत्तिग्रन्थस्यापि द- मेव तात्पर्यम् ।भाष्ये–अक्रियमाणमिति। अभूततद्भावग्रहणमित्यर्थः ॥ ननिवयुक्त-

मार्णं प्रत्याख्यायते ॥ न सूत्रभेदः कृतो भवति ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्त'मिह कस्मान्न भवति क दिवा भृशा भवन्ती'ति ? ॥ ॥ नञिवयुक्त-मन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ॥ नञ्युक्तमिवयुक्तं वा यत्किं चिदिह दृश्यते तत्रोऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते ॥ [किं कारणम् ? ॥ तथा ह्यर्थ-गतिः ]॥ तथा ह्यर्थो गम्यते । 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति । एवमिहाऽप्यच्वेरितिच्विप्रतिषेधादन्यस्मिन्न-च्व्यन्ते च्विसदृशे कार्यं विज्ञास्यते ॥ किं चान्यच्व्यन्तं च्विसदृशम् ?॥ अभूततद्भावः ॥

इह काश्चित्प्रकृतयः सोपसर्गाः पठ्यन्ते—अभिमनस् सुमनस् उन्मनस् दुर्मनस् । तत्र विचार्यते—भृशादिषूपसर्गाः प्रत्ययार्थविशेषणं वा स्यात्—'अभि-भवतौ सुभवतावुद्भवतौ दुर्भवता'विति । प्रकृत्यर्थविशेषणं वा,—'अभिमन-श्शब्दात् सुमनश्शब्दादुन्मनश्शब्दाद्दुर्मनश्शब्दा'दिति । युक्तं पुनरिदं विचार-यितुम् । नन्वनेनैवाऽसन्दिग्धेन प्रकृत्यर्थविशेषणेन भवितव्यं यावता प्राक्प्रकृते-पठ्यन्ते ॥ यदि हि प्रत्ययार्थविशेषणं स्युः प्राग्भवते. पठ्येरन् ॥ नेमे शक्याः

प्र.]यथान्यासमिति । 'अच्वे'रिति पर्युदासाश्रयेण दोषद्वयस्यापि परिहार इत्यर्थः । इह काश्चिदिति । यदा मन शब्देनाऽसमस्ता एव सुदुरभय इति पक्षस्तदा प्रत्य-यार्थविशेषणं ते भवन्ति । मन शब्दश्चाऽवृत्तिविषये तद्वति वर्तते । मनस्वी सुष्ठु भवति, उद्भवति, दुष्ठु भवति, आभिमुख्येन भवतीत्यस्मार्थे क्यङ्विधिः । अन्ये-त्वाहुः—प्रायर्थस्याऽत्र वृत्तिविषये भवतेर्ग्रहणं, तेन मन धर्म शोभनं प्राप्नोतीत्यादि-रर्थः क्यङन्तस्य भवति । यदा तु मन शब्देन स्वादीनां बहुव्रीहिरिति पक्षस्तदा प्रकृत्यर्थविशेषणं ते भवन्तीति विचारः क्रियते । प्राक्प्रकृतेरिति । प्रकृतेरेवान्यथा

उ ]मिति न्याये इत्युक्तमिति दृष्टान्तार्थम् । अन्यस्मिंस्तत्सदृशे इत्यनेनाऽभेदेऽपि सादृश्यमस्तीति सूचयति॥ प्राक्प्रकृते पाठेन प्रत्ययार्थविशेषणत्वपक्षोऽसम्भावितोऽत आह—यदेति । समस्तत्वाऽसमस्तत्वाभ्यां पक्षद्वयसम्भव इति भावः । 'असुमना सुमना भवती'त्यर्थस्य क्यङन्तात्प्रतीतेः समास एवाऽऽश्रयणीयोऽत आह—मन-शब्दश्चेति । तदर्थे मनुबादीनामेव साधुत्वाश्रयणयाऽपि प्रकृतिमात्रस्याऽसाधुत्वं स्यादत आह—अन्ये त्विति। असुमना सुमना भवतीत्यर्थस्तु पक्षद्वयेऽप्यार्थ इति भावः । मन.कर्मेति । मन वर्तृ शोभनं धर्म प्राप्नोतीत्यन्वयः ॥ प्रकृतेः प्राक्पाठे त्वाऽसमस्तसमस्तत्वाभ्यां पक्षद्वयोरपक्षेदनायेनाह—प्रकृतेरेवेति । अन्यथार्थबन्धे

१ 'ततो' । २ अयं पाठः क्वचिदपि नास्ति मन्त उ०. । ३ 'क्रियानाऽन्य-दन्यन्ते' । ४ 'वा'शब्द क्वचित् । ५ 'ननु तेना' पा० । ६ 'स्यात्' पा० ।

प्राग्भवतेः पठितुम्। एवं विशिष्टे हि प्रत्ययार्थे भृशादिमात्रादुत्पत्तिः प्रसज्येत। तस्मान्नैव शक्यं वक्तुम्। न चेदेव जायते विचारणा॥ कश्चात्र विशेषः?॥ ॥ ॥भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः ॥२॥ भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषो भवति। अभिमनायते। 'तिङ्ङतिङः' इति निघातः प्रसज्येत ॥ अस्तु तर्हि प्रकृत्यर्थविशेषणम् ॥*॥ सोपसर्गादिति चेदटि दोषः ॥*॥ सोपसर्गादिति चेदटि दोषो भवति। स्वभमनायतेति ॥ अचल्प सिद्धमुच्यते—'अटि दोषो भवती'ति ॥२॥ अड्यान्द्विर्वचने[1] ॥२॥ अड्ल्यब्द्विर्वचनेष्विति वक्तव्यम्। अटि उदाहृतम्। ल्यपि—सुमनाय्य। द्विर्वचने—अभिमिमनायिषते ॥ नैष दोषः, अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या। 'असङ्ग्रामयत शूर' इत्येवमर्थम्। तन्नियमार्थं भविष्यति 'सङ्ग्रामयतेरेव

प्र ]पूर्वभूता भवन्तीत्यर्थः। निघात इति। मन शब्दात् क्यङि कृते मनायत इत्यस्य निघ्नन्तस्य पदस्याऽतिङन्तात् स्यादेः पदादुत्तरत्वात्। प्रकृत्यर्थविशेषणत्वे तु सुमनायत इत्यादि निघ्नन्तं भवत इति तद्व्यतिरिक्तपदान्तराऽभावान्निघाताऽभावः। उपसर्गस्य तु धात्वन्तर्भावात्तेन पूर्वमडागमः प्राप्नुत। ल्यबन्ते च तस्याऽनुप्रवेशात्तद्व्यतिरिक्तपदाऽभावात्समासाऽभावाल्ल्यपोऽप्रसङ्गः। ल्यबन्तात्वच सति कृते सोपसर्गस्य द्विर्वचनप्रसङ्गः। अवश्यमिति। ग्रामशब्द एव युद्धं वर्तते सामान्यतोऽत्र

ट ] पश्चै। प्राग्भवतेः भवन्तीति भावः। बहुवीहिविशेषणमुक्तमिति भावः ॥ 'न चेदेव जायते विचारणे'त्यस्य 'समस्ताऽसमस्ताभ्या'मिति शेषः ॥

समासाऽभावादिति। चान्तेन समासाऽभावादित्यर्थः। धनन्पूर्व मनाभे विग्रनस्य को त्वविति सूत्रार्थ इति भावः। तत्राऽद्विर्वचनयोरनिष्टदेशे प्राप्ति, त्यप्स्वसिद्धिरेवेति भावः ॥ भाष्ये—अवश्यं सङ्ग्रामयतेरिति। सङ्ग्रामयते सोपसर्गाद्यथोत्पत्तिर्भवति तिङ, तथा णिजुत्पत्तिर्वक्तव्येत्यर्थः। अवश्यमित्यनेन चाऽस्य फलान्तरमपि सूचितम्। तच्च मम पूर्वमट्। अन्यथा 'तत्करोती'त्यनेन सिद्धे तदर्थं यत्नं स्पष्टमेव। तदेतमनुवदति—असङ्ग्रामयतेति। यद्यपि सङ्ग्रामशब्दे 'स' शब्दो नोपसर्गस्तथापि 'सोपसर्गा'दित्यस्य सोपसर्गसमानाकारादित्यर्थो बोध्यः।

ननु 'प्रातिपदिकाद्धात्वर्थ' इत्येव णिच् सिद्ध इति चेत् 'प्रचनतो'त्यादावुपसर्गसहितस्यैव धातुत्वा स्यात्वेनाऽत्रापि तद्विहितणिजन्तस्यैव धातुत्वबुद्धिकारणत्वात्। प्रकृत तु विशिष्टस्यैव प्रकृतित्वेनोपदेशात्स्यादिना वाचकत्वाच्च विशिष्टस्यैव धातुत्वापत्तिरिति तात्पर्यम्। तदाह—ग्रामशब्द एवेति। अनेनेतरद्योतकमात्र बोधितम्। सामान्यत इति। क्रियान्तरमुक्त्वा क्रियाविशेषद्योतकत्वस्य दृष्ट

१ 'मुच्यतेऽटि दोषो भवती'ति क्वचित्पाठः। २ इद हलम्।

सोपसर्गाद्वान्यस्मात्सोपसर्गा'दिति ॥

यदि नियम क्रियते स्वरो न सिध्यति ॥

एव तर्हि भृशादिषूपसर्गस्य पराङ्गवद्भाव वक्ष्यामि ॥

यदि पराङ्गवद्भाव उच्यते अड्व्यवाय द्विर्वचनानि न सिध्यन्ति ॥ स्वरविधाविति वक्ष्यामि ॥ एव च कृत्वाऽस्तु प्रत्ययार्थविशेषणमपि । ननु चोक्त-'भृशादिषूपसर्गं प्रत्ययार्थविशेषणमिति चेत्स्वरे दोष'इति ॥ स्वर पराङ्गवद्भावेन परिहृतम् ॥ अथ तर्हि प्रत्ययार्थविशेषणे सति दोष—क्यडोक्त त्वात्तस्यार्थस्योपसर्गस्य प्रयोगो न प्राप्नोति॥ किं कारणम् ?॥ उक्तार्थानामप्रयोग इति । तद्यथा— अपि काक श्येनायते'इत्यत्रै क्यडोक्तत्वादाचारार्थस्य आह

प्र ]चानुमानात् क्रियाविशेषद्योतक सशब्द । तथा च 'वा पदान्तस्ये'ति परसवर्ण विकल्पो भवति । उपसर्गसदृशाऽनर्थकशब्दान्तराऽवयव तु सङ्ग्रामशब्देऽभ्युपगम्य माने परसवर्णविकल्पो न स्यात्। तत्र 'ग्राम युद्ध'इत्येव वक्तव्य, सशब्दस्तु चोतक प्रयोगदर्शनाऽभ्यते । यथा 'इकस्मरणे' 'इडध्ययने' इत्यनयोरधि । नियमार्थस्तु सग्रामेतिपाठ । नियमार्थत्वे च प्रत्ययोत्पत्तावुपसर्ग पृथक्क्रियते । अतो धातो तदासमनन्तर्भावाच्चैष्टमडादि सिद्ध । प्रत्ययार्थविशेषणपक्षे तु विरोधादभूत तद्भावविषयत्व नाश्रीयते । असग्रामयतेति । सग्रामयतेरनुदात्तेत्त्वोऽव्य ।

उ.]येनाऽनापि युद्धक्रियाद्योतकत्वमनुमीयत इत्यर्थ । उपसर्गसदृशाऽनर्थकेति,— अनर्थकत्वमात्र निषिध्यते। तत्सदृशो निपात इत्यर्थ । इत्थमित्थम्—उपसर्गसमाना कारत्वेन निपातत्वादनर्थकस्यापि निपातस्य प्रातिपदिकत्वेन सुबन्तत्वात् ।

तत्रेति । युद्धे वर्तमानो यो ग्रामशब्दस्तस्मादित्युक्तिसामर्थ्येन सम्पूर्वाद्भ- विष्यति णिच्। तद्विशिष्टादेव च णिङ् भविष्यतीति भाव । नियमार्थ इति । 'सङ्ग्रामयतेरेव सोपसर्गाद्यथा णिङुत्पत्तिस्तथा प्रत्ययोत्पत्ति , अन्यस्मात्तु सोपस र्गाद्यथा णिङुत्पत्तिर्न तथा प्रत्ययोत्पत्ति'रिति नियमार्थ । तत्फलितमाह—प्रत्ययो त्पत्ताविति । प्रत्ययोत्पत्तिकाले पृथक्करणेऽपि सामर्थ्यात्तद्विषयत्वे लक्षणे 'सुबन्ता'दित्यत्र 'यस्माद्विहितस्तदादी'त्यत्राऽग्रहणया प्रत्ययोत्पत्तौ न दोष इति भाव । पृथक्करणाच्च जातसमासाऽभाव । अतएव 'सुमनायते'त्यादौ पुन न्तान्तत्व समासान्त्यमिद्धिरिति ज्ञेयम् । ननु प्रत्ययार्थविशेषणपक्षोऽसङ्गत , तत्र मनस्वी सुष्टु भवतीत्यायर्थेऽभूततद्भावाऽभावादत आह—प्रत्ययार्थेति । एवञ्च तद्विरोधादेव प्रत्ययार्थविशेषणपक्षोऽसङ्गत इति भाव । सङ्ग्रामयतेरनुदात्तेदिति । 'सङ्ग्राम युद्धे' इत्यत्राऽकारस्याऽनुदात्तत्वाऽनुनासिकत्वे प्रतिज्ञाये । अवयवे च तस्याऽचारि

१ 'मिति' । २ 'इय आप प्रयोगो' । ३ 'इति' । ४ 'टादिसिद्धि' ।

प्रयोगो न भवति ॥ अस्त्यत्र विशेष, एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते। इह पुनरनेकेन। तत्र भवायत इत्युक्ते सन्देह स्यात्–अभिभवतो सुभवतावुद्भवतौ दुर्भवतावीति। तत्राऽसन्देहार्थमुपसर्ग प्रयुज्यते ॥

यत्र तर्ह्येकेन–उत्पुच्छयते ? ॥

अत्राप्यनेकेन ॥ "पुच्छादुदसने पुच्छव्यसने पुच्छपर्यसने चे"ति ॥इति॥

## लोहितादिडाज्भ्यः क्यष् ॥ ३।१।१३ ॥

किमर्थं षकार ?॥+॥[षकारो]गुणवृद्धिप्रतिषेधार्थ ॥–॥ङिति चेति[3] गुणवृद्धिप्रतिषेधो यथास्यात् ॥ नैतदस्ति प्रयोजन, सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते। धातोश्च विहित प्रत्यय शेष आर्द्धधातुकसज्ञा लभते, न चाय धातोर्विधीयते। लोहितादीनि प्रातिपदिकानि ॥ सामान्यग्रहणार्थस्तर्हि ॥ क सामान्यग्रहणार्थेनार्थ ?॥'न क्ये' इति॥ नाय नान्ताद्विधीयते॥ इह तर्हि–'यस्य हल ' 'क्यस्य विभाषे'ति॥ नाय हलन्ताद्विधीयते॥इह तर्हि 'आपत्यस्य च तद्धिते नाति',' क्यच्व्योश्चे'ति॥ नायमापत्याद्विधीयते ॥ इह तर्हि 'क्याच्छन्दसी'ति॥'याच्छन्दसी'त्येव तद्वक्तव्य। चुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम्॥ इद तर्हि प्रयोजन–यत्तदक्तृयकार इति दीर्घत्वन्तत्र ङिद्ग्रहणमनुवर्तते तदिहापि यथा स्यात् लोहितायते इति ॥ किं पुन कारण तत्र ङिद्ग्रहणमनुवर्तते ? ॥ इह मा भूत्–उरया घृष्णुयेति ॥ यदि ङिद्ग्रहणमनुवर्तते पित्व-

प्र ]लोहितादि। भुरण्युरिति। कण्ड्वादियगन्तादुप्रत्यय। उरयेति। सुपा सुलुगिति

उ ]नार्थ्यात्समुदायविशेषकतति मात।तत्वकारस्याऽनुदात्त ताऽनुनासिकत्वप्रतिज्ञाने तत्सामर्थ्यादुच्चारणार्थऽस्यव्यवहितोत्तरस्य इत्वे लोपे उपस्थिते सात्तग्रामशब्दस्य तदन्तस्य वा लोके युद्धे वर्तमानताऽभावेन 'युद्धे योऽय ग्रामशब्द' इत्यनुवादाऽसम्भवन सम्पूर्णस्याऽत्वभेन च भद्राम युद्धे वर्तन ततश्च गिनियर्थं विशिष्पाठस्यानर्थकत्वेन कथ नियमार्थतामिति चेन्न द्वितीयमकार प्रश्लिष्य तस्याऽनुदात्तत्वाऽनुनासिकत्व प्रतिज्ञाने इति तत्तात्पर्यात्। अताऽनुनासिकत्व मात चिन्त्यम् भाष्यप्रयोगस्य पाणिनिसमनेपदत्तोपपत्तं ॥ भाष्ये–एवन्तर्हि भृशादिषूपसर्गस्येति। भृशादिषु पठितस्योपसर्गस्यान्वर्थ । तेन 'अभिभृशायते' इत्यादौ न निघात । 'देवदत्त सुमनायत'इत्यादौ च गोरपि 'तिङ्ङतिङ' इति निघात ॥[कर्त्तु क्यङ्]। लोहितादिडा । भाष्ये–गुणवृद्धीति । गणरत्नपठितेगन्तेभ्यस्त प्राप्ति ॥

१ च क्वचिन्न। २ इद लुप्त सम्प्रति। '॥+॥ षकारो गुणवृद्धिप्रतिषेधार्थ ॥–॥' इति वार्त्तिकमेतदिति गौडा । ३ 'ङितीति' पा०। ४ 'स्येतावद्' पा०। ५ लोहितायति पा०। ६ इति क्वचिन्न। ७ 'यदि तत्र' पा०।

मिति पितृ रीङ्भावो न प्राप्नोति । रीङ्भावे क्ङिद्ग्रहणं निवर्तिष्यते ॥

यदि निवर्तते कथमसूया वसूया च यजामह इति?॥ असूयतेरसूया वसूयतेर्वसूया ॥अथ वा छान्दसमेतत् । दृष्टानुविधिश्च छन्दसि भव[ती]ति॥ यदि च्छान्दसत्व हेतुर्नार्थ क्ङिद्ग्रहणेनाऽनुवर्तमानेन॥कस्मान्न भवति उरया धृष्णुयेति ? ॥ छान्दसत्वात् ॥ अथ वाऽस्त्वत्र दीर्घ च, छान्दसं ह्रस्व च भविष्यति । तद्यथा–'उपगायन्तु मां पत्नयो गर्भिणयो युवतय' इति ॥

अथ किमर्थ. षकारे ?॥[षकारो]विशेषणार्थ ॥क्व विशेषणार्थेनार्थ ?॥ 'वा क्यष' इति । वा यादिति ह्युच्यमाने–'पाश्या' अतोऽपि प्रसज्येत ॥ नैतदस्ति प्रयोजन परस्मैपदमित्युच्यते न चाऽत्र परस्मैपदं नाप्यात्मनेपद पश्याम ॥ सामान्यग्रहणाविघातार्थस्तर्हि भविष्यतीति॥क्व सामान्यग्रहणाविघातार्थेनार्थ ?॥ 'क्याच्छन्दसी'ति । याच्छन्दसीत्येव च[1] तद्वक्तव्यम् । चुरण्यु· तुरण्यु भुरण्युरित्येवमर्थम्॥~॥लोहितडाज्भ्य क्यष्वचनम्॥*॥लोहितडाज्भ्य क्यष्वक्तव्यः ।

प्र ]तृतीयास्थाने यादेश । पित्र्यमिति । पितुरागतमिति 'पितुर्यच्चे'ति यत्प्रत्यय । यदीति । यदि रीङ्भाव एव निवर्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्या पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिध्यति । असूयते कण्ड्वादियगन्त्याऽसूयेति । वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरम् । अथ वेति । वर्णव्यत्ययेन दीर्घ क्रियतइत्यर्थ । यदीति । अनेन वकार प्रत्याख्यात । इदानीं षकारप्रत्याख्यानाय विचार क्रियते–अथ किमर्थ इति । पाश्येति । 'पाशादिभ्यो य' इति समूहे यप्रत्यय । 'वा या'दिति सूत्र विध्यर्थं मन्यते । टापि कृतएकादेशस्यान्तवद्भावाद्यप्रत्ययान्तमेतत् । नैतदस्तीति । सामान्यविहितानामात्मनेपदस्मै पदानां नियमार्थं प्रकरणमित्यदोष । लोहितडाज्भ्य इति । आदिशब्द

उ.]पित्र्ये यति रीङ् । यस्येति लोप । ननु ङितीति निवृत्तावसूयेत्यपि सिद्धमत आह–यदीति ॥ उत्तरमिति ।असूयया धनेच्छया च यजामहे इति श्रुत्यर्थ । अप्रत्ययान्तटाबन्ताद्विभक्तेश्छान्दसो लुगिति भाव ॥ अथ वेति पक्षे प्राणैरसुभिश्च यजामहे इत्यर्थ । भाष्ये नार्थ. क्ङिद्ग्रहणेनेति । अत एव 'ज्यादादीयस' इत्यस्याऽप्रवृत्तपरिभाषाज्ञापकत्व सङ्गच्छते ॥ नियमार्थमिति । ननु नियमार्थत्वेऽपि पाश्याशब्दादिशब्देभ्य आचारक्विबन्तेभ्य पक्षे तङ् स्यात्तन्मा भूदित्यर्थं षकारोच्चारणमिति चेन्न,एतद्भाष्यप्रामाण्येन सुप्भूताऽनुबन्धमन्तद्वा निमित्तमादायाऽऽचारक्विबन्ते एतत्प्रकरणाऽप्रवृत्ते । अनभिधानादीदृशे विषये आचारक्विपोऽभाव एवेत्यन्ये ॥

१ च क्वचिन्न । २ ॥*॥ 'षकारो विशेषणार्थ ' ॥ ॥ इति वार्त्तिकम् । ३ इद क्वचिन्न । ४ 'अत्रापि' पा० ।

कष्टकृच्छ्रगहनेभ्य कण्वचिकीर्षायामिति वक्तव्यम् । सत्रे—सत्रायते । सत्र ॥ कक्ष—कक्षायते । कक्ष ॥ कष्ट कष्टायते । कष्ट ॥ कृच्छ्रे—कृच्छ्रायते । कृच्छ्र ॥ गहन—गहनायते । गहन ॥ अपर आह—॥ ॥ सत्रादिभ्यश्चतुर्थ्यन्तेभ्य क्रमणे ऽनार्जवे क्यङ् ॥१॥ [सत्रादिभ्यश्चतुर्थ्यन्तेभ्य क्रमणेऽनार्जवे क्यङ्] वक्तव्य । तान्येवोदाहरणानि ॥ सत्रादिभ्य इति किमर्थम् ? ॥ कुटिलायाऽनुवाकाय क्रामति ॥ चतुर्थ्यन्तेभ्य इति किमर्थम् ?॥ अत्र कष्ट क्रामति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । नैनेऽव्ययान्तनिपातनम् ॥ किं तर्हि ?॥ तादर्थ्ये एषा चतुर्थी, कष्टाय यत्प्रातिपदिक, कष्टार्थे यत्प्रातिपदिकमिति ॥

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ ३।१।१५ ॥

रोमन्थ इत्युच्यते कोऽयं[7] रोमन्थो नाम?॥ उद्गीर्णस्य वाऽवगीर्णस्य वा

प्र ]दयोऽत्र वृत्तिविषये पापपर्यायाः । कण्व पापमुच्यते। कुटिलायेति। दुरध्येयत्वा दनुवाकस्याऽनार्जवमस्तीति भाव । अत्र इति । अनार्जवयुक्त पन्थान गच्छती त्यर्थ । कष्टाय यदिति । कष्टलक्षणार्थप्रतिपादनाय यत्प्रातिपदिक प्रयुज्यते तस्मात् क्रमणेऽर्थ क्यङ्भवतीत्यर्थ । क्रमणविशेषश्चाऽनार्जवमभिधानशक्तिस्वाभाव्याल्लभ्यते। व्यवस्थितविभाषाविज्ञानाच्च पापादिभ्योऽतिप्रसङ्गाऽभाव । [कष्टाय क्रमणे] ।

कर्मणो । उद्गीर्णस्येति । मुखप्रदेश आकृष्टस्येत्यर्थ । अवगीर्णस्येति ।

उ ]कर्मणे' इति कर्मपदमप्रयुक्तम्। अत एव सूत्रार्थव्याख्यानोत्तरम्—'अत्यल्पमिदमुच्यते कष्टाय क्रमणे इति, सत्रादिभ्य कण्वचिकीर्षायामिति वक्तव्य'मित्युत्तरभाष्य सङ्गच्छते। पापचिकीर्षायां गम्यमानायामित्यर्थ । न च चिकीर्षा उत्साह एव, तस्या गम्यत्वे 'क्रामती'ति परस्मैपदप्रयोगाऽनुपपत्ति , गमनरूपक्रमणपदार्थेनोत्साहस्य गम्यत्वेऽपि क्रमेस्तदर्थत्वाऽभावात् । नव्यास्तु 'वृत्तिसर्ग तायनेषु' इत्यादौ क्रमेरुत्साहार्थत्वमेवाऽऽश्रित्य चिकीर्षाया एवोत्साहरूपाया प्रत्ययार्थत्वमाश्रित्य 'क्रमन' इत्यात्मनेपदमप्रयुक्त, तद्भाष्यविरुद्धम् ।अनार्जवमेव क्रमणमिति । अनार्जवविषयमेव क्रमणमित्यर्थ । तद्ध्वनयन् वक्ष्यति—अनार्जवयुक्त पन्थान गच्छतीत्यर्थ इति । अपर आहेत्यनेन च परस्पर वाक्यानां व्याख्येयव्याख्यानभावो गम्यत इति न वार्त्तिकविरोध ॥ व्यवस्थितेति । ऽनाभिधानादिति तत्त्वम् ॥ [ लोहितादिडा ] ।

कर्मणो रोम।भाष्ये अवगीर्णस्य वा मन्थ इति ।मन्थो—मथनम् । तच्चोद्गीर्णस्य चर्वणम् । अन्यस्याऽशनरूप ॥ हनुचलन इत्युभयोद्गीर्णविषय एव प्रयोग ।

१ इद क्वचिन्न । २ इद वार्तिकव्याख्याभाष्यमित्यन्ये । अपरपठित वार्तिकमित्यपरे । ३ इद व्याख्यान लुप्त स्यादिति गौडा ॥४ 'क्रामत्यनुवाकाय' पा० । ५ 'मेद' पा० । ६ 'कष्टाऽर्थे' । ७'को रोम' पा० ।

मन्थ [रोमन्थं इति।]यद्येव,॥ ॥ हनुचलने॥ ॥ हनुचलन इति वक्तव्यम्। इह मा भूत्–कीटो रोमन्थं वर्तयतीति॥ नतर्हि वक्तव्यम् ?॥ ॥ न वाऽनभिधानात् ॥ ॥ न वा वक्तव्यम् ॥ कस्मान्न भवति–कीटो रोमन्थं वर्तयतीति ?॥ 'अनभिधानात्' ॥ ॥ तपसः परस्मैपदं च ॥*॥ तपसः परस्मैपदं चेति वक्तव्यम्। तपश्चरति तपस्यति ॥ कथं 'तपस्यन्ते लोकनिर्गामिनःषते ?॥ आत्मनेपदं भविष्यति। [कर्मणो रोमन्थतपोभ्याम्]॥

## बाष्पोष्मभ्यामुद्वमने ॥ ३।१।१६ ॥

॥*॥ फेनाच्च॥*॥फेनाच्चेति वक्तव्यम्। फेनायते। [बाष्पोष्मभ्यामुद्व]।

## शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे ॥३।१।१७॥

॥*॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् ॥*॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। अटा–अटायते। [अटां]॥ अट्टा–अट्टायते। [अट्टां]॥शीका–शीकायते। [शीकां]॥ कोटा–कोटायते। [कोटां]॥ पोटा–पोटायते [पोटां]॥ सोटा–सोटायते। सोटां॥ प्रुष्टा–प्रुष्टायते। प्रुष्टां॥ प्लुष्टा–प्लुष्टायते। प्लुष्टां॥ ॥सुदिनदुर्दिनाभ्यां च ॥*॥ सुदिनदुर्दिनाभ्यां चेति वक्तव्यम्। सुदिनायते दुर्दिनायते॥ ॥ नीहाराच्च ॥ ॥ नीहाराच्चेति वक्तव्यम्। नीहारायते॥ [शब्दवैरकलहाभ्रकण्वमेघेभ्य]।

## सुखादिभ्यः कर्तृवेदनायाम् ॥ ३।१।१८ ॥

कर्तृवेदनायामिति किमर्थम् ? ॥ इह मा भूत्–सुखं वेदयते प्रसाधको देवदत्तस्य ॥ 'कर्तृवेदनाया'मित्युच्यमानेऽप्यत्र प्राप्नोति ॥ किं कारणम् ? ॥ 'कर्तु'रिति च कर्तरि षष्ठी, 'वेदनाया'मिति चायं भावे। स यथैवात्मनो

प्र]अपानप्रदेशानि मूत्रस्येत्यर्थः। हनुचलन इति। हनुचलनसहचरिते चर्वितस्य मुखप्रदेशं आकृष्य यच्चर्वणं तत्र यथा स्यादित्यर्थः। कीट इति। अपानप्रदेशान्नि–मूत्रप्रभृतीन्यर्थः। अनभिधानादिति। रोमन्थायत इति क्यङन्तेन लौकिके प्रयोगे चर्वितचर्वणमेवाभिधानं न तदन्तरस्येत्यर्थः। [कर्मणो रोमन्थ]।

उ]सुखादयोऽपि–सहचरितमिति। अभ्यासीत्यर्थं इति। वर्तुः करोतीत्यर्थं इत्यन्ये॥ निर्वर्तिते। एतस्य तत्र प्रयोगाऽभावान्कि तपश्चरत्यर्थेन यत्नेनेति भाव॥

सुखादिभ्य क। भाष्ये–सुखं वेदयत इति। सुखप्रसादादिना देवदत्तस्य सर्व प्रसाधको वेदयत इत्यन्वयः॥ यद्यप्यन्तरङ्गत्वाकारकत्वेन वेदनायामन्वयो

१ इदं क्वचिन्न। २ इदं वार्तिकं क्वचिन्न। ३ 'न वक्तव्य'। ४ 'अट्टा'। ५ 'प्रुष्ट'स्थाने क्वचिन्न। ६ अयं पाठो लुप्त। ७ 'सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्'। ८ वेदयति सार'। ९ यदि क्वचिन्न। १० 'चात्मनो'।

वेदयतेऽथापि परस्य, कर्तृवेदनैवाऽसौ भवति ॥ न कर्तृग्रहणेन वेदनाऽभिसम्बध्यते ॥ किं तर्हि ? ॥ सुखादीन्यभिसम्बध्यन्ते—'कर्तुर्यानि सुखादीनी'ति ॥

नमोवरिवश्चित्रङः क्यच् ॥ ३।१।१९ ॥

॥*॥ नमसः क्यचि द्वितीयानुपपत्तिः ॥*॥ नमसः क्यचि द्वितीया नोपपद्यते—नमस्यति देवानिति ॥ किं कारणम् ? ॥ नमःशब्देन योगे चतुर्थी विधीयते सा प्राप्नोति ॥ * ॥ प्रकृत्यन्तरत्वात्सिद्धम् ॥*॥ [ प्रकृत्यन्तरत्वात्सिद्धमेतत् ] । नमःशब्देन योगे चतुर्थी विधीयते, नमस्यतिशब्दश्चायम् ॥

ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति तेन योगे प्राप्नोति ॥ नैष दोषः । अर्थवतो नमःशब्दस्य ग्रहणं, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान् ॥

अथ वोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया विभक्तिर्भविष्यति॥

॥*॥ क्यजादिषु प्रत्ययार्थनिर्देशः ॥*॥ क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः ॥

---

प्र ]सुखादिभ्य । किं तर्हीति। वेदनायाः कर्तारमन्तरेणाऽभावात् । कर्तृग्रहणसामर्थ्यात् सुखादीनि विशेष्यन्ते । कर्तृग्रहणं च 'सुपां सुलु'गिति षष्ठ्युक्ता निर्दिष्टम् । ततश्च वेदयिता यदा स्वसम्बन्धीनि सुखादीनि वेदयते तदा प्रत्ययो, नान्यदीयसुखादिवेदने । [ सुखादिभ्यः कर्तृवेदनायाम् ]॥

नमो वरिव । प्रकृत्यन्तरत्वादिति । 'नमस्ये'ति धातुं व्युत्पादयितुं निपातनमःशब्दसदृशशब्दान्तरावयवकल्पना क्रियते । परमार्थतस्तु अविद्यमानावयवोऽयं नमस्यशब्दः पूजावाची प्रकृत्यन्तरमित्यर्थः । ननु चेति । 'स एवाय'मिति प्रत्यभिज्ञानान्निपात एवाऽयमिति भावः । अर्थवत इति। नमस्यशब्दस्य समुदायस्यैवाऽर्थवत्त्वादिति भावः । अथ वेति । अर्थवत्त्वाभ्युपगमेन नमस्कारेण पूजयतीत्यर्थाङ्गीकारेण परिहारान्तरम् । चतुर्थ्यास्तु 'नमोऽस्तु देवेभ्य' इत्यादिरवकाशः । 'नमस्करोमि नारायण'मित्यत्रापि कारकविभक्तिरेव भवति । क्यजादिष्विति । करण-

---

उ ]न्याय्यस्तथापि सामर्थ्यात् सुखादिभिरन्वय इत्याह—वेदनाया इति।समस्तस्याऽन्यत्राऽन्वयाऽसम्भवादाह—सुपां सुलुगिति। 'वेदना'शब्दे 'विद चेतने'ति चौरादिकण्यन्तात् 'ण्यासश्रन्थ' इति युच् । नान्यदीयेति । सुखप्रसादादिना लिङ्गेनेति भावः ॥

नमोवरि । 'नमस्य'शब्दस्य प्रकृत्यन्तरत्वेऽपि 'नमः'शब्दान्तस्य विधानेन तद्योगे चतुर्थी स्यादत आह—नमस्येतीति॥ निपात एवेति । अव्ययस्योपलक्षणमेतत् । अन्यथा 'साक्षात्प्रभृतीनी'त्यनेन कृञ्योगे एव च्व्यर्थे एव च निपातत्वविधानादत्र तदभावेनाऽसङ्गतिः स्यात् ॥ अर्थवत्त्वादिति । तस्य शुद्धस्यैव शब्दैकदेशस्यानर्थकत्वादिति भावः ॥ इत्यर्थाङ्गीकारेणेति । अनेनैव सूचयति—'नाऽयम

---

१ इति क्वचित्। २ इदं क्वचित्। ३ इदं त्रुटितं भवेत्।

[ ॥ ~ ॥ 'नमस पूजायां' 'वरिवस परिचर्यायां' 'चित्रङ् आश्चर्ये' 'भाण्डात्समाचयने' 'चीवरादर्जने परिधाने च' 'पुच्छादुदसने व्यसने पर्यसने च' ॥ ॥ ] १ नमस पूजायां वरिवस परिचर्यायां चित्रङ आश्चर्ये भाण्डात्समाचयने चीवरादर्जने परिधाने च, पुच्छादुदसने व्यसने पर्यसने चेति ॥ किं प्रयोजनम् ? ॥ ॥ ॥ क्रियावचनं साधनम् ॥ ॥ क्रियावचनता यथा स्यात् । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति–'क्रियावचनाः क्यजादय' इति, यदयं 'सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ धातुसंज्ञावचनं एतत्प्रयोजनं 'धातो'रिति तव्यदादीनामुत्पत्तिर्यथा स्यात् । यदि चाऽत्र क्रियावचनता न स्याद्धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्यु ॥ किं कारणम् ? ॥ साधने तव्यदादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाया अभावात्साधनाऽभाव । साधनाऽभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्यु । पश्यति त्वाचार्य –'क्रियावचना क्यजादय' इति, ततः 'सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति ॥ ननु चेदं प्रयोजनं स्यात् 'परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामी'ति ॥ न परसाधने उत्पत्त्या भवितव्यम् ॥ किं कारणम् ? ॥ 'साधन'मिति सम्बन्धिशब्दोऽयम् । सम्बन्धिशब्दाश्च

प्र ] प्रहृत्वस्य वेदनाग्रहणेन व्याख्यानादनभिकारे स्वार्थे प्रत्ययप्रसङ्ग इति वचनम्। वरिवस इति। सपर्या–सेवा। 'परिचर्याया'मिति पाठान्तरम्। परसाधन इति। शब्दान्तरवाच्याया क्रियाया यत्कर्मादिकारकं तत्र तव्यादीनां 'कर्तु पश्ये'त्यादौ द्वितीयादीनामिव स्वार्थिकत्वाद्व्यवधायिकेऽपि क्यजाद्यन्तानामुत्पत्ति स्यादेवेति भाव । न परसाधन इति। द्वितीयादीनां प्रातिपदिकाद्विधानात्तस्य च द्रव्यवचनत्वाद्वचनप्रामाण्यात् परसाधन उत्पत्तिर्भविष्यतीति। तव्यादयस्तु धात्वन्तरेषु क्रियावाचिषु स्वसाधने सावकाशा

उ ] ऽङ्ग प्रतीयते, किन्तु वरिवस्यति इत्यादिभ्य सपर्यादिमात्रप्रतीतिरित्यस्मात् पूजामात्रप्रतीतिरित्याह एव समाधिरत्र युक्त, यथन्त्वेरथेति दति ॥ करणपदाऽनुवृत्त्या क्रियावाचित्वे नियावपि प्रयोगवशादेव तद्विशेषप्रतीतिर्भविष्यतीति किमेतेनेत्यत आह–करणग्रहणस्येति । भाष्ये–साधने तव्यदादय इति । भावोऽपि क्रियाल्प एवेति भाव ॥ शब्दान्तरेति । स्वार्थिकत्वात्क्यजाद्यन्तानां द्रव्यवाचित्वेऽपि शब्दान्तरवाच्यक्रियाकारके तव्यादीनामुत्पत्ति स्यादेवेत्यन्वय । तत्र दृष्टान्तो–धृक्ष्मित्यादि ॥ तव्यादयस्त्विति । एवञ्च धातुसंज्ञाविधानमेवैषां क्रियावाचकत्वे मानमिति भाव ॥ भाष्ये अथ वा धातव एवेति । क्रियावचना एवेत्यर्थ । क स्तर्हीति ।

१ इदं दृष्टम् । २ 'सपर्यायां' पा० । ३ इदं क्वचिन्न । ४ 'वा' पा० । ५ 'क्रियाऽभावा' पा० । ६ इदं पदं क्वचिन्न । ७ 'भवति' ।

पुनरेवमात्मका यदुत संबन्धिनमाक्षिपन्ति। तद्यथा 'मातरि वर्तितव्यं' 'पितरि शुश्रूषितव्य'मिति। न चोच्यते 'स्वस्यां मातरि' 'स्वस्मिन्वा पितरी'ति। संबन्धाच्चैतद्गम्यते—'या यस्य माता' 'यस्य यश्च पिते'ति। एवमिहाऽपि संबन्धादेतद्गन्तव्यं—'यस्य धातोर्यत्साधन'मिति॥ अथ वा धातव एव क्यजादयो, न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते। कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति। येनैव यत्नेनापि हेतुना पचादयः क्रियावचनास्तेनैव क्यजादयोऽपि। एवमर्थं चाचार्यश्चित्रयति,—'क्वचिदर्थानादिशति, क्वचिन्ने'ति॥ एवमप्यर्थादेशनं कर्तव्यं—कथमिमे अबुधा बुध्येरन्निति॥ अथ वा शक्यमर्थादेशनमकर्तुम्॥ कथम्?॥ करण इति वर्तते। करणं च करोतेरर्थः। करोतिश्च क्रियासामान्ये वर्तते। [ नमोवरि ]॥

**मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१॥**

इमौ हलिकली स्त इकारान्तौ—हलिः कलिः। अस्ति हल्शब्दः कलशब्दश्चाऽकारान्तः, कयोरिदं ग्रहणम्?॥ याविकारान्तौ, तयोरत्वं निपात्यते॥ किं प्रयोजनम्?॥ *॥ हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्॥१॥ हलिकल्योरत्वनिपातनं क्रियते॥ [ किं प्रयोजनं?॥ 'सन्वद्भावप्रतिषे-

---

प्र ]काशा परसाधने नोपयन्त इत्यर्थः। अथ वेति। अभिधानशक्तिस्वाभाव्यादन्तरेणाप्यर्थादेशनं विशिष्टक्रियावचनत्वस्य सिद्धत्वादित्यर्थः। चित्रयतीति। 'चित्र वैचित्र्यकरणे' इति चुरादेरस्य रूपम्। अनेकं मार्गमाश्रयतीत्यर्थः। क्रियासामान्य इति। सामान्येन च विशेषाणामाक्षेपात्कश्चित् प्रत्ययः क्वचिद्विशेषे भवतीत्यर्थः। न च वेदनाग्रहणेन करणस्य विच्छेदः, तयोर्विरोधाऽभावात्। [ नमोवरिव ]।

मुण्डमिश्र। कयोरिदं ग्रहणमिति। इकाराकारान्तयोः कृतात्वयोर्ग्रहणमुताऽकारान्तयोरेवेति प्रश्नः। किं प्रयोजनमिति। 'हलिकली' इत्येव कस्मान्न क्रियत-

---

उ ]पचादीनामर्थरहितानामेव पाठात्। क्वचिदर्थानिति। अनेकान्। क्वचिन्नेत्येकमित्यर्थः। क्वचिन्नेति। एकमपि नादिशतीत्यर्थः॥ एवमप्यर्थादेशनमिति। 'नमस पूजाया'मित्यादि। बोध्येरन्निति। निश्चितप्रेरणात्स्वार्थे णिच्। बुध्येरन्नित्येव क्वचित्पाठः।

मुण्डमिश्र। निर्देशादेवाऽकारान्तनिर्णयेन प्रश्नाऽनुपपत्तिरत आह—किमिकारेति। भाष्ये—इमाविति। समानार्थावित्यर्थः॥ यद्यप्यकारान्तयोरेव ग्रहणेऽपि तयोर्नियमार्थत्वादिकारान्ताभ्यां णिजभावेन सर्वदोषपरिहारोऽस्ति तथाप्येकदेश्याह भाष्ये—याविति। नियमार्थत्वे तु सजातीयानुपूर्वीकानामेतदर्थकानामेव हलकल्योरेवे'ति। प्रकाराऽन्तरेणाप्येकदेश्युक्तिसमन्वयाऽनुपदं वक्ष्यते॥ भाष्ये—वृद्धिरपि नित्येति।

---

१ इदं क्वचिन्न। २ 'यश्च यस्य'। ३ 'यत्नेनापि' पा०। ४ शक्यमेवार्था' पा०।

धार्थं[1]] । सन्वद्भावो मा भूदिति । अचहलत्, अचकलत् ॥ नैतदस्ति प्रयोजनम् । इकारलोपे कृते 'अग्लोपिना ने'ति प्रतिषेधो भविष्यति ॥ वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्ग भवति ॥ इदमिह सम्प्रधार्यं—वृद्धिः क्रियतामल्लोप इति, किमत्र कर्तव्यम् ? ॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि प्राप्नोति ॥ [ वृद्धिरपि नित्या । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति]॥ अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम् । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति'॥ वृद्धिरप्यनित्या॥ अन्यस्य कृते लोपे प्राप्नोत्यन्यस्याऽकृते । 'शब्दान्तरस्य च प्राप्नुवन्विधिर

---

प्र ]इत्यर्थः । शब्दान्तरस्य चेति । यद्यपि वृद्धौ कृतायामपि लोपस्य प्रवृत्तिस्तथापि वाचनिकं तस्याऽनित्यत्वम् । अत्र वा अन्यस्य प्रवृत्तावप्यन्यस्य स्थानिनोऽप्रवृत्त्या लोपस्याऽनित्यत्वम् । अन्यस्य कृते लोप इति । 'अत उपधाया' इत्यनेनाऽकारस्येत्यर्थः । ननु लोपस्य स्थानिवद्भावात्कथमकारस्य प्राप्नोति ? । नैष दोषः । प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः क्रियते । पूर्वस्य विधौ स्थानिवद्भावविधानात् । अप्राप्तौ तु पूर्वविधेरभावात्स्थानिवद्भाव एव न स्यात् । यद्यपि भिन्नलक्षणा भिन्नस्थाना च वृद्धिस्तथापि वृद्धिशब्दवाच्यत्वादभेदमाश्रित्य शब्दान्तरप्राप्त्या वृद्धेर्नित्यत्वं कथितम् । तत्त्वतस्तु लोपे कृते वृद्धेरप्राप्त्याऽनित्यत्वं वक्तव्यम् । न्यायस्तूपपादनाय त्वन्यथाऽभिहितम् । सूत्र

---

उ ]कार्यमात्रं नियतमिति भावः । वाचनिकमिति । 'शब्दान्तरस्ये'तिवचनमिति भावः । वस्तुतस्तदपि न्यायसिद्धमित्याह—अथ वेति । प्राप्तौ सत्यामिति । अत्र तूभयोरनित्ययोः परत्वादन्त्यस्यैव वृद्धिर्न तूपधाकारस्येति भावः । तदनाश्रयणाऽपि समाप्तिमित्यत्र तात्पर्यम् ॥ ननु पूर्वमन्त्यवृद्धिप्राप्तावपि लोपे उपधावृद्धिप्राप्तिरिति नैतस्या अनित्यत्वमिति शङ्कते—यद्यपीति । भिन्नस्वभावेति । भिन्नस्थानिकेत्यर्थः । वस्तुतोऽचोऽञ्णितीत्यस्य लोपेन बाधेऽपि 'अत उपधाया' इत्यस्याऽप्रवृत्तिरेव स्थानिवत्त्वेन वाच्या, 'अचो ञ्णिता'त्यस्य चाऽनित्यत्व लोपे कृतेऽप्राप्त्यैवेत्याशयेनाह—तत्त्वतस्त्विति । न्यायेति । पूर्वोक्तेत्यर्थः । परन्त्विदम्भाष्यमेकदेश्युक्तिः, भिन्नलक्षणाया भिन्नस्थानिकाया वृद्धेर्नित्यत्वोक्ते सिद्धान्तयुक्तित्वाऽभावात् । कृते लोपे स्थानिवद्भावेन वृद्धेरप्राप्तेरपि तदुक्तेस्तदुक्तित्वाऽभावात् । अत एव 'णौ चङि' ति सूत्रे लोपस्य शब्दान्तरप्राप्त्या वृद्धेर्लोपेनैरप्रवृत्त्योभयोरनित्ययोः परत्वाद्वृद्धिरित्याशङ्क्य 'नाऽग्लोपी'ति सूत्रेऽग्ग्रहणाद्वृद्धेर्लोपो बलीयानिति सिद्धान्तितम् । तेनाऽत्रास्यैकदेश्युक्तित्वं स्पष्टमेवोक्तम् । इदमेवाभिप्रेत्य सप्तमे कैयट आह—'अना

---

१ 'क्रियतां लोप' पा० । २ 'नित्यत्वाल्लोप' । ३ अयं पाठः क्वचिन्न ।

नित्यो भवति'॥ उभयोरनित्ययो परत्वाद्वृद्धि । वृद्धौ कृतायां लोप', तत्रा-स्लोप्यत्र भवति ॥ अल्वे पुन. सति वृद्धिः क्रियतां लोप इति, यद्यपि पर-त्वाद्वृद्धिर्वृद्धो कृतायामप्यनेन लुप्यते । तस्मा सुष्ठूच्यते–'हलिकल्योरत्व-निपातन सन्वद्भावप्रतिषेधार्थ'मिति । [ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्र ] ॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३।१।२२ ॥**

'समभिहार' इति कोऽयं शब्द [1]॥ समभिपूर्वाद्धरतेर्भावसाधनो घञ्, समभिहरण समभिहार इति । तद्यथा–पुष्पाभिहारः मालाभिहार. उत्पला-भिहार फलाभिहार इति ॥ विषम उपन्यास' । बह्व्यो हीमा सुमनसस्तत्र युक्त समभिहारे । इह पुनरेका क्रिया ॥ यद्यप्येका सामान्यक्रिया, अव-

प्र ]'प्रातिपदिकाद्धात्वर्थ'इति णिचि सिद्धे प्रपञ्चार्थमित्याहु ।न च 'तत्करोती'त्यादिना तत्र धात्वर्थनियम क्रियते, राजानमतिक्रान्तवानत्यरराजदित्यादावपि णिचो दर्श-नात्। 'मुण्ड करोति माणवक'मित्यादौ सापेक्षेभ्योऽपि णिजर्थं वा। [मुण्डमिश्र]॥

धातोरेकाचो । इह समभिहारो नाम मूर्तस्याऽनेकस्यैककालस्य भवति । धातुवाच्या तु क्रियैव,युगपदेकेन धातुनाऽनेकस्या अनभिधानात्। सा च निवृत्त-भेदा साध्यैकस्वभावत्वाद्धातुना प्रत्याय्यते । अधिश्रयणादीना च क्रमजन्यत्वाद्युग-पदवस्थानाऽभावाच्च क्रियासमभिहारो न संभवतीति मन्यमान पृच्छति–समभि-हार इति कोयमिति । इतरस्तद्बुद्धिपरीक्षार्थं शब्दव्युत्पत्तिमाह–समभिपूर्वादिति ।

उ.]श्रित्य ज्ञापकत्व निपातनमुक्त, ज्ञापकाश्रयणमेव तु ज्याय' इति ।

प्रातिपदिकाद्धात्वर्थ इति । चुरादिगणसूत्रमिदमिति भाव ।तत्करोतीति । 'हेतुमति चे'त्यत्रवार्तिकादिद गणसूत्रमप्रामाणिकम् । अत एव सत्यापपाशेति सूत्रे पाशादिग्रहणं चरितार्थम् । वार्तिके करोतिर्धात्वर्थोपलक्षणम् । तेन 'अत्यरराज'दित्यादीना सिद्धि । सत्यापेति सूत्रेऽनुवृत्तकरण इतिवदित्यन्ये । धात्वर्थनियम इति । एवञ्च धात्वर्थमात्रे विधानार्थं स्यात् । 'करणे' इति च धात्वर्थमात्रोपलक्षण स्यात् । अतएव 'वर्मणा सन्नह्यति संवर्मयती'त्यादिसिद्धिरिति भाव ।सापेक्षेभ्योऽपीति। अयमभ्युच्चय इति 'सुप आत्मन' इत्यत्र भाष्ये स्पष्टम् ॥

धातोरेकाचो । इहेति । यथा पुष्पादीनाम् । समभिहारश्चोत्तरार्थम् । तेन क्रियाया विशेषणाऽनुपपत्त्या प्रश्न इत्यर्थ । एककालस्येति । एकदेशस्याप्युपलक्षण-मेतत् । ननु दिवेर्विजिगीषाक्रीडाद्यनेकार्थत्वदर्शनादाह–युगपदिति । ननु विषय-भेदात्कर्तृभेदाच्च पाकादीना नानात्वेन कथमेकत्वमत आह–सा चेति । एतच्चात्र-

१ 'वृद्धावपि' पा०। २ 'गेन' पा०।३ 'धा' पा०। ४ अय पाठ क्वचित्र । ५ 'हिता' पा० । ६ 'हार इति' पा० । ६ 'फला' 'पुष्पा' पा० ।

यत्क्रियास्तु बह्व्यः । अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणक्रियाः । ताः कश्चित्कार्त्स्न्येन करोति कश्चिदकार्त्स्न्येन यः कार्त्स्न्येन करोति स उच्यते—'पापच्यते' इति । पुनः पुनर्वा पचति—पापच्यते इति ॥

अथ धातुग्रहणं किमर्थम् ? ॥ इह मा भूत्—भाटति भृशमिति ॥ अत

---

प्र ]यत्रद्व्येकेति।मुख्यस्य समभिहारस्येहाऽसम्भवाद्गौण आश्रीयते। बुद्धिगोचराऽनेकसकलावयवक्रियागतं, पौनःपुन्यमाऽनुगतमानप्रधानक्रियाविषयो वार्त्यर्थः। सामान्यक्रियेति । साधारणी समूहरूपा क्रिया धात्वर्थ इत्यर्थः । यथोक्तं हरिणा—'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥ समूहश्च तथाभूतः प्रतिभेदं समूहिषु । समाप्यते ततो भेदे काल-भेदस्य सम्भवः'॥इति॥ अत्र वा अधिश्रयणादीनां कार्त्स्न्येन प्रवर्तनाद्गुणसादकत्वत्व, तस्याश्च साधारणत्वमुच्यते । तदुक्तम्—'अनन्तरफलं यस्याः कल्पते तां क्रियां विदुः । प्रधानभूता तादर्थ्यादन्यासां तु तदाख्यता' ॥ कार्त्स्न्येनेति । विनालीयाऽन्यतरक्रियाभावस्त्येनेत्यर्थः । अथेति । धातुरेव समभिहारविशिष्टक्रिया

---

उ ]मेव साध्यतयाभिधत्ते—साध्यैकेति । अत एव 'भवद्भिरास्यते' इत्यादौ बहुवचनं नेति भावः । अधिश्रयणादीनां नानात्वादाह—अथेति । युगपदिति । उत्पत्तिनाशित्वादिति भावः । अमूर्तत्वाच्चेत्यपि बोध्यम् । भाष्ये—सोऽयमित्यस्य क्रियार्थकोऽयमित्यर्थः । भावेऽभिहारे कर्मसाध्य । उपलाऽभिहारे पच्यते पुरुष । बुद्धीति । अनेकासां सकलानामवयवक्रियाणां बुद्धिविषयत्वेन यौगपद्यमिति भावः । बुद्धौ युगपदवस्थानमत्र समभिहार इति बोध्यम् । प्रधानेति । पौनःपुन्येन तस्या एवाऽनुष्ठानादिति भावः । अनादि समभिहारो बोद्ध्य इति वाच्यम् । क्रियायाः जातिरूपसामान्यत्वाऽसम्भवादाह—साधारणीति । सकलाऽवयवसाधारणीत्यर्थः । तदाह—समूहरूपेति । गुणभूतैरिति । क्रमजन्मनामधिश्रयणादीनां बुद्ध्या प्रक-ल्पितो योऽभेदस्तद्रूपसमूहस्तैरवयवैः गुणभूतैरवयवैः सह क्रियेत्युच्यत इत्यन्वयः ।

ननु 'अकृत कटं देवदत्त' इत्यादौ कथं भूते'क्त' इत्यत आह—समूहः स इति। तथाभूतः—उद्भूताऽवयवः ॥समूहिषु—अवयवेषु। प्रतिभेदं—प्रत्येकम्। अभेद इति। बुद्धिकृताऽभेदेऽपीत्यर्थः । तस्याश्चेति। यदव्यवधानेन फलोत्पत्तिस्तस्या इत्यर्थः । अनन्तरमिति । अव्यवधानेन फलोत्पादिका प्रधाना क्रियेत्याह । अन्यासां तु तादर्थ्यात्तदाख्यता, गौणो व्यवहार इत्यर्थः । विजातीयेति । यथा द्रव्याणां द्रव्या-न्तरैरव्यवधानेन समभिहारस्तथा क्रियाणामपि क्रियान्तरैरव्यवधानेनैव स इत्यर्थः । पुनः पुनर्वेति भाष्ये। समूहरूपायाः क्रियायाः कालभेदाद्भेदेऽपि साजा-त्यात्सैव पुनः पुनरनुष्ठीयत इति बुद्ध्या पौनःपुन्यमिति तात्पर्यम्। धातुरेवेति ।

उत्तरं पठति–॥ ॥ यङ्विधौ धातुग्रहणं उक्तम् ॥१॥ [ यङ्विधौ धातुग्रहणे उक्तम् ] ॥ किमुक्तम् ? ॥ तत्र तावदुक्तम्— 'कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गं कमते चेत्समविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म ॥ सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सतोऽविधानमकर्मत्वा"दिति ।

'एवमिहापि'–क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्यं, सोपसर्गं क्रियासमभिहार इति चेत्क्रियासमभिहारविशेषकत्वादुपसर्गस्याऽनुपसर्गं क्रियासमभिहार, सोपसर्गस्य हि क्रियासमभिहारत्वे धात्वधिकारेऽपि यङोऽविधानमक्रियासमभिहारत्वा"दिति ॥

अथैकाज्झलादिग्रहणं किमर्थम् ॥ इह मा भूत्–जागर्ति भृशम् । ईक्षते भृशमिति ॥–॥ एकाज्झलादिग्रहणे च ॥ ॥ एकाज्झलादिग्रहणे चोक्तम् ॥ किमुक्तम् ? ॥ तत्र तावदुक्तम्–॥ कर्मसमानकर्तृकग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानादकर्मणो ह्यसमानकर्तृकाद्वाऽनभिधान"मिति ॥

इहापि–'एकाज्झलादिग्रहणानर्थक्यं च क्रियासमभिहारे यङ्वचनादनेकाचो हलादेश्चानभिधान"मिति । तदवश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेऽपि ह्येकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङा ऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः । तद्यथा–भृशं शोभते भृशं रोचते । यत्र चाऽनेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याऽभिधानं भवति, भवति तत्रोत्पत्तिः । तद्यथा–अटाट्यते अरार्यते अशा

प्र ] वाची, द्योतकास्तूपसर्गा न तु वाचका इत्यर्थः । प्राप्तीति । धातूपसर्गसमुदायस्य क्रियाविशेषावगतिहेतुत्वात्ततो यदि प्रत्ययः स्यात्तत्र सोपसर्गस्य द्विर्वचनं प्रसज्यते । प्राग्वत्त्वे इति चेन्यते । तत्सूत्रोक्तं वस्त्विहाप्यतिदिशति–यङ्विधाविति । धात्वधिकारेऽपीति । 'प्रापापच्यत'इत्यादौ । ऊर्णोतेश्चेति । यथान्यासे सिद्ध्यभावादवचनम् । कार्यान्तरसिद्धयेऽवश्यमूर्णोतेर्नुवद्भावो वा यत्नेनैव यङोऽपि सिद्धिमाह—

उ ] क्रियासमभिहारे' इत्यस्य समभिह्रियमाणक्रियावाचकादित्यर्थ इति भावः । क्रियायोगवाचिन्यथाऽपि सम्भावयतेरुत्तरम् । सनिति । एवमादावर्द्धधातुकभङ्गार्थं धातुग्रहणमित्याशयेऽपि तत्रत्यमत्र योज्यमिति ध्वनितम् । तत्फलम् 'सोमृच्यते' इत्यादौ णिलोप । प्रपापच्यत इति । ननु पेच्ये धतौ चरितार्थमिति भाव । एकाज्झलादिग्रहणप्रत्याख्यानादाह–यथान्यास इति । वचनेन वचनप्रत्याख्यानं त्वयुक्त्वाऽभावादाह–कार्यान्तरेति । इड्ग्रहस्य फलत्वेन हेतुत्वाऽभावादाह–तस्य

१ इदं सूत्रम् । २ इति क्वचिन्न । ३ इदं प्राचीनम् । ४ 'कर्मानर्थक्य'पा०। ५ 'यत्र चैकाचो' पा० । ६ 'त्पद्यमानेन च यत्र' पा० ।

इयते सोसूच्यते सोसूत्र्यते मोमूत्र्यते ॥ ॥४॥ ऊर्णोतेश्चोपसङ्ख्यानम् ॥५॥ ऊर्णोतेश्चोपसङ्ख्यानं कर्तव्यम् । प्रोर्णोनूयते ॥ अन्यद्रूपमिदमुच्यते-'ऊर्णोते'रिति ॥ ॥५॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाज्हलाद्यर्थम् ॥६॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ?॥ 'यङ्विधावनेकाज्हलाद्यर्थम्' । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते ॥ ऊर्णोतेर्न वक्तव्यम् ॥

॥ ॥ वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ ॥

॥७॥ क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् ॥*॥ क्रियासमभिहारे यङो लोड्भवति विप्रतिषेधेन । क्रियासमभिहारे यङ्भवतीत्यस्यावकाशः धातुर्य एकाज्हलादिः क्रियासमभिहारे वर्ततेऽधातुसम्बन्धे । लोलूयते पोपूयते । लोटोऽवकाशः -धातुर्योऽनेकाज्हलादिः क्रियासमभिहारे वर्तते धातुसम्बन्धे । 'स भवान् जागृहि जागृहीत्येवायं जागर्ति' । 'स भवानीहस्व ईह

प्र ]वाच्य इति। अत्र यदि भावोऽतिदिश्यते आमिटोरभावान्निर्देशात्तयोर्नान्तरभावात्। इडुपग्रहादिति । इडुग्रह –इट्प्रतिषेध ।'विभाषा गुणे' इति पञ्चमी।फलस्य चाऽत्र हेतुत्व, यथा यवनेन वसतीति। उदाहरणानि–प्रोर्णोनूयते प्रोर्णुनाव प्रोर्णुत प्रोर्णुनवानिति। यङ्न्त च क्रियासमभिहारस्य द्योतिका नाभियङीप्सयोरिति, 'क्रियासमभिहारे द्वे भवत' इति वा द्विर्वचन न भवति । यदा तु भृशार्थेऽपि पौनःपुन्य विवक्ष्यते तदा 'पापच्यते पापच्यते' इति द्विर्वचन भवत्येव । स भवानिति । सामान्यविशेषभावेन क्रियाभेदाश्रयो धातुसम्बन्ध । स इति । सत्शा[र्थे]र्थेन पुन्यथा प्रतिपिपादयिषितत्वादेकत्रस्मिन् यङ्प्रत्यय । अपरस्मिंस्तु लोट् ।

उ ]चेति। 'प्रोर्णुत' इति श्युक किती' तीड्निषेध । इति वेति । वस्तुतस्तद्धाने कस्य लोडियथ वेति लोडिशाब्दे वक्ष्यते । भवत्येवेति । 'नित्यवीप्सयो' रित्यनेन। सामान्येति । लोडन्तार्थ सामान्यम् । अनुप्रयोगार्थस्य तत्तद्व्यक्तित्वाद्विशेष । अन्यथाऽर्थभेदाऽभावेन धातुसम्बन्धाऽभावात्प्रत्ययो दुर्लभ स्यादिति भाव । अथ लोड्भवति विप्रतिषेधेनेति । पुन पुनर्लवनाऽभिन्न वर्तमान लवनमित्येन विवक्षाया धातुसम्बन्धस्य सत्त्वादुभयप्राप्ति । ननु विप्रतिषेधाश्रयणे लोटा भाव्य, स्वार्थिकत्वाद्यङोऽन्तरङ्गत्वे तेनैव भाव्यमिति विमुच्यते 'भवति चे'तीव्यत आह— भवार्थेति । तत्रैकत्रऽऽर्थेऽधातुसम्बन्धे यङ् इत्वाऽपरत्र धातुसम्बन्धे लोडिति

१ केचिदिदं भाष्यवार्तिकमित्याहु । इदं च प्राचिकम्। २'ऊर्णुग्रह' । ३'वक्तव्यम्' ४ 'लोड्भवति यङो विप्रति' । ५ 'सम्बन्धश्च' । ६ इदं वार्त्तिकं । ७ स भवान्' ।

स्वेनैवाभिहिते'। धातुर्व एकाचहलादिः क्रियासमभिहारे वर्तते धातुसंबन्धश्च तस्मादुभयं प्राप्नोति 'स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति'। लोड् भवति विप्रतिषेधेन ॥ न तर्हीदानीमिदं भवति,—स भवाँल्लोलूयस्व लोलूयस्वेत्येवायं लोलूयत इति ? ॥ भवति च ॥*॥ न वा नानार्थत्वात्कर्तृकर्मणोर्हि लविधानं क्रियाविशेषे स्वार्थे यङ् ॥*॥ न वाऽर्थो विप्रतिषेधेन ॥ किं कारणम् ? ॥ 'नानार्थत्वात्'। का नानार्थता ? ॥ 'कर्तृकर्मणोर्हि लविधानं'। कर्तृकर्मणोर्हि लोड्विधीयते। क्रियाविशेषे स्वार्थे यङ्। तत्रान्तरङ्गत्वाद्यङा भवितव्यम् ॥ न तर्हीदानीमिदं भवति—स भवाँल्लुनीहि लुनीहीत्येवायं लुनातीति ?॥ भवति च। विभाषा यङ्, यदा न यङ् तदा लोट्। [धातोरेकाचो हलादेः ] ॥

[ नित्यं कौटिल्ये गतौ ॥ ३।१।२३ ॥
लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ ३।१।२४ ॥ ]

॥*॥ उत्तरयोर्नियमार्थं विशेषाऽसंभवान्नित्यग्रहणानर्थक्यम् ॥*॥ उत्तरयोर्योगयोर्नियमार्थेन विशेषस्याऽसंभवान्नित्यग्रहणमनर्थकम्। नहि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते ॥ अथैतेभ्यः क्रियासमभिहारे यङ् भवितव्यम् ?॥ ॥*॥ क्रियासमभिहारे च नैतेभ्यः ॥*॥ क्रियासमभिहारे च नैतेभ्यो

प्र.] धातुश्च पौनःपुन्यस्य समभिहारमभिव्यनक्तु समानाभिव्यक्तिस्तस्य द्विर्वचनं प्रवर्तते। तत्रेति। लोड्विहितः, धर्मान्तरापेक्षणाद्धातुसम्बन्धापेक्षणाच्च। विभाषा यङिति। भावे कर्मणि' इत्यतो 'वे'त्यनुवर्तनात्। [ धातोरेकाचो हलादेः ] ॥

नित्यं कौटिल्ये। न होति। चङ्क्रम्यत इत्यस्माद्योऽर्थः प्रतीयते नासौ 'कुटिलं क्रामति' इत्यनेन वाक्येन प्रत्याययितुमिति तदर्थोऽभिधानादेव वाक्यं न भविष्यति। अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः। क्रियासमभिहार इति। तत्र कौण्डिन्यन्यायेन• कौटिल्यभाव-

उ ] वाद। लोडवेति। विभाषादिप्यपि लोटो विधानादिति भावः। [धातोरेका]॥

नित्यं कौ। उत्तरयोरिति पदद्वयसामानाधिकरण्याद् इति सूत्र एवेदं वार्तिकमिति ध्वन्यते। तेन पूर्वं नित्यमित्यादिसूत्रद्वयं शेषस्य शेषत्वप्रमादात्। तदाह नित्यग्रहणानर्थक्यमिति। द्वितीयार्थमिदं—क्रियासमभिहारे चेति। तेषु भाष्ये उदाहरणदिशि सुधियो विभावयन्तु। भावगर्हायामिति। कुटिले पत्र्यन्ते वर्त्यन्ते ... प्रत्ययादित्यर्थः। अर्थान्तरे—परि। तत्र कौण्डिन्यन्यायेनेति। चिन्त्यमिदं, विशेषविहितेन सामान्यविहितस्य बाधे उत्सर्गाऽपवादस्थले इत्यर्थकत्वात् दृष्टान्तो निदर्शो-

१ 'समभिहारे'। २ 'यो विधीयते'। ३ क्वचिदिदं सूत्रद्वयं न दृश्यते। ४ इदं क्वचित्।

यदा भवितव्य, भृशं जपति ब्राह्मण भृशं समिधो दहतीत्येव। [नित्य कौ]॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण चुरादिभ्यो णिच् ॥ ३।१।२५ ॥

'सत्यापे'ति किं निपात्यते ? ॥ ॥ सत्यस्य कृत्यापुक् ॥ ॥ सत्यस्य कृत्यापुक् निपात्यते, णिच्च । सत्यं करोति सत्यापयति ॥ अयत्स्यमिद मुच्यते ॥ ॥ णिजिधावर्थवेदसत्यानामापुक् ॥*॥ णिजिधावर्थवेदसत्यानामा पुक्केति वक्तव्यम् । अर्थापयति वेदापयति सत्यापयति ॥ यद्यापुक्क्रियते टिलोप प्राप्नोति ॥ एव तर्हि पुक्करिष्यते ॥ एवमपि टिलोप प्राप्नोति ॥ एव तर्ह्याक्करिष्यते ॥ एवमपि टिलोप प्राप्नोति ॥ एव तर्ह्यक्करिष्यते ॥ एवमप्य नाकारान्तत्वात्पुङ् प्राप्नोति ॥ [ एव तर्ह्याङ्करिष्यत ॥ एवमप्यनाकारान्तत्वात्पुङ् प्राप्नोति । ]॥ एव तर्ह्यापुक्करिष्यते ॥ अथ वा पुनरस्त्वापुगेव ॥ ननु चोक्तम्, 'एवमपि टिलोप प्राप्नोती'ति । आपुग्वचनसामर्थ्याच्च भविष्यति ॥

प्र ]गर्हाभ्या यङ क्रियासमभिहारादन्विष्य स्वीक्रियतेत्यादिति भाव ॥

सत्याप। एवन्तर्हीति । आचार्यमतभेदप्रदर्शनायेदमनेकपक्षोपन्यास ।टिलोप इति । 'णाविष्ठवदि'त्यतिदेशादिति भाव । अक्करिष्यत इति । तत्र परस्मै कृत ऽचोऽञ्णिति वृद्धौ कृताया पुगागम इति भाव ।अनाकारान्तत्वादिति।यद्यत्र वृद्धि स्यात्तदि विधानमनर्थकं स्यात् अगागमसन्नियोगेऽपि तस्या प्रसङ्गात् । ततश्च तदा नार्थमगागम स्यादिति भाव । आपुगिति । तस्य च णिभक्तत्वादकारस्य पूर्वस्य

उ ]त्यात्मत्र भाष्य उक्त । न हि विशेषाऽनुवादेन सामान्याऽनुवादेनाऽत्र वृत्त्यन्ता लौकिकोऽस्ति । नाऽप्यनद्विषये नियमेन तत्प्राप्तिरस्ति । तस्माच्चकारेण क्रिया समभिहारे चे'त्यत्रापि विशेषाऽसम्प्रत्यया'दित्यस्य सम्बन्धात् 'भृश जपती' त्याद्यर्थविशेषस्य यङन्तादप्रत्ययादित्यर्थ स्यात् । [ नित्य कौटिल्ये गतौ ]।

सत्याप। सर्वत्र सामर्थ्यादेव टिलोपवारणे नानास्तोपन्यासो व्यर्थोऽत आह– आचार्येति । अविवर्धी पुक्सिद्धय आह–तत्रेति । प्रातिपदिकाण्णिचीति भाव । यद्यप्यत्रापि टिलोपप्राप्तिरस्ति तथापि दयगान्तरसद्भावात्तदनुपन्यास । अनर्थकं स्यादिति । न च टिलोपनाशनद्वारा वृद्धिसिद्ध्यर्थमेव तदिति वाच्यम्, अन्त्यादेशा ऽकारविधानसामर्थ्येनैव टिलोपनाश सिद्धे आगमस्थितकारोच्चारणसामर्थ्येन वृद्धे- रपि बाध स्यादित्यभिमान । भाष्ये एवन्तर्ह्यापुगिति । नन्वत्र पक्षे 'णौ चन्'- ति ह्रस्वाऽऽपत्तिरापुकि प्राप्नोतीति फलभेद इति चेन्न, उपधाया अनभिधानात् ॥

हेतुमति च । हेतुमच्छब्दार्थज्ञाने सन्देहस्योत्पादनेतु शस्य वार्तमाह–

१ इद क्वचिन्न । २ अय पाठ क्वचिन्न । ३ 'वचनान्न' पा० ।

प्रत्ययार्थविशेषणेन भवितव्यं यावता 'हेतुमती'त्युच्यते । यदि हि प्रकृत्यर्थविशेषणं स्याद्धेतुमत इत्येवं ब्रूयात् ॥ नैतदस्ति । भवन्तीह हि विषयसप्तम्योऽपि । तद्यथा–'प्रमाणे यः प्रातिपदिकं वर्तते' 'क्रिया यत् प्रातिपदिकं वर्तत'इति । एवमिहाऽपि 'हेतुमत्यभिधेये णिज्भवती'ति, 'हेतुमति वा यो धातुर्वर्तत' इति जायते विचारणा ॥ अत उत्तरं पठति–॥–॥ हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थं, यथा 'तनूकरणे तक्ष '॥–॥ हेतुमतीति कारकमुपादीयते ॥ किं प्रयोजनम् ? ॥ 'प्रत्ययार्थपरिग्रहार्थम्' । एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति ॥ [ 'यथा तनूकरणे तक्षः' ] । यथा 'तनूकरणे

क्ष ]न प्रयोजकमाध्योऽपि तदा प्रत्ययार्थस्य करणाधिकारोपस्थापितस्य करणस्य विशेषणं हेतुमतीति सम्पद्यते । यदा त्वनेकार्थत्वाद्धातूनां तादर्थ्याद्वाऽधिश्रयणादिव प्रयोजकव्यापारोऽपि पचादिवाच्यो भवति –यथा पञ्चभिर्हलैः कृषतीति,तदा प्रकृतिविशेषणपक्षो भवति। तदा तु णिच्प्रत्ययो यानकः सम्पद्यत इति पक्षद्वयस्य सम्भवाद्दोषदर्शनाच्च प्रश्नः । हेतुमत इति। हेतुमदर्थाऽभिधायिन इत्यर्थः ।कारकोपादानमिति । कारकशब्देन प्रत्ययार्थ उच्यते,स हि प्रत्ययं करोति–निष्पादयति। प्रत्ययार्थ इति । प्रत्ययस्याऽर्थः प्रयोजनं, स सुष्ठु परिगृहीतः परिपूर्णो भवति, वाचकत्वात् प्रत्ययस्य । प्रकृतिविशेषणे तु प्रत्ययस्याऽनुवादकत्वाद्द्योतकत्वा प्रयोजनमपरिपूर्णं स्यादित्यर्थः । अथ वाऽर्थोऽभिधेयमुच्यते,स चान्वयव्यतिरेकाश्रयव्यवस्थत्वात् प्रेषणादि प्रत्ययस्यैव न प्रकृतेरिति सुष्ठु परिगृहीतो व्यवस्थापितो भवति । यथा तनूकरण इति । यदा 'विरणार्थां कर्त्रादय' इति पक्षस्तदा तनूकरणशब्देन कर्ताऽभिधीयते, तदा सार

ड ] पारत्ठेदकमित्यर्थः । प्रकृतिविशेषणेति । भाष्ये 'प्रकृत्यर्थविशेषण'मित्यस्य प्रकृतेरर्थद्वारा विशेषणमित्यर्थ इत्यभिमानः । वस्तुतः प्रकृत्यर्थस्य पाकादेर्विशेषणमित्यर्थः, द्योतकत्वेऽप्यर्थस्य विशेषणत्वनियमात् । धातोः शब्दस्य प्रागुक्तहेतुत्वाऽसम्भवादाह–हेतुमदर्थेति । हेतुमदर्थविशेषणकार्थाभिधायिन इत्यर्थः । भाष्ये–विषयसप्तम्योऽपीति । 'प्रमाणे' इत्यादेस्तद्विषयकबोधजनकं प्रातिपदिकमित्यादिक्रमेणाऽर्थ इत्याहुः । हेतुमच्छब्दस्य प्रेरणापरत्वात्कारकोपादानमसङ्गतमित्यत आह–कारकशब्देनेति । अन्वयव्यतिरेकाश्रयेति ।' पञ्चभिर्हलैः कृषति' इत्यादौ पञ्चभिर्हलैरित्यस्याऽनन्वयात् तदाऽर्थान्तराऽभावाच्च धातोर्द्योतकत्वेनेति भावः । कर्ताऽभिधीयत इति । बाहुलकात्कर्तरि ल्युडिति भावः । तनूकरणस्य धात्वर्थत्वं विना तत्कर्तारं कथं प्रत्ययः स्यादिति तदर्थापत्तिरपि बोध्यम् । 'यदि तद्वर्तते प्रकृत्यर्थविशेष-

१ 'हेतुमति चे' पा० । २ 'इत्येव' पा० । ३ 'भवन्ति हि' पा० ।
४ अयं पाठः सम्प्रति लुप्तः । ५ 'जनकत्वाति' ।

तक्ष' इति तनूकरणमुपादीयते ॥ यदि तर्हि तद्वत् प्रकृत्यर्थविशेषणमिदं भवति। प्रकृत्यर्थविशेषणं हि तत्तत्र विज्ञायते–'तनूकरणक्रियाया तक्ष' इति ॥

अस्तु प्रकृत्यर्थविशेषणं को दोषः ?॥ इह 'ह्युक्तं करोति','प्रेषितं करोती' ति णिच् प्राप्नोति । प्रत्ययार्थविशेषणे पुनः सति नैषं दोषः । स्वशब्देनोक्तत्वान्न भविष्यति ॥ प्रकृत्यर्थविशेषणेऽपि सति नैष दोषः । यत्र नाऽन्तरेण शब्दमर्थस्य गतिर्भवति तत्र शब्दः प्रयुज्यते ॥ यत्र हि अन्तरेणाऽपि शब्द मर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते ॥

इह तर्हि 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'त्युभयोः कर्त्रोर्लेनाऽभिधानं प्राप्नोति । 'प्रत्ययार्थविशेषणे सति पुनर्नैषं दोषः 'प्रधानकर्तरि लादयो

प्र ]म्येण दृष्टान्त ।यदा तु सार्वधातुकाथा कर्त्रादय' इति पक्षस्तदा वैधर्म्येण दृष्टान्त इति व्याख्यानम् । यथा तनूकरणं प्रकृत्यथा न तथा हेतुमद्व्यापार इत्यर्थ ।

परस्तु साधर्म्येण दृष्टान्तं सार्वधातुकत्वं च कर्त्रादीनां मन्यमान आह—यदीति। अस्त्विति । विनापि णिचा 'पञ्चभिर्हलैः कृषती'ति प्रयोजकव्यापारावगमात् प्रकृत्यर्थत्वे हेतुमत उपपद्यते । 'पचती'त्यादौ तु द्योतको णिज्नास्तीति तदप्रतिपत्तिरिति भाव । उक्तं करोतीति । प्रकृतिविशेषणपक्षे यथा प्रकृत्याभिहिते प्रयोजकव्यापारे णिज्भवत्येवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नोति, हेतुमद्विशेषणत्वात् करोत्यर्थस्य । प्रत्ययार्थविशेषणपक्षे तूक्तार्थत्वाण्णिजभाव । यत्रेति । यस्याऽर्थस्य द्योतनाय णिज्विधीयते स यदा शब्दान्तराऽवगतो भवति तदा प्रयोजनाऽभावाण्णिज भवतीत्यर्थ । उभयोरिति । धातुवाच्यस्य व्यापारस्य कर्तरि लकारेणोत्पत्तव्यम् । यदा च पचिना द्वयोरपि प्रयोज्यप्रयोजकयोर्व्यापारोऽभिधीयते, णिच्प्रत्ययश्चैव स्वार्थिकत्वात् प्रयोजकव्यापारस्य द्योतकस्तदा धातुवाच्यव्यापारसाम्यात्कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं स्यात्, तत 'पाचयतो देवदत्तयज्ञदत्ता'विति प्रसज्ये

उ ]णमेव भवती'ति भाष्येऽन्वय ।'अस्त्वि'त्यनेन तत्पक्षोपपत्ति सूचिता। तामाह–विनापीति । द्योतको णिज्नास्तीति । 'कृषती'त्यादौ तु पञ्चभिर्हलैरिति, एकान्ते तूष्णीमासीनत्वादिकं च तद्द्योतकमिति भाव । एवमुक्तप्रेषितेति। प्रकृतिविशेषणपक्षे शब्दान्तराऽभिहितद्योतनार्थं णिच्प्रवृत्तिरिति भाव । हेतुमद्विषयत्वादिति। प्रयोजकव्यापारविषयत्वादित्यर्थ । 'हेतुमता'त्यस्य विषयसप्तमीत्वादिति भाव । शब्दान्तरेति । वाचकशब्दान्तरेत्यर्थ । यदा चेति । पच्यादिभि पाकानुकूलकत्वेन द्वयोरप्यभिधानमिति मते इदम्भाष्यमिति भाव । एकस्योभयोरपि व्यापारयो समत्वेन विशेषणविशेष्यभावानापन्नयोरुभयोरपि कर्त्रो प्राधान्यमिति हृदयम् । अत

१ 'विशेषणं भवति'। २ 'सतिपुन '। ३'सति पुनर्नैष दोषो भवति'।४'न दोष '।

भवन्तीति प्रधानकर्ता तेनाऽभिधीयते, यथाऽत्राऽप्रधाने कर्ता सिद्धा तत्र 'कर्तरी'त्येव तृतीया ॥ इह च 'गमितो ग्रामं देवदत्तो यज्ञदत्तेने'त्यव्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थाना क्त कर्तरी'ति क्ते कर्तरि प्राप्नोति ॥ इह च 'व्यतिभेदयन्ते' 'व्यतिच्छेदयन्ते' इति। अव्यतिरिक्तो हिंसार्थ इति कृत्वा 'न गतिहिंसार्थेभ्य' इति प्रतिषेधः प्राप्नोति ॥

अस्तु तर्हि प्रत्ययार्थविशेषणम् ॥ यदि प्रत्ययार्थविशेषणं 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'ति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति। भवति हि तस्यं

प्र ]भेत्यर्थ । प्रधानकर्तेति । प्रकृत्यर्थपरतन्त्रत्वाण्ण्यर्थस्य प्राधान्यात्तस्य कर्तोऽपि प्रधानमिति भावः । गमित इति । प्रयोजकव्यापारस्य गमेरगत्यर्थत्वात्तस्य कर्तरि प्रयोजके क्त प्राप्नोतीत्यर्थः । प्रयोज्यस्य तु कर्मत्वात्तत्रैव क्त इष्यते । तदुक्तम्— 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण' इति ॥ व्यतिभेदयन्त इति । प्रयोजकव्यापारस्य व्यतिहारो न तु प्रयोज्यव्यापारस्येति द्रष्टव्यम् । भवति हीति । ण्यर्थस्य प्राधान्यात्तद्व्यापारेणेप्सिततम ग्रप्रयोज्यस्येत्यर्थः । प्रकृत्यर्थविशेषणत्वे तु

उ ]त्वाऽत्र पचेः प्रयोज्यस्य कर्मत्व नाऽऽपादितम्, प्रयोज्यव्यापारस्य विशेषणत्वाऽऽवीतेन तस्य फलत्वाऽभावेन फलाश्रयत्वाऽभावात् । गत्यादिसूत्रेणैव पक्षे विधर्धमे वेति बोध्यम् । परे त्वेव हि 'प्रकृत्यर्थविशेषण'मिति भाष्याशयाऽऽस्मद्भति । तस्मात्प्रवर्तनाप्रयोज्य पाक पचेरर्थ । तत्राऽन्यानधीनत्वलक्षणतार्थस्वाधान्यमप्रयोजकव्यापारस्य, शाब्दम प्रयोजकव्यापारस्येत्युभयाश्रययो कर्तृत्व, 'स्वतन्त्र कर्ते'त्यनोभयविशेषप्राधान्यस्यापि विनिगमनाविरहेण ग्रहात् । एवञ्च ण्यन्तोत्तरत्वेन पर्यायेण द्वयोरप्यभिधानात्तिरिति भाष्याशय ।प्रधानकर्तरीति । प्रकृतिभूतण्यन्तार्थकर्तरीत्यर्थ । प्रयोजककर्ता तु पत्यर्थस्य, न तु ण्यन्तार्थस्येति न ण्यन्तप्रकृतिकत्वेन तदभिधानमिति भाव । प्रधानकर्ता—स्वप्रकृत्यर्थप्रधानव्यापाराश्रयरूप कर्तेत्यर्थ ।

अप्रधानमिति। स्वप्रकृत्यर्थप्रधानव्यापाराश्रय इत्यर्थ । अव्यतिरिक्त इति । प्रयोजकव्यापारस्याव्यतिरिक्तोऽपि इत्यर्थ । भिन्नार्थत्वे तु प्रयोजककर्त्ता न गत्यर्थकर्ता, किन्तु ण्यन्तकर्तेति न दोष स्यादु । ननु प्रत्ययार्थविशेषणत्वेऽपि कथमतामनेनद, हिंसार्थप्रयोज्यव्यापारस्यैव व्यतिहारो, न तु णिजन्तप्रयोजकव्यापारस्य सोऽत्र आह—प्रयोजकव्यापारस्य व्यतिहार इति । तद्व्यापारेणेप्सिततम आदिति । तद्व्यापारप्रयोज्यव्यापारफलाश्रयत्वादित्यर्थ । भाष्ये— तस्य—प्रयोजकस्य । तस्मिन्—प्रयोज्ये । एतेन 'स्वव्यापारे स्वातन्त्र्यापरत्वेनाऽन्तरङ्गत्वेन च कर्तृत्वमेवे'त्यपास्तम्, अन्तरङ्गादपि प्रधानकार्यस्य लोके बलवत्तया

१ इद क्वचित्। २'कर्तरि क्त' । ३ 'यते' । ४इद क्वचित्। ५'व्यतिहार' ।

तस्मिन्वीप्सा॥इह च 'ग्रामं गमयति' 'ग्रामाय गमयती'ति,—व्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ न प्राप्नुत ॥ इह च—एधोदकस्योपस्कारयतीति,—व्यतिरिक्त करोत्यर्थ इति कृत्वा 'कृञः प्रतियत्न' इति षष्ठी न प्राप्नोति ॥ इह च 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'मिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोति ॥ इह चा'भिषावयति' 'परिषावयती'ति, 'व्यतिरिक्त सुनोत्यर्थ' इति कृत्वा 'उपसर्गात्सुनोतिसुवती'त्यादिना षत्वं न प्राप्नोति॥नैष दोषः।यत्तावदुच्यते 'पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोती'ति । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणी'त्येतन्नियमार्थं भविष्यति—'एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषा'मिति॥यदप्युच्यते—'इह च ग्रामं गमयति ग्रामाय गमयती'ति 'व्यतिरिक्तो गत्यर्थ' इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ न

प्र ]द्वयोरपि प्रयोज्यप्रयोजकव्यापारयोरेक धातुवाच्यत्वाद्धातुवाच्यव्यापाराऽपेक्षया द्वयोरपि कर्तृत्वात्तयोऽभिधानं प्राप्नोतीति दोष उक्तः। ग्रामं गमयतीति । ण्यर्थस्यैव ग्राम , प्रयोज्यश्च कर्मेति भाव । षष्ठी न प्राप्नोतीति । ण्यर्थस्य कर्मत्वादिति भाव । सुट् तु करोतिधात्वाश्रयत्वाण्णिज्युत्पत्तावपि तद्रूपसन्निधानात्सिध्यत्येवेति तत्ताऽनूपुदत् । प्रयोज्ये कर्तरीति । तस्याऽप्राधान्यादिति भाव । अभिषावयतीति । ण्यर्थस्योपसर्गो विशेषक इति भाव । एतेषामेवेति । ण्यर्थस्य प्राधान्यात्तेनेप्सितमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा । न च स्वव्यापाराऽपेक्षया स्वातन्त्र्यात्परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम् । प्रयोज्यव्यापारस्याऽप्राधान्यात्प्रधानाऽप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात् । नियमेन तु प्रधान-

उ ]दर्शनादिति भाव । एकधातुवाच्यत्वादिति।ण्यन्तप्रकृतिधातुवाच्यत्वादित्यर्थ । ननु प्रयोज्यस्य ण्यर्थव्यापारापेक्षया कर्मत्वेऽपि ग्रामादेर्गम्यर्थनिरूपितमेव कर्मत्वमत आह—ण्यर्थस्यैवेति । 'प्राधान्या'दित्यादि । उत्तरदेशसंयोगे ण्यर्थव्यापारजन्यत्वस्यापि सत्त्वादिति भाव । प्रतियत्नवाचिकरोत्यपेक्षया सुट्पक्षेऽर्थविशेषविशिष्टे षष्ठी प्राप्तिरेव कथमुक्तेत्यत आह—सुट् त्विति । कर्मणि विधानादर्थमात्रापेक्षा षष्ठी, 'उपात्प्रतियत्ने'ति सुट् धातुस्वरूपापेक्ष इति भाव । तस्याऽप्राधान्यादिति । कृत्प्रकृत्यर्थकर्त्रादौ हि तेन षष्ठी । कृत्प्रकृतिश्च ण्यन्ता । एवञ्च तदर्थकर्तर्येव स्यान्न तु णिच्प्रकृत्यर्थकर्तरि । अप्राधान्यञ्च कृत्प्रकृत्यर्थाऽकर्तृत्वमेवेति बोध्यम् । नियमञ्च उपपत्तिमाह—ण्यर्थस्येति । परत्वादिति । अन्तरङ्गत्वादुपजीव्यत्वाच्चेत्यपि बोध्यम् । प्रधानेति । सर्वापेक्षया प्रधानकार्यस्य बलवत्त्वात् । न चोद्देश्यतावच्छेदकलक्षणमार्थं प्राधा-

१ 'सुनोत्यादीनामिति' 'सुनोतीत्यादीनामिति' । २ 'प्रधानव्यापार' । ३ 'गत्यर्थे' ।

ग्रामुत'इति,-नामावेव प्रेष्यते 'गच्छ ग्राम'मिति ॥ कथं तर्हि ? ॥ साधन-विशिष्टामसौ क्रिया प्रेष्यते-'ग्राम गच्छ' 'ग्रामाय गच्छे'ति ॥ यदप्युच्यते-"[इह च] एधो दकस्योपस्कुरुतीति व्यतिरिक्त करोत्यर्थ इति कृत्वा कृञ प्रतियत्न इति षष्ठी न प्राप्नोती"ति । नासावेव प्रेष्यते-'उपस्कुरुष्वैधो दक-स्ये'ति ॥ कथं तर्हि ? ॥ साधनविशिष्टामसौ क्रिया प्रेष्यते-'एधो दकस्यो-पस्कुरुष्वे'ति ॥ यदप्युच्यते-"इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना-मिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोती"ति । उक्तं तत्र भूतग्रहणस्य प्रयोजनं 'कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्या'दिति ॥ यदप्युच्यते "इह चाभिषाव-यति परिशाययतीति-व्यतिरिक्त सुनोत्यर्थ इति कृञोपसर्गात्सुनोतीत्यौ-दिनत्व न प्राप्नोती'ति, नासावेव प्रेष्यते-'सुनु-अभी'ति ॥ कथं तर्हि ?॥ उपसर्गविशिष्टामसौ क्रिया प्रेष्यते-'अभिषुणि'ति ॥

प्र] प्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वं भवत्येव । तदुक्तं हरिणा-'गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः । नियमात्कर्मसंज्ञायाः स्वध-र्मेणाभिधीयते' इति ॥ नामाविति । ग्राम प्रत्ययार्थस्य कर्म न तु ण्यर्थस्ये-त्यर्थः । साधनविशिष्टामिति । ग्रामकर्मिका गमनक्रिया प्रयोज्य प्रेष्यति-प्राप्नो-तीत्यर्थः । स च प्रेष्यते-प्राप्यते । कर्तृभूतपूर्वमात्रेपीति । प्रधानचरेऽपि कर्तरी-त्यर्थः । सुनु अभीति । न प्रयोजकव्यापारस्याभिमुख्यमभिशब्देन द्योत्यते, अपि

उ] त्वप्रयोज्यव्यापारस्याप्यन्यानधीनत्वलक्षणार्थप्राधान्यस्य प्रयोजकव्यापारेऽपि स त्त्वात्, शब्दशास्त्रे शब्दप्राधान्यस्यैव मुख्यत्वादिति भावः । गुणेति । प्रेषणे कर्मता-म्प्राप्तोऽपि पदार्थः कर्मसंज्ञाया नियमादप्राप्त्या गुणक्रियायां स्वातन्त्र्याच्च स्वधर्मेण कर्तृ-त्वेनाभिधीयत इत्यर्थः । 'स्वातन्त्र्येणे'ति पाठेपि-'कर्तृत्वेने'त्येवार्थः । ग्राम प्रकृ-त्यर्थस्येति । गमेः सकर्मकत्वेनाऽवश्यं कर्मापेक्षत्वात्प्रत्ययार्थस्य कर्मसंज्ञाया प्रयो ज्यकर्मणा शान्ता अचेति भावः । 'साधनविशिष्टां क्रियामसौ प्रेष्यते' इत्यत्र कथं द्विकर्मकत्वं, कथम् प्रयोज्ये कर्मणि लकार इत्यत आह—प्राप्नोतीति । तथा च पूर्वं इपि प्राप्त्यर्थः । तस्माण्ण्यन्तात्कर्मणि प्रत्यये प्रेष्यत इतीति भावः । 'प्राप्नो-तीत्यर्थः' इति पाठे प्रेष्यतिपदस्य स्वोक्तस्येदमर्थकथनम् , न तु भाष्ये तथा पाठ इति भ्रमितव्यम् । भूतपूर्वत्वस्यानुपपत्तेराह-प्रधानचरेपीति । इत्यवृत्तिघटक-धात्वर्थकर्तर्यपीत्यर्थः । तन्मूलस्थकद्ग्रहणमादरयैनदर्थकमपीति भावः । अपि-विति । एतदभेनं कदाचिदपि ण्यर्थविशेषणत्वेनेति भावः । भाष्यसम्मतेन कैयटोक्तेन प्रयोज्यव्यापारस्यैवैतेनैव प्रकारेण तु तदाभिमुख्यद्योतकत्वाऽभावः एताऽभे-

१ इदं क्वचिन्न । २ 'किं तर्हि' पा० । ३ 'नियामसौ' । ४ 'सुनोत्यादीनामिति' ।

युक्तं पुनरिदं विचारयितु,–नन्वनेनाऽसन्दिग्धेन प्रत्ययार्थविशेषणेन भवितव्य यावता व्यक्तमर्थान्तर गम्यते–पचति पाचयतीति चे ? ॥ बाढं युक्तम् । इह पचे क प्रधानार्थ ?॥ याऽसौ तण्डुलाना विक्लित्तिः ॥ अधेदानीं तदभिसन्धिसन्धिपूर्वकं प्रेषणमध्येषण वा युक्त यत्सर्व. पच्यर्थ स्यात्॥

प्र ]तु प्रयोज्यव्यापारस्यैवेत्यर्थ । युक्त पुनरिति । सन्देह एव विचारनिमित्तं नोपपद्यते, अन्वयव्यतिरेकाभ्यां भूयोदर्शनविषयाभ्यां प्रत्ययार्थविशेषणपक्षस्यैवोपपन्नत्वादिति भाव । यासाविति । तदर्थत्वात्कारकग्रामस्य, तदनन्तरस्य फलोत्पादादिति भाव । तदुक्त हरिणा–'अनन्तरं फलं यस्या. कल्पते तां क्रियां विदु । प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता' ॥ इति ॥ तत्र यथाऽधिश्रयणादयस्तादर्थ्यात्पचिवाच्यास्तथा प्रेषणादिरपि, द्योतकस्तु णिजपेक्ष्यत इत्यर्थ । न च वाक्यानामपि तादर्थ्यात्पच्यभिधेयत्वप्रसङ्ग, तेषामक्रियात्वाद्वातोश्च क्रियावाचित्वात् । विक्लित्तिश्चाऽत्र फलानन्तरव्यापारोपलक्षणम्, 'इतरा पचन्ती'त्यादौ तत्याऽसम्भवादित्याहु । पच्यर्थ स्यादिति । सभावने लिङ् । संभाव्यते पच्यर्थत्व प्रेषणादे ।अत एव सत्याद्विचार्य प्रत्ययार्थविशेषणपक्षो भाष्यकारेण स्थापित', तद्दोषाणा परिहृतत्वात्, पक्षान्तरे दोषाणा चाऽपरिहारात् । अथ वा प्रकृत्यर्थविशेषणपक्षोऽपि स्थापित ,तत्पक्षभाविना दोषाणा सुपरिहरत्वात् । तथा हि यदुक्तं–'द्वयो कर्त्रोर्लैनाभिधान प्राप्नोती'ति, नाऽयं दोष', प्रकृत्या प्रयोज्यव्यापारोपसर्जनस्य

उ.]लभ्यत इति बहव ।यद्यपि पूर्वं 'प्रमाणे द्वयसच्''शेषे''सम्भूते' इति सप्तमीनिर्देशस्योभयथापि दर्शनाद्विचार उपपादितस्तथाप्यन्वयव्यतिरेकाभ्यामिदानीं विचार आक्षिप्यत इत्याह—अन्वयेति । भाष्ये–व्यक्तमर्थान्तरं गम्यत इति । 'व्यन्ताऽव्यन्ताभ्यामपरस्परस्मा'दिति शेष । विक्लित्ते प्रधानार्थत्वे युक्तिमाह–तदर्थत्वादिति । विक्लित्तिग्रहणं फलाऽव्यवहितपूर्ववर्तिव्यापारोपलक्षणम् । स्पष्टन्वेदमनुपदं स्वयं वक्ष्यति । तद्व्युत्पत्त्याह–तदनन्तरस्येति । तथा प्रेषणादिरपीति । विक्लित्त्यनुकूलत्वेनेत्यर्थ । वस्तुत प्रवर्तनाप्रयोज्येनैव तस्य विशेषणता न्याय्या। सम्भावन इति । 'उपसंवादाशङ्कयोश्चे'ति सूत्रे भाष्ये पठितेन 'उपसंवादाशङ्कयोर्लिङि'त्यनेन । तत्राऽऽशङ्का–उत्प्रेक्षा । सम्भावनापि–उत्कटकोटिका शङ्कैवेति बोध्यम् । भाष्ये–तदभिसन्धिपूर्वकमित्यस्य–'तद्विशेषणभूत'मिति शेष । अपरिहारादिति । 'सर्वम्पच्यर्थ स्यादिति युक्तमपि न पक्षो दुष्ट' इति शेष, दोषाणामुक्तत्वादिति भाष्यार्थ इति भाव । अथ वेति । अत्र पक्षे 'सर्वं पच्यर्थ.' स्यादिति यत्,तदुक्तमेवेति भाष्यार्थ इति भाव ।प्रयोज्यव्यापा-

१ च क्वचिन्न । २ तदभिसम्बन्धपूर्वकं' । ३ 'कल्प्यते' पा० ।

अथ हेतुमतीति कोऽयमर्थः ? ॥ हेतुः कर्ताऽस्मिन् स हेतुमान्, 'हेतुमती'ति॥ ॥ हेतुनिर्देशश्च निमित्तमात्रं, भिक्षादिषु दर्शनात् ॥*॥ हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः। यावद्ब्रूयान्निमित्तं कारणमिति तावद्धेतुरिति॥ किं प्रयोजनम् ?॥ 'भिक्षादिषु दर्शनात्'। भिक्षादिष्वपि हि णिज् दृश्यते–'भिक्षा वासयन्ति, 'कारीषोऽग्निरध्यापयती'ति ॥ किं पुनः कारणं पारिभाषिके हेतौ न सिध्यति ?॥ एवं मन्यते– चेतनावत एतद्भवति प्रेषणमध्येषणं चेति, भिक्षाश्चाऽचेतनाः॥ नैष दोषः। तावद्ध्य स एव वासं प्रयोजयति य आह 'उष्यता'मिति॥

प्र ] प्रधानस्य व्यापारस्याभिधानात्तस्यैव णिचा द्योतनात् प्रधान एव कर्तरि ल भविष्यति नाऽप्रधाने। णिचा च द्योतकत्वेन प्रधानभूतगमनार्थस्य निवर्तिता गमनादेरूपस्य प्रधानस्याऽस्याभिधानादिति ण्यन्तात्प्रयोजककर्तरि लस्याऽनुपपत्तिः। 'ण्यन्तिभेदयन्त' इत्यत्रापि स्मिनाद्य प्रधान धात्वर्थो, न तु हिंसादेरुपात्तस्य पदे नियेभाऽभावः।

अर्थेति। यद्यपि पश्यन् सतस्यार्थस्य सन्दर्भेन निर्ज्ञानस्तथापि हेतुशब्दस्याऽनर्थत्वैव भाति हेत्वर्थाऽपरिज्ञानात्तद्विशिष्टस्यापि सर्वस्याऽपरिज्ञानात् प्रश्नः। स चाऽर्थाद्धेतुविषय एवाऽवतिष्ठते। को हेतुरिति। किं प्रयोजको हेतुरथ निमित्तमात्रम् ?। हेतुः कर्तेति। हेतुः प्रयोजक इति भावः ॥ तावद्ध्यमिति।

उ ] रति। प्रयोजनस्यापार उपसर्जनं यस्येति विग्रहः। लोके प्रयोज्यप्रयोजकयोर्गुणप्रधानभावावगतेस्तद्व्यापारयोरपि तदवगमस्तोचितः, न तु फलानुकूलत्वेन समरक्षणतया बोध उचितः। एवञ्च वाचकतापक्ष इव द्योतकतापक्षेऽपि द्वयोर्व्यापारयोर्गुणप्रधानभावनैयत्यस्थिते प्रधानकर्तुरेव लेनाऽभिधानमित्यप्रधाने कर्तरि तृतीयादि भवति।

परे तु द्योतकत्वात्तस्य विशेषणत्वोचितति भाष्योक्तदोषाऽनुद्धारः। तत एवाऽस्य पक्षस्य भाष्ये प्रकृत्यर्थविशेषणत्वादेनोक्तस्य। किञ्च ण्यन्तात्प्रत्ययस्य प्रकृत्यर्थकर्तरि सामर्थ्यादित्यवश्यं वाच्यमेतत्पक्षे। एवञ्च प्रयोज्ये कर्तरि तृतीयेव लकारोऽपि दुर्वारः। दृशादीनामप्रधाने कर्मण्यपि व्यादिस्वीकारेण लादिविधौ कर्तृकर्मादेः प्रधानाऽप्रधानन्यायस्याऽप्रवृत्तरुचितत्वाच्च। वाचकत्वे तु न दोषः, प्रयोज्यस्य ण्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ण्यन्तकर्तृत्वाऽभावात्तत्र कर्तरि ण्यन्तात्प्रत्ययाऽनुपपत्तेः। एवमन्ययोरपि दूषणमेवैतत्। णिचेति। प्राधान्येनान्तरदेशसंयोगानुकूलव्यापारार्थक एव गत्यर्थ इति भावः। तर्ग्रहणसामर्थ्यादिति बोध्यम्। व्यतीति। सोऽपि प्रागुक्तयुक्त्यैव प्रधानभूतप्रागदेशसंयोगानुकूलव्यापारार्थक एवेति भावः। हेतुः प्रयोजक इति। तथा च

१ 'यस्य' पा०। २ 'स' इति क्वचिन्न। ३ 'मात्रं द्रष्टव्यम्' पा०। ४ अयं पाठः क्वचिन्न। ५ 'वासयति'। ६ 'यश्चाह'। ७ 'य आह इहोष्यतामिति'।

किं तर्हि ? ॥ तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि घास प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति । तथा कारीषोऽग्निर्निवाते एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति ॥

इह कश्चित्कं चिदाह—'पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवा'निति, अत्र णिच्कस्मान्न भवति ? ॥ अकर्तृत्वात् । न ह्यसौ संप्रति पृच्छति, [(नच प्रेक्ष्यति,] तूष्णीमास्ते ॥ किं च भो वर्तमानकालाया एव क्रियाया·

प्र.]तत्समर्थाचरणमपि प्रयोजकव्यापारस्तत्सद्भावाधीनत्वात्प्रयोज्यक्रियासिद्धेरित्यर्थः । पृच्छतु मा भवानिति । प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे णिच्कस्मान्न भवतीति प्रश्नः । एकविषयत्वाल्लोडादेर्णिचश्च पर्यायप्रसङ्गः ॥ अकर्तृत्वादिति । स्वतन्त्रस्य कर्तुः प्रयोजको हेतुरित्युच्यते, प्रयोज्यश्चाऽत्र न कर्तेति प्रयोजको न हेतुसंज्ञ इत्यर्थः । तूष्णीमिति । निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः ।

उ.]पारिभाषिकस्यैव हेतोर्ग्रहणमिति भावः ।वस्तुतस्तु 'णौ मत्वर्थ' इत्यस्य किं पारादिरूप प्रयोजकव्यापार इत्यर्थः । कृत्रिमाऽकृत्रिमन्यायेन हेतुसंज्ञाविधानसामर्थ्येन च तस्यैव ग्रहणं भविष्यतीति तत्प्रश्नाऽनौचित्यात् । हेतुः कर्ताऽस्येति। प्रयोजकव्यापार एवेत्युत्तरम् । प्रयोजकस्य परिभाषिकहेतुत्वेऽपि लक्ष्यानुरोधेनाह भाष्ये—हेतुनिर्देशश्चेति । पारिभाषिकेऽपि लक्ष्यसिद्धिमाह–नावश्यमिति । तदाशयमाह–तत्समर्थेति । भाष्ये 'ब्रवीती'त्यनेन तादृशशब्दप्रयोग एव मुख्या प्रवर्तनेति सूच्यते । ननु प्रश्नक्रियाकर्तृतया कस्य चित्सिद्ध्यभावात्प्रयोज्यस्याऽभावे प्रयोजकस्याप्यभावात्कथं णिच्शङ्का', तत्राह–प्रष्टेति । 'भावी'ति शेषः ।

समानार्थत्वाद्युगपल्लोट्णिचोरप्रसक्तेराह–एकविषयत्वादिति। वस्तुतस्तु लोडन्ते प्रयुज्यमानलोडन्तशब्द एव प्रयोजकव्यापारस्तस्य सत्त्वाण्णिच्स्यादिति प्रश्नाशय । पर्यायस्य प्रश्नविषयत्वे लोटोक्तत्वात्प्रेषणस्य णिज्न भविष्यतीत्युत्तरपरभाष्याऽसङ्गति । न हि पर्याये लोटोक्तत्वमस्ति । पर्यायो नाम कदाचिल्लोटैव, कदाचिण्णिजैवेत्याकारः । ननु 'उक्त करोती'त्यत्रोक्तन्यायेनाऽत्रापि णिचोऽप्राप्त्या भवदुक्तव्याख्याने भाष्याऽसङ्गतिरिति चेन्न, लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लोटवाच्यत्वमित्यभिमानेन शङ्कासत्त्वात् । लोटोक्तत्वादित्युत्तरस्य चाऽयमाशयः प्रेरणात्वेन लोड्वाच्य एवेति । एतच्च 'विधिनिमन्त्रणे'ति सूत्रे उपपादयिष्यते । मञ्जूषायां निपुणतरमुपपादितम् । न कर्तेति । तत्र प्रश्नक्रियाया अभावादिति भावः । कुतस्तद्विशेष इति । 'तूष्णीमास्त' इति भाष्यं पैमुनिकन्यायोपलक्षण

१ अय पाठ क्वचिन्न । २ 'मां' पा० । ३ 'अनुयुक्तां' पा० ।

कर्त्रा भवितव्यं न भूतभविष्यत्कालायाः ?॥ भूतभविष्यत्कालाया अपि भवितव्यम्। अभिसम्बन्धस्तत्र क्रियते—'इमां क्रियामकार्षीदिमां क्रियां करिष्यती'ति ॥ इह पुनर्न कश्चिदभिसम्बन्धः क्रियते, न चासौ पृच्छति, न चासौ प्रक्ष्यति, तूष्णीमास्ते ॥ यदि तर्हि कर्ता नास्ति कथं तर्हि कर्तृप्रत्ययेन लोटाऽभिधीयते ?॥ अथ कथमस्मिन्प्रकृत्यर्थे प्रैषादिर्वर्तते ?॥ अभिसम्बन्धोऽत्र क्रियते—'इमां क्रियां कुर्वि'ति ॥ कर्तापि तर्ह्यभिसम्बन्धात् क्रियते ॥ कथम् ?॥ 'कर्ता चाऽस्याः क्रियाया भवे'ति। एवं न च कर्ता, कर्तृप्रत्ययेन च लोटाऽभिधीयते ॥ अथापि कथंचित्कर्ता स्यादेवमपि न दोषः, लोटोक्तत्वात् प्रैषस्य णिज्न भविष्यति। विधीयन्ते ह्येतेष्वर्थेषु प्रैषादिषु लोडादयः। यत्र

प्र ]कर्तृत्वमेव तस्याऽऽधीयमानं—'प्रश्नक्रियायाः कर्ता त्वं भव' इति। यथा 'राजा भव युध्यस्व' इति राजत्वमेवाऽऽधीयते। यस्तु प्रश्नक्रियः सम्भावितक्रियो वा प्रयोज्यः कर्ता तस्य प्रयोजको हेतुरिति णिज्भावः ॥ इतरो वर्तमानक्रियस्यैवाऽनेन कर्तृत्वमुक्तमिति मत्वा चोदयति—किं च भो इति ॥ अभिसम्बन्ध इति। भूताया भविष्यत्याश्च क्रियायाः कर्त्राभिसम्बन्धो भूतो भावी च प्रतिपाद्यत इत्यर्थः ॥ अथ कथमिति। अस्मिन्नर्थे शब्दप्रयोगाऽसम्भवात्॥ अभिसम्बन्ध इति। बुद्धिपरिवर्तिन्यर्थे बहिरसत्यपि शब्दप्रयोगादिति भावः ॥ न च कर्तेति। तस्यैवाऽऽधीयमानत्वात्। तदुक्तं हरिणा—'कर्तृमात्रस्य तु प्रैषे पृच्छादेर्लोड्विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः' ॥ इति ॥ अथापीति। दुर्बलपक्षाभ्युपगमेनाऽपि परिहारोऽभिधीयत इति भावः। लोटोक्तत्वादिति। एकविषयत्वाभावाल्लोडादीनां च पाक्षिकत्वाद्यदा लोडुत्पद्यते तदा तेनैवाऽभिहितत्वात् प्रैषस्य णिज्न भविष्यति ॥

उ ]बोध्यम्। आधीयमान—विधीयमानमित्यर्थः। एतेन 'लोटा कर्तृत्वस्याऽभिधानात् कथमकर्तृत्व'मित्यपास्तम्। तदुपपादयति—यस्तु प्रकृतेति। अस्य 'विध्यर्थेषु लडादिप्रयोगनिवारी'त्यादि। प्रकृतेर्णिचोऽपि शङ्क्याय प्रैषेण एव भाष्ये—अभिसम्बन्ध इति। बुद्धिकृताऽभिसम्बन्ध इत्यर्थः। भाष्ये—न चासौ प्रक्ष्यतीति। लोडन्तप्रयोगकृतप्रेरणां विनेत्यर्थः। बुद्धीति। बुद्ध्या विषयीकृतस्यैव सर्वत्र बोधात्। प्रकृते च क्रियाया इव कर्तृत्वस्यापि तथाभूतस्यैव विधानमिति भावः। आधीयमानत्वादिति। विधेयत्वादित्यर्थः। [प्रैष इति]। द्रव्यमात्रस्य कर्तृत्वादि तस्य प्रयोग—प्रैषः। दुर्बलेति। ईश्वरस्तुरपि यदि हेतुमत्सूत्रे ग्रहणमिति भावः। पाक्षिकत्वात्—पर्यायेण जायमानत्वात्। एतद्भाष्यनिष्कर्षः प्रागेवोक्तः। कैयटोक्त-

१ अत्र पाठः क्वाचित्कः। २ 'पृच्छति' 'पृच्छन्ति' पा०। ३ च क्वाचित्कः। ४ 'भवति' पा०। ५ 'प्रैषस्य' पा०। ६ 'त्वमर्थे' पा०।

च द्वितीय प्रयोज्योऽर्थो भवति, भवति तत्र णिच्। तद्यथा—आसय शाययेति ॥*॥ कृष्यादिषु चानुपपत्ति ॥*॥ कृष्यादिषु चानुपपत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते—'पञ्चभिर्हलै कृषती'ति। तत्र भवितव्य 'पञ्चभिर्हलै कर्षयती'ति॥ ॥१॥ कृष्यादिषु चानुपपत्तिर्नानाक्रियाणा कृष्यर्थत्वात् ॥१॥ कृष्यादिषु चानुपपत्ति सिद्धा ॥ कुत ? ॥ 'नानाक्रियाणा कृष्यर्थत्वात्'। नानाक्रिया कृषेरर्था । नावश्य कृषिर्विलेखन एव वर्तते ॥ किं तर्हि ? ॥ प्रतिविधानेऽपि वर्तते। यदसौ भक्तबीजबलीवर्दै प्रतिविधान करोति स कृष्यर्थ । अतश्च प्रतिविधानेऽपि वर्तते, यदहरेवाऽसौ न प्रतिविधत्ते तदहरेव तत्कर्म न प्रवर्तते ॥*॥ यज्यादिषु चाऽविपर्यास ॥*॥ यज्यादिषु चाऽविपर्यासो

प्र ]एकान्त इति—कृषावसामर्थ्यं दर्शयति।तूष्णीमासीन इति—व्यापाराऽभावकथनम्। कश्चिद्धि सामर्थ्यातिशयाद्युगपत्पञ्चभिर्हलै कृषेत्पर्यायेण वेति तन्निराकरणाय 'एकान्ते तूष्णीमासीन' इत्युक्तम्। तत्र पञ्चभिर्हलैर्भूमिमन्यै कर्षयतीत्यर्थावगमाण्णिचि सति कृषतीति न प्राप्नोतीति तदनुपपत्तिर्वक्तव्येत्यर्थ ॥ प्रतिविधानेपीति। अनेकार्थत्वाद्धातूना कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्तत इत्यर्थ । धातुनैव चोपपदसहितेन तस्याऽर्थस्य प्रकाशितत्वाण्णिजभाव, 'विभाषोपपदेन प्रतीयमान' इति पक्ष आत्मनेपदाऽभावश्च। यदा तु कृषिर्विलेखने वर्तते तदा भवत्येव 'पञ्चभिर्हलै कर्षयती'ति णिच् ॥ यज्यादिष्विति। यत्रे

उ ]व्याख्याने हि लोकप्रसिद्धे तद्वारणेऽपि तदुक्तरीत्या शक्तितात्पर्यविषयस्य पर्यायस्याऽवारणाच्चिन्त्यमिदम्। नन्वेव णिज्हेत्वो समावेशाऽभावे 'आसये'त्याद्यनुपपत्तिरत आह—भाष्ये—यत्र च द्वितीय इति। प्रयोजकोऽपि यथा यदाऽन्याऽपेक्षया प्रयोज्यो भवति तदा तयो समावेश इत्यर्थ । ननु प्रयोजकव्यापारस्य पञ्चभिर्हलैरित्यनेनैव द्योतितत्वात्तद्द्योतनाय 'एकान्ते' इत्यादि व्यर्थमत आह—कश्चिदिति। तत्रेति। एवञ्च प्रयोजकव्यापारस्याऽत्र प्रतीतेस्तद्बोधनाय णिच्स्यादिति भाव । अनेकार्थत्वादिति। प्रतिविधानान्तोऽत्र धात्वर्थ । फलानुकूलत्वेन स एव धा। करणस्य च फले एवान्वय । भाष्ये—तत्कर्मेत्यस्य कृष्यर्थफलमित्यर्थ । क्वचिदत्र प्रयोज्यस्य कर्मत्व इष्टापत्ति। 'गतिबुद्धी'ति सूत्रन्तु नियमस्य सजातीयापेक्षत्वादन्यथा त एव व्यावर्त्तकम्। अन्ये तु तत्प्राप्तिरेव नेति दिक्। णिजभावइति। द्योतकतापक्षेऽप्युपपदेनैव द्योतितत्वाद्द्योतकणिचोऽभाव इतिभाव। वस्तुतो द्योतकत्ववादिनो वचनाऽऽरम्भ, द्योतकसमुच्चयदर्शनात्। वाचकत्ववादेन तत्खण्डनमिति तत्त्वम्। प्रयोजकव्यापारफलस्य कर्तृगामित्वात्कृषेरात्मनेपदमाशङ्क्याह—विभाषेति।

१ 'कृषति'। २ अपि क्वचिन्न। ३ 'याज्यादिषु च विपर्यास'। ४ 'चाऽविप'।

वक्तव्यः । 'पुष्यमित्रो यजते, याजकाः याजयन्ती'ति । तत्र भवितव्यं 'पुष्यमित्रो याजयते, याजकाः याजयन्ती'ति । ॥*॥ यजादिषु चाऽविपर्यासो नानाक्रियाणां यज्यर्थत्वात् ॥*॥ यजादिषु चाऽविपर्यासः सिद्धः ॥ कुतः ? ॥ 'नानाक्रियाणां यज्यर्थत्वात्' । नाना क्रिया यजेरर्थाः । नावश्यं यजिः प्रक्षेपण एव वर्तते ॥ किं तर्हि ? ॥ त्यागेऽपि वर्तते । तद्यथा–'अहो यजत' इत्युच्यते यः सुष्ठु त्यागं करोति । तं च पुष्यमित्रः करोति, याजकाः प्रयाजयन्ति । ॥*॥ तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम् ॥*॥ तत्करोतीत्युपसंख्यानं कर्तव्यम् ॥ किं प्रयोजनम् ?॥ 'सूत्रयत्याद्यर्थम्' । सूत्रं करोति सूत्रयति । सूत्रयतीति ॥ इह 'व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयती'ति,–वाक्ये षष्ठी, उत्पन्ने च प्रत्यये द्वितीया, केनैतद् भवति ? ॥ योऽसौ सूत्रव्याकरणयोरभिसम्बन्धः स उत्पन्ने प्रत्यये निवर्तते । अस्ति च करोते

प्र]प्रक्षेपविशेषवाचित्वात् प्रक्षेपं च कश्चित् कर्तृवाच्यमानस्य प्रयोजककर्तृत्वाभिव्यक्तिप्रसङ्गनिवारणाय वचनम् ॥

नानाक्रिया इति । तत्र त्यागवचनाश्रयणे यः प्रयोगस्तद्विपरीतः प्रक्षेपवचने द्रष्टव्यः ॥ इह व्याकरणस्येति । लक्ष्यलक्षणसमुदाये वा व्याकरणशब्दो वर्तत इति भेदनिबन्धना षष्ठी । यदा तु लक्षण एव सूत्रे व्याकरणशब्दो वर्तते तदा व्यपदेशिवद्भावनिमित्ता षष्ठी। यदा 'व्याकरणं सूत्रं करोती'ति सामानाधिकरण्यं तदा यथा 'मुण्डयति माणवक'मिति भवति तथा 'व्याकरणं सूत्रयती'त्यपि भवति ॥

योऽसाविति । वाक्ये द्रव्यस्य सूत्रं 'सूत्र'शब्देनोच्यते। णिचि तूत्पन्ने सत्त्वभावाद्विवर्तमानः क्रियात्वमभिधायी सूत्रशब्दः सम्पद्यते । तदुक्तं–'परार्थाभिधानं वृत्ति'-

उ]र्सा च प्रातिपदिकाद् भाव । तद्विपरीतं प्रश्नयति । 'अविपर्यास'पदेनेष्टप्रयोगसिद्धिरेव न तु विपरीतप्रयोगव्यावृत्तिरपीत्यर्थः । भाष्य–तदिति,–प्रातिपदिकोपलक्षणम् । प्रातिपदिकादित्यर्थः । कर्मत्वादन्तर्भावेणैकार्थीभावः, लाकव्यवहारात्। करोतीति च धात्वर्थोपलक्षणम् । तेन 'अश्वेनातिक्रामत्यश्वयत्त'त्यादि सिद्धम् । एवञ्च 'प्रातिपदिकाद्धात्वर्थे' इत्यादिगणसूत्राणि प्रक्षिप्तानि, धातुपाठे सूत्रमूत्रधातु- चति योग्यम् । तत्करणेनैव सिद्धे वार्तिकमफलं स्यात् । क्वचिन्निदर्शनत्वेनाऽ- पेक्षया सत्त्वस्यैवौचित्यात् । एवञ्च 'मुण्डमिश्रे'ति सूत्रस्य कैयटचिन्त्य एवेति बोध्यम् । लक्ष्ये इति । 'व्याकरण'शब्दः कर्मण्युडन्त इति भावः । लक्षणसमुदाये वेति । अध्यायान्याय्येऽर्थे । करणल्युडन्तः स इति भावः । यदा तु लक्षण एवेति । प्रतिसूत्रं 'व्याकरण'शब्द इत्यर्थः । षष्ठेति । व्यपदेशिवद्भावनाश्रयणे

१ 'या या' । २ हविःप्रक्षेपणे' पा० । ३ 'त्तीति' पा० । ४ इद क्वचिन्न ।

र्थाकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति॥ ॥*॥ आख्यानात्कृतस्तदा-चष्टे [इति] कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥*॥ आख्यानात्कृदन्ता-ण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे । 'कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च

---

म ]रिति । एतच्च प्रक्रियागतविभागाश्रयेणोक्तम् । परमार्थतस्तु भावान्तरं सूत्रनिर्दि-ष्टमित्यवचनम् ॥ आख्यानादिति । आख्यायत इत्याख्यानम्-इतिवृत्तमुच्यते । प्रकृतिवदिति । णिचो या प्रकृतिः कंसवधादि, तया तुल्यं कंसादि कारकं भवति । यथाख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा कंसादेरपि तन्निष्पन्नाख्यानकर्मभावस्ये-त्यर्थः । प्रकृतिवद्भावातिदेशेन च कंसादेः पृथक्कृतत्वात् कंसमघातयदित्यादौ कंसा-दिशब्दवर्तिनस्त्याद्यसहायाभवादयः कंसादेर्न भवन्ति । वत्करणाच्च स्वाश्रयमपि भव-तीति 'पुष्येण योजयती'ति पुष्यस्य कर्मत्वाऽभावः । अथ वा प्रकृत्या तुल्यं वर्तत इति प्रकृतिवत्, प्रकृतेरिव प्रकृतिवत्। ण्यन्तस्य कारकमित्युभयथानिर्देशाश्रयणात् क्वचित्कश्चित्परिगृह्यते । प्रकृतिप्रत्यापत्त्या राजागमनादौ नलोपाद्यपि निवर्तत इति

---

उ ]इत्यर्थः । करोत्यर्थाभिधायीति । करोत्यर्थविशेषणीभूताख्यानस्यार्थोऽभिधा-यीत्यर्थः । सूत्रणे च सूत्रेर्वृत्तिर्बोध्या। भाष्ये-व्याकरणेन सामर्थ्यमिति। तज्जन्य-फलाश्रयत्वरूपमित्यर्थः । नित्यशब्ददर्शने 'सूत्रयती'त्यत्राऽवयवार्थाऽभावा-च्छ्रद्धैव नास्तीत्याह-एतच्चेति । आख्यायत इति । बाहुलकात्कर्मणि ल्युट् । भाव-ल्युटि ह्याख्यानक्रियायाः कर्मत्वं न स्यात् । णिच इति । 'कृतो या प्रकृति'रिति तु नोक्तं, प्रत्ययलक्षणेन कृदन्ततयाऽनेनातिदेशेन च षष्ठीप्रसङ्गात् , 'राजागमन'-मित्यादौ राज्ञः कर्तृतया 'राजान'मिति द्वितीयाऽनापत्तेश्च । तदयमर्थः -णिच्प्रकृते-र्ययाऽऽख्यानक्रियाया कारकता तथा कंसादेरपीति। तदाह-यथेति । नन्वेवमन्य व्यवस्थेत्यत आह-प्रकृतिवद्भावातिदेशेनेति। प्रकृत्याविव प्रकृतिवत्। अत्र प्रकृति-शब्देन कृत्-प्रकृतिः । तस्या यथा कंसादेरनन्तर्भावस्तथा कृदन्तप्रकृतिक-ण्यन्तेऽपीत्यर्थः । नन्वेवं 'पुष्येण योजयती'त्यत्रापि द्वितीयापत्तिरत आह-वत्क-रणादिति । क्वचिदिति । 'पुष्ययोगं जानाती'त्यत्र च प्रकृतेरेव प्रकृतिवदित्येवाश्रय-णीयमिति भावः । एवम् द्वितीयाद्यन्तत्वाय पृथक्त्वाय चाऽतिदेशद्वयमाश्रयणीयम्भ-वति, वैरूप्यञ्च भवतीति गौरवम् , अत 'प्रकृतिवच्चे'त्यस्य कृत्प्रकृतेर्ण्यन्तादेर्ण्य-न्तत्वे यथा कारकं द्वितीयाद्यन्तं, धात्वनन्तर्भूतञ्च तथेत्यर्थ उचितः । 'प्रकृति-प्रत्यापत्ति'रित्यत्र कृत्प्रकृतेरेव ग्रहणेनाऽनापि तदर्थौचित्याच्च 'पुष्येण योजयती'-त्यत्र च न दोषः । प्रकृतिमेति । कृत्प्रकृतेः प्रत्यापत्तावपि राजन्शब्दे नलोप-निवृत्तिः कथमिति चिन्त्यम् । वस्तुतः 'प्रकृतिवत्कारक'मित्यतिदेशात्पृथक्करणेन समासाऽभावेनाऽपदत्वात्तन्निवृत्तिरिति बोध्यम् । अत्र 'प्रकृतिवच्चे'ति 'च' "कारक"-

कारकं। [ आख्यानात्कृदन्ताण्णिज्वक्तव्यम् ]। कंसवधमाचष्टे कंसं घातयति। बलिबन्धमाचष्टे बलिं बन्धयति ॥

॥*॥ आख्यानाच्च प्रतिषेधः ॥*॥ आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः। आख्यानमाचष्टे इति ॥ किं पुनर्यान्येतानि संज्ञाभूतान्याख्यानानि तेभ्य उत्पत्त्या भवितव्यम्, आहो स्वित्क्रियाख्यानमात्रात् ?॥ किं चातः ॥ यदि संज्ञाभूतेभ्यः, इह न प्राप्नोति,—राजागमनमाचष्टे राजानमागमयति। अथ क्रियाख्यानमात्रात्, न दोषो भवति ॥ यथा न दोषस्तथाऽस्तु ॥*॥ इत्त

प्र ]राजानमागमयतीत्याद्युपपन्नं भवति। कंसवधमिति यद्यप्यत्र सन्नियोगनिर्दिष्टाना मन्यतराऽपाये उभयोरप्यभाव' इति वधादेशनिवृत्तिर्भविष्यति तथापि पृथग् योग जानाति पृथग् योजयतीति कुर्वन्त्य सन्नियोगशिष्टत्वाऽभावान्निवृत्तिर्न सिध्यतीति प्रकृतिप्रत्यापत्तिरुच्यते। किं पुनरिति। कंसवध-नलोपाख्यानादीनामित्यर्थः। इत्य थायामिति। यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्टे—एतास्मिन्नरण्ये एवंविधा मृगा रमन्त इति तदा प्रतिपाद्यस्य दर्शनार्थां प्रवृत्तिर्भवति। यदा

उ ]मित्यनन्तरं योगे—प्रकृतिवत्कारकं चेति। ततं तद्धत्वार्थस्यादिष्यते। तत घातयतीत्यादौ कुर्वन्त्येव सिध्यन्, अन्यथा 'वृत्ता स्वरूपग्रहणं' इति परिभाषया न स्याताम्। कचित्तु पठ्यते 'प्रकृतिं पदं हनुमन्यन्तप्रकृति हनुमन्यन्तश्च प्रत्ययस्योभयोरपि प्रकृतिप्रकृति एव। प्रत्यापत्ति—प्रत्यभिज्ञा। सा च तत्त्वस्य तदन्यकार्यसत्त्वं च भवतीति। अनेनैव कारकवद्भावो वधादेशनिवृत्तिः कुर्वन्त्या दिकं च सिद्धम्। नन्वेवं प्रत्ययग्रहणे कृदन्तत्वात्कर्मादेः षष्ठी स्यादत—प्रकृति वच्च कारकमिति। यद्विभक्त्यन्तं तत्र तादृशमेवापीत्यर्थः। एवञ्चाऽऽगतिस्सूपता न कुत्रापि। 'प्रत्यापत्ति'शब्दस्य च प्रत्यभिज्ञाविषयतयाऽऽपत्तिः स्थितिरित्यर्था ननु नष्टस्य पुनः प्रादुर्भावः प्रत्यापत्तिः। अत एव 'रात्रिं विवासयति' 'मृगान् रम-यती'त्युदाहरणविषयवचने प्रकृतिप्रत्यापत्तिरेव सङ्गतिः। अन्यथा तत्र प्रकृतस्य दर्शनाऽनपहारात्प्रत्यापत्तिव्यवहाराऽसङ्गतिः स्पष्टैव। कारकवद्भावश्च तस्या फलमित्याहुः। यद्यप्यत्र सन्नियोगेति। एवं च तदनित्यत्वज्ञापकस्य प्रकृतिप्रत्यापत्ति वचोऽनल्पमिति बोध्यम्। भाष्ये संज्ञाभूतानीत्यस्य प्रसिद्धानीत्यर्थः। भाष्ये—राजानमागमयतीति। एवं च 'देवदत्तपाकमाचष्टे' इत्यर्थे देवदत्तेन पाचयतीत्यत्र 'गतिबुद्धी'तिनियमेन देवदत्तस्य कर्मत्वाऽभावात्। इत्यथेति। इकृष्यादिभ्य इति इशि साधु। रममाणान्मृगानिति। एतेन 'मृगरमण'शब्द आगते

१ अत्र पाठ- कचित्र। २ 'बन्दि' 'बदि' 'बन्धि' पा०। ३ 'यतीति' पा०। ४ 'संज्ञाभूताख्यानानि तेभ्य' 'संज्ञीभूताख्याना' पा०। ५ 'क्रियाख्यान' पा०।

र्थाया च प्रवृत्तौ ॥*॥ दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज्वक्तव्यस्तदाचष्टे इत्येतस्मिन्नर्थे । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्[1] । मृगरमणमाचष्टे मृगान् रमयतीति ॥ दृश्यर्थायामिति किमर्थम् ? ॥ यदा हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्ट इत्येव तदा भवितव्यम् ॥*॥ आलोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥*॥ कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, *आलोपश्च*[2] कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । आरात्रिविवासमाचष्टे रात्रिं विवासयतीति । ॥*॥ चित्रीकरणे प्रापि ॥*॥ चित्रीकरणे प्राप्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्[6] । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते—सूर्यमुद्गमयतीति ॥*॥ नक्षत्रयोगे ज्ञि ॥*॥ नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयतीति ॥ तत्तर्हीदं बहु वक्तव्यम् ? ॥ ॥*॥ न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ॥*॥ न वा वक्तव्यम् ॥ किं

---

प्र.] हि ग्राम इति । ग्रामे मृगाणामसंभवात्तु तद्दर्शनार्था प्रवृत्ति । 'दृश्यर्थाया'मित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम् । राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेऽपि णिज्भवति । आरात्रिविवासमिति । यावद्रात्रेर्विवासोऽतिक्रमणं तावत्कथां कथयतीत्यर्थः । चित्रीकरण इति । आश्चर्यकरणे गम्यमाने तत्प्राप्तोनीत्यनार्थे णिज्वक्तव्यः । संभावयत इति । 'भू प्राप्तावात्मनेपदी'त्यस्य रूपम् । पुष्येणेति । पुष्यो योगक्रियाया कर्ता, स हि चन्द्रमसं सम्बध्नाति । तत्रोभयप्राप्तौ कर्मणीति नियमात् षष्ठ्यभावे

---

उ] रुढ इत्यपास्तम् । प्रवृत्तिर्भवतीति । आख्यानविषयेत्यर्थः । इत्येतच्चेति । प्रयोगाऽनुसारादिति भावः । यावदिति । रात्रिरूपकालेनाऽत्यन्तसंयोग । कथा-ख्याऽऽख्याने कर्मेति भावः । 'आरात्रिविवास'शब्देन तावत्पर्यन्तकथा लक्ष्यन्त इति बोध्यम् । कालाऽत्यन्तसंयोगे गम्यमाने इत्यर्थः । वसेरकर्मकतया 'गतिबुद्धी'ति रात्रेः कर्मत्वं हेतुमण्णिचि तद्वदिहापि बोध्यम् । भाष्ये—प्राप्यति,—सम्पदादित्वेन भावक्त्रियन्तात्सप्तमी । एवं 'ज्ञौ'त्यपि । भू प्राप्ताविति । 'सम्भावयते' इत्यस्य प्राप्नोतीत्यर्थः । उभयप्राप्ताविति । नियमेन चन्द्रमसः प्रतीतेरुभयप्राप्तिः । वस्तुतः सहयोगेऽत्र तृतीया, कर्तृप्रयोगाऽभावेनोभयप्राप्तेरभावात् । मतान्तरोक्तं प्रकृतिवदित्यस्यार्थेऽपि न दोषः, हेतुमण्णिचि गत्यादिनियमात्तृतीयाया एव पुष्येणे-

---

१ इदं क्वचिन्न । २ इति क्वचिन्न । ३ 'भवतीति' । ४ 'आलोपश्च' 'आलोपश्च' पा० । ५ 'प्राप्यर्थे' 'प्राप्त्यर्थे'पा० । ६ इदं प्रक्षिप्तम् । ७ 'सूर्योद्गमं' पा०।

प्रयोजको नाम भवति तेनैतत्तुल्यम्॥ यदि तर्हि सर्वं इमे स्वभूत्यर्थं प्रवर्तन्ते क प्रयोज्यार्थः ?।।१।। यदभिप्रायेषु सज्जन्ते ।।२।। यदभिप्रायेषु[आ]सज्जन्ते– ईदृशो घटौं कुरु, ईदृशौ पुटको कुर्विति। आदित्यश्चास्याभिप्राये सज्जते । एष तस्याऽभिप्रायः–'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावये' येति, तं चास्यादित्योऽभिप्रायं निर्वर्तयति ॥ भवेदिह वर्तमानकालता युक्ता स्यात्–'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सभावयते सूर्यमुद्गमयती'ति, तत्रस्थस्य हि तस्यादित्य उदेति। इह तु कथं वर्तमानकालता.–कंसं घातयति बलिं बन्धयतीति, चिरहते [च] कंसे चिरबद्धे च बलौ ?॥

प्र ]त्यर्थं । परिभाषा इति । दण्डनादिका । यदभिप्रायेष्विति । तदुक्तं हरिणा– 'निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये। अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये'॥इति। सज्जन्त इति भाष्यकारवचनादात्मनेपदम्। परस्मैपदी तु सज्जि –

उ ]हि हेतुत्वम् , अयश्च न तथेत्यप्रयोजकोऽहेतुरिति चेदित्यर्थः ।प्रवृत्तिर्युभयत्रा- ऽनपेक्षेति । प्रयोज्यप्रवृत्तिरुभयत्रापि प्रयोजकाभिप्रेतानपेक्षा तन्मात्रानुद्देश्यकेत्य- र्थं । उभयत्रानपेक्ष्यैव किञ्चिदिति । 'किंचि'दित्यस्य प्रयोजकाभिप्रेतमात्रं । किंचिदनपेक्ष्येतोभयोर्देवदत्तादित्ययोर्भवतीत्यर्थः । तस्मान्मात्रांशो न निवेश्य । अन्यथा णिजनवकाश इति भावः । तदेव व्युत्पादयति–नेह कश्चिदिति । 'सत्या- मपि प्रेरणाया'मिति शेषः । सनिन्द उपालम्भः–परिभाषणम्।तदाह–दण्डना- दिका इति । अनेन सर्वत्र स्वेष्टसाधनताज्ञानं प्रवर्तकमित्युक्तम् । भाष्ये–कुर्वतः प्रयोजक इति । प्रयोजकाऽभिप्रेतमात्रोद्देशं विनापि स्वेष्टोद्देशेनैव कुर्वतः पुंसः प्रयो- जको दृश्यते । यथा गुरुः शिष्यानध्ययने प्रवर्तयतीत्यादौ, तद्वत्सूर्यस्यापीति भावः ।

क प्रयोज्यार्थ इति। प्रेरणाजन्यप्रवृत्त्याश्रयः प्रयोज्यस्तस्य प्रेरणया कोऽर्थः, प्रयोजनं किमिति प्रश्नः । उत्तरमाह–यदभिप्रायेष्वासज्जन्त इति । प्रेरकाऽभि- प्रायेष्वासज्जन्ते । तदभिप्रायं ज्ञात्वा तं निर्वर्तयन्ति यदेष एव प्रयोज्यस्य प्रेरणया- ऽर्थ इत्यन्वयः । एवञ्च क्रियाया स्वाभिप्रायानुरोधफलकः तज्ज्ञापनमेव प्रेरणाफल- मिति भावः । 'अभिप्राय'पदेन तद्विषय उच्यते। तदाह–ईदृशावित्यादिना । तदाह निमित्तेभ्य इति । स्वभूतिसाधनत्वज्ञापकप्रेरणादिभ्य इत्यर्थः । ननु स्वभूति- फलकप्रवृत्तिप्रयोजकाऽभिप्रायाऽनुरोधोऽपि किमर्थं इत्यत आह–अभिप्रायेति। ननु शिष्यादीनां स्वार्थसिद्धये गुर्वाद्यभिप्रायानुरोधेऽपि सूर्यस्य तदनुरोधे मानाऽभाव, फलाऽभावश्चेति चेन्न, अभिप्रायसम्पत्तिमात्रेण तदुद्देश्यकप्रवृत्त्याश्रयत्वादिरूपप्रयोज्य- प्रयोजकभावाऽध्यारोपेण णिजिति तात्पर्यात् । भाष्यकारवचनादिति । तत्प्र- योगादस्याऽनुदात्तेत्त्वमपि पाठेऽनुमीयत इति भावः । ननु 'चिरहते कंसे' इत्युक्त्या

अत्रापि युक्ता॥ कथम् ?॥ ये तावदेते शौभिका[1] नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्तीति॥ चित्रेषु कथं ?॥ चित्रेष्वपि उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कंसकर्षण्यश्च[2]॥ ग्रन्थिकेषु कथं, यत्र शब्दग्रन्थगडुमात्रं[3] लक्ष्यते?॥ तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशादृद्धीर्[4]व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति॥ आतश्च सतः –॥*॥ व्यामिश्रा[5]॥*॥ व्यामिश्राश्च दृश्यन्ते। केचित्कंसभक्ता भवन्ति केचिद्वासुदेवभक्ताः। 'वर्णान्यत्वं'[6] खल्वपि पुष्यन्ति। केचित्कालमुखा भवन्ति केचिद्रक्तमुखाः[7]। 'त्रैकाल्यं'[8] खल्वपि लोके लक्ष्यते,

प्र ]गच्छतु यमज गताविति। चिरहत इति। चिरप्रवृत्तत्वाद्धात्वर्थस्य प्रयोजकव्यापारस्य वर्तमानत्वाऽभावात्। उपसङ्ख्यानारम्भे तु न दोषः, आख्यानस्य वर्तमानत्वादित्यर्थः। शौभिका इति। कंसानुकारिणा नटेन व्याख्यानोपाध्यायाः। कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या परिगृहीतः कंसो भाष्ये विवक्षितः। ग्रन्थिकेष्विति। कथकेष्वित्यर्थः। तेऽपीति। तदुक्तं हरिणा–'शब्दोपहितरूपांस्तु बुद्धेर्वि

उ ]प्रयोजकव्यापारस्य वर्तमानकालत्वाऽभावो नोक्त इत्यत आह–चिरप्रवृत्तेति। कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भावः। कंसाद्यनुकारिणा–कंसादिसदृशानाम्। भाष्ये–प्रत्यक्षं कंसं घातयन्तीति। तादृशेनैव वासुदेवेनेत्यर्थः। उद्गूर्णा इति। उद्यता इत्यर्थः। 'गूरी उद्यमने' इत्यस्य रूपम्। एवं चित्रलेखका अपि चित्रस्थं कंसं तादृशेनैव कृष्णेन घातयन्तीत्यर्थः। 'ग्रन्थिक'पदे 'अत इनिठनौ' इति ठन्। शब्दग्रन्थगड्वेति। शब्द–कथकमुखोच्चार्यमाणः। ग्रन्थ–तद्रूपग्रन्थपुस्तकरूपः। गड्डु मनुष्यमहान। न तत्र कश्चिदपि कंसादिबुद्धिविषय इत्यर्थ इत्याहुः। तेऽपि–ग्रन्थिका अपि। तद्वृद्धीर्व्याचक्षाणा इति। तदैश्वर्याणीत्यर्थः। तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयभूतान् सतो विद्यमानान् कंसादीन् प्रकाशयन्ति–श्रोतृबुद्धौ समर्पयन्तीत्यर्थः। विद्यमानत्वेन बुद्धिविषयत्वे हेतुमाह–आतश्च सत इति। व्यामिश्राश्चेति। चो हेतौ। यतो विरुद्धपक्षाश्रिता दृश्यन्त इत्यर्थः। न ह्यतीतवबुद्धौ तत्सम्भवतीति भावः। तत्कालत्वे स्वपक्ष इव वर्णान्यत्वं पुष्यन्ति–पुष्टं कुर्वन्ति, दधतीत्यर्थः। तत्रैव युक्त्यन्तरमाह–त्रैकाल्यं खल्वपीति। एवं च बुद्धिविषयसत्त्वेनैव सर्वोऽपि व्यवहार इति भावः। शब्देति। शब्दसमर्पितबुद्धिविषयाकारानित्यर्थः। साधनत्वेनेति।

१ 'शोभनिका' 'शोभिका' पा०। २ 'कंसस्य वासुदेवस्य च' कंसस्य 'कृष्णस्य च' पा०। 'कंसकर्षण्यो हि रज्जवः'। 'कार्षण्यः'। ३ 'गडु' पा०। 'ग्रन्थनमात्र'। ४ 'वृद्धी' 'बुद्धी' 'तद्बुद्धी' पा०। ५ 'व्याश्रिताश्च' 'व्यामिश्रिताश्च'। 'ताहि'। ६ इदं वार्त्तिकं। भाष्यमेव न वार्त्तिकमित्यन्ये। ७ 'केचिद्रक्तमुखाः'। ८ 'कालमुखाः'।

'गच्छ हन्यते कंसः'। 'गच्छ घानिष्यते कंस'। 'किं गतेन, हतः कंस' इति ॥

* इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

## कण्ड्वादिभ्यो यक् ॥ ३।१।२७ ॥

किमर्थः ककारः ? ॥*॥ [ यकोऽके ] गुणवृद्धिप्रतिषेधार्थः ॥१॥ क्ङितीति गुणवृद्धिप्रतिषेधो यथा स्यात् ॥ नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते, धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते, न चायं धातोर्विधीयते। कण्ड्वादीनि हि प्रातिपदिकानि ॥ ॥*॥ कण्ड्वादिभ्यो वावचनम् ॥२॥ [ कण्ड्वादिभ्यो वावचनं कर्तव्यम् ]। कण्ड्वादिभ्यो वेति वक्तव्यम् ॥*॥ अवचने हि नित्यप्रत्ययत्वम् ॥३॥ अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत ॥ तत्र को दोषः? ॥*॥ तत्र धातुविधितुक्प्र-

प्र ] पयता गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते' ॥इति॥ शिष्टं [भाष्यं] स्पष्टम्॥ इति कैयटकृते भाष्यप्रदीपे तृतीयस्य प्रथमे पादे द्वितीयमाह्निकम्॥ कण्ड्वादिभ्यो यक्। किमर्थ इति। द्वैविध्यं कण्ड्वादीनां दर्शयितुमुपन्यासः। ककारप्रयोजनमेव दर्शयितुं वस्त्वन्तरमुपक्षिप्यते-कण्ड्वादिभ्यो वावचनमिति। यदा कण्ड्वादीनि प्रातिपदिकानि तदा 'वे'ति वक्तव्यमित्यर्थः। तत्र को दोष इति। नित्येऽपि प्रत्यये क्विपा 'कण्डूः'रित्यादि सिध्यतीति भावः। क्विपा यथेष्टं रूपं न सिध्यतीति दर्शयितुमाह-तत्रेति। 'कण्डूय'शब्दात् क्विपि विहितेऽकारलोपस्य स्थानिव-

उ.] द्भुद्धिविषयवधादेरित्यर्थः ॥ इति नागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे द्वितीयमाह्निकम्।

कण्ड्वादिभ्यो। धातुभ्यो यकि गुणनिषेधकतया कस्य चारितार्थ्यादाह-द्वैविध्यमिति। प्रातिपदिकत्वमात्रन्तु प्रष्टा मन्यते। उपक्षिप्यत इति। तत्समाधाने नैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः। यदेति। प्रातिपदिकान्येवेत्यर्थः। केवलधातुपक्षे तु वावचने क्रियमाणेऽपि 'कण्डूयती'त्यनिष्टप्रसङ्गः, कण्ड्वादित्वादवुवङादिप्रसङ्गश्चेति भावः। न च प्रातिपदिकान्येव सन्तु,अत्र च सूत्रे 'करणे' इत्यनुवर्तते, तेन कण्डूं करोतीत्यर्थे यक्। अन्यदा त्वभावः। तेन कण्ड्वादित्यादेः सिद्धिः। यगन्तेभ्यस्तु न क्विप्, अनभिधानात्। तेन नोवङ्गहित प्रयोगः। एवञ्च 'वा'-वचनं किमर्थमिति वाच्यं,'सुख्यती'त्यादावतो लोपानापत्तेः। क्विपा-समस्तार्थक्विपा। यथेष्टमिति। वीप्सया 'यथा सादृश्ये' इत्यव्ययीभावः। एकवचने कुतो नोदाहृतमित्यत आह-कण्डूय इति। धातीति। 'क्वौ लुप्त न स्थानिव'दिति निषेधादिति भावः।

1 इदं वार्तिकं। २ इदं वार्तिकं लुप्त सम्प्रति।

निषेध ॥*॥ तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात्। कण्ड्वौ कण्ड्वः । 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति उवङादेशः प्रसज्येत । इह कण्ड्वा कण्ड्वे इति,—'लोपो व्योर्वली'ति[विसर्जनीयदीर्घत्व]प्रतिषेधः प्रसज्येत।तुक्प्रतिषेधः— वल्गु मन्तुरिति । 'ह्रस्वस्य पिति कृति [तु'गिति ] तुक् प्राप्नोति॥*॥ ह्रस्वयलोपौ च ॥*॥ ह्रस्वयलोपौ च वक्तव्यौ स्याताम् । ह्रस्वे—वल्गुर्मन्तुरिति ॥ किमर्थमिदं, न ह्रस्व एवायम् ?॥अन्तरङ्गत्वादेकादेशे दीर्घत्वे कृते अकार इति दीर्घस्य प्राप्नोति। ह्रस्व ॥ यलोप—यलोपश्च वक्तव्यः। कण्डूः मन्तुः वल्गुरिति॥ किमर्थमिदं, न वलीत्येव सिद्धम् ?॥ वलीत्युच्यते न चात्र वलादिं पश्याम ॥ ननु च क्विब्लादिः॥ क्विब्लोपे कृते वलाद्यभावान्न प्राप्नोति॥ इदमिह सम्प्रधार्य—क्विब्लोप क्रियतां वलि लोप इति, किमत्र कर्तव्यम् ?। परत्वात्क्विब्लोप । नित्य यलोप, कृतेऽपि क्विब्लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वात्पर-

प्र ]त्वगुवङि कर्तव्ये नास्ति । 'क्विप्युपधानवदर्थनिर्हासतुन्वे'त्विति निषेधात् । यद्यपि स्थानिवत्त्वादुवङ् स्यात्तथापि वकारस्योठ् करिष्यते । 'आदिग्रहणं पूर्वो वकार' इत्यूठि कर्तव्ये स्थानिवत्त्वाऽभाव । अत एवोठ पुनरवङ् भवति, तत्र

उ ]अयसीति। तदसार्वत्रिकम्। किन्तु 'नो विधौ ने'त्येन सार्वत्रिकमिति भाव । इद प्रौढ्या। आदिग्रहणेति। 'पूर्वो विधि'मितिनिषेधादित्यपि बोध्यम् । अत एवेति । आदिग्रहणं च पूर्वत्वेन स्थानिवत्त्वाऽभावादित्यर्थ । पुनरुवङ्नेति । 'लक्ष्ये लक्षण-स्ये'ति न्यायादित्यपि बोध्यम् । न चाऽनादिग्रहणं च पूर्वत्वं स्थानिवद्भावेन लभ्यं, वस्यादेशत्वाऽभावात्, उठ आदेशत्वेऽपि तस्य कार्याऽभावात् । न च 'सर्वे सर्वप-दादेशा' इति 'कण्डू'टयस्य कण्डुवादेशे तस्य स्थानिवत्त्वादनादिग्रहणं च पूर्वत्वेन तस्य 'कण्डु ऊ' इत्यादेशे कार्ये स्थानित्त्वम्, 'सर्वे सर्वपदादेशा' इत्याधियाऽच परस्मिन्नित्यस्याऽप्रवृत्ते । अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकता आकरोक्ता सङ्गच्छते। न च 'प्रातिपदिकानी'त्युपलक्ष्य भाष्ये वावचनात्, 'यदा कण्ड्वादीनि प्रातिपदिकानी'त्यादिना स्वयं तथैव व्याख्यानाच्च,अल्लोपस्य स्थानिवत्त्वेऽपि तत्र परे पूर्वस्य 'कण्डू' इत्यस्य धातुत्वाऽभावादुवङोऽप्राप्त्याऽसङ्गतोऽयं कैयट ।सन्ट-येदं 'लोपो व्यो'रिति सूत्रे कैयटे इति वाच्यम्, अनिर्देशेनाऽकारे सत्यपि श्रवणा-ऽभावेन तस्य लौकिकसत्ताविरहात्, ठिक्युक्तव्यवस्थान्तमूलकेन 'प्रत्ययो'रिति सूत्रभाष्योक्तेनैकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वाभिप्रायमिमानात् । तत्रेति । औजस्निमित्तक उवङ् प्राप्नोति, एकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वात् । न

१ इति. क्वचिन्न। २ इह क्वचिन्न। ३ 'प्रतिषेद्धव्य '। ४ 'अन्तरङ्गत्वादकार-कारे'। ५ 'यलोप'। ६ 'वद'। ७ 'क्विपो लोपे' 'क्विपि लोपे'। ८ अपि क्वचिन्न।

स्याच्च क्विल्लोपे कृते यलाद्यभावाच्च प्राप्नोति ॥

एवं तर्हि प्रत्ययलक्षणेन भविष्यति ॥ वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

अथ क्रियमाणेऽपि यग्वचने यदा यगन्तात्क्विबुत्पद्यते दोषा एवमेव भवन्ति[1]॥ नैतेभ्यस्तदा क्विब्दृश्यते॥ किं कारणम् ?॥ अन्येभ्योऽपि दृश्यत इत्युच्यते न चैतेभ्यस्तदा क्विब्दृश्यते ॥ यथैव तर्हि क्रियमाणे[ऽपि[3]]यग्वचनेऽन्येभ्योऽपि दृश्यत इत्येवमत्र क्विन्न भवत्येवमक्रियमाणेऽपि यग्वचने न भविष्यति । अवश्यमेतेभ्यस्तदा क्विब्विधेयः ॥ किं प्रयोजनम् ?॥ एतानि रूपाणि यथा स्युरिति ॥ तत्तर्हि यग्वचनं कर्तव्यम् ? ॥ न कर्तव्यम् । उभयं कण्ड्वादीनि,–धातवश्चैव[4] प्रातिपदिकानि च । आतश्चोभयं,–कण्डूयतीति हि क्रियां कुर्वाणे प्रयुज्यते, 'अस्ति मे कण्डू'रिति वेदनामात्रस्य सान्निध्ये ॥

प्र ]'कण्डू'शब्दादौ तस्मिन् कृतयोरवङ् प्राप्नोति । 'ओः सुपी'ति तु यणादेशोऽसंयोगपूर्वस्योक्तः । नित्यत्वाच्चेति । 'वेरपृक्तलोपात्पूर्वं वलि लोप' इत्येतदनाश्रित्येदमुच्यते । वर्णाश्रय इति । वलूपाश्रयो व्योर्लोपो न तु प्रत्ययाश्रयः । यग्वचने तु सति पक्षे यगनुपादानादपीष्टसिद्धिः । नैतेभ्य इति । कर्तरि क्विपो विधानात् । कण्डूरिति च कर्त्रर्थानवगमादिति भावः । अवश्यमिति । सम्पदादित्वाद्भावे कर्तव्य इति भावः । वेदनामात्रस्येति । वेदना च सत्त्वरूपा प्रतीयते न च साध्यरूपेति भावः । तत्र धात्वधिकारवशात्तेभ्य एव स्वार्थे यग्भवति, प्रातिपदिकेभ्यस्तु स्वाद्युत्पत्तौ सत्यो

उ ]र्वेनन्निमित्ते ऊवङि अल्लोपस्य स्थानिवत्त्वम्, 'क्वौ लुप्त'मिति निषेधादितिभावः । भाष्ये–ह्रस्वस्य पितीति । ह्रस्वोच्चारणसामर्थ्याद्दीर्घाऽभाव मन्यते । तद्दूनयताह ह्रस्वयलोपौ चेति । अन्तरङ्गत्वादिति । 'अकृतव्यूह'परिभाषा तु नास्त्येवेति भावः । वेरपृक्तलोपादिति । इद प्रायस्तीति चिन्त्यम् । 'लोपो व्यो'रिति सूत्रे 'क्वालुपम् ङ्क्वान'मिति वार्तिकम् । कर्त्रर्थाऽनवगमादिति।यत्र तु कर्त्रर्थोऽवगमस्तत्र भवत्येव, यथा भिषज्यते क्विपि भिषक्शब्दे इत्याहु । केचित्त्विदम्भाष्यम नन्तपरमेवेत्याहु । सम्पदादित्वादिति । तेन वेदनामात्रप्रतिपादनेऽपि कण्डूरित्यादि सिद्धमिति भावः ।

भाष्ये–एतानीति । कण्डूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः।एतमपि कण्ड्वादिस्थाय यग्वचनं कर्तव्यमेवेत्याह–तत्तर्हीति । भाष्ये–उभय कण्ड्वादीनीति।उभयेत्यर्थे 'उभय'मित्यव्ययम्।द्विप्रकाराणीत्यर्थः ।उभयाऽङ्गीकारे प्रमाणमाह–आतश्चेति । ननु भावक्विबन्तेन वेदनामात्रे कण्डूरित्यादिसिद्धिरत आह–सत्त्वरूपेति। सैवेत्यर्थः । भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीतिः स्यादिति भाव।

१ 'क्विबुत्पद्यते' 'क्विबुत्पत्स्यते' 'दृश्यते' । २ इद क्वचिन्न । ३ 'इत्यत्र क्विप्' पा० । ४ 'धातवश्च प्राति' पा० । ५ 'भिन्नतदु' ।

अपर आह—'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥ इति ॥

कमेर्णिङ् ॥ ३।१।३० ॥

किमर्थोऽयं णकारः । [ ॥१॥ णकारो ] वृद्ध्यर्थः । ॥२॥ 'कामयते'ति वृद्धिर्यथा स्यात् ॥ क्रियमाणेऽपि वै णकारे वृद्धिर्न प्राप्नोति ॥ किं कारणम्?॥ 'क्ङिति चे'ति प्रतिषेधात् ॥ णित्करणसामर्थ्याद्भविष्यति॥ अत उत्तरं पठति— ॥३॥ णिङि णित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधप्रसङ्गः ॥४॥ णिङि णित्करणं सावकाशम् ॥ कोऽवकाशः ? ॥ सामान्यग्रहणार्थो णकारः ॥

क्व सामान्यग्रहणार्थेन णकारेणार्थः ? ॥ 'णेरनिटी'ति । णिङि णित्करणस्य सावकाशत्वाद्वृद्धेः प्रतिषेधः प्राप्नोति॥ङित्करणमपि तर्हि सावकाशम् ॥ कोऽवकाशः ? ॥ सामान्यग्रहणाविघातार्थो ङकारः ॥ क्व सामान्यग्रहणाविघातार्थेनार्थः ? ॥ अत्रैव ॥ शक्योऽत्र सामान्यग्रहणाविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम् । तत्र ङकारानुबन्धे वृद्धिप्रतिषेधः प्राप्नोति ॥ अवश्यमत्रात्मनेपदार्थो ङकारोऽनुबन्ध आसङ्क्तव्यो ङित इत्यात्मनेपदं यथा स्यात् ॥

---

प्र ]'कण्डू'रित्यादिरूपसिद्धिः । कस्य चेति । धातुविधानप्रतिबद्धार्थधातुत्वसनाद्यन्तगुणनिर्देशार्थं कस्यचिदपि धातु—कण्ड्वादिर्यक्सुपान्तनीति ज्ञायत इत्यर्थः । आह चेति । दीर्घान्तपाठश्च पाणिनेः धातुत्वमेषां निश्चीयते । नित्ये हि धातुत्वे नित्यं च यकि सति अकृत्सार्वधातुकयोरिति दीर्घस्य सिद्धत्वाद्दीर्घपाठोऽनर्थकः स्यादित्यर्थः ।

---

उ ]कण्ड्वादिभ्यो भावे क्विबाप्येवेति तत्त्वम् । स्वार्थे इति । 'नित्य'मिति शेषः । वाग्रहणाऽननुवृत्तेः । तेन धातोः कण्डूवतीत्यादि न। आर्द्धधातुकस्यवेति । न च माऽपि माऽस्तु कोऽपि मास्त्विति वाच्यम्, मुख्यतीत्यादावतो लोपार्थं तस्या आवश्यकत्वात्।

दीर्घपाठ इति । 'वल्गु-मन्तु'प्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थ इति तेषामपि दीर्घो भवति । यत्तु तेषामदीर्घपाठेन वल्गुप्रभृतीनां दीर्घाऽभावो ज्ञाप्यते, तन्न, भाष्यविरोधात्, शास्त्रबाधकल्पनाऽपेक्षया प्रातिपदिकत्वकल्पनस्यैव लघुत्वाच्च । एतेन ककारेणार्द्धधातुकत्वमेव कल्प्यतामित्यपास्तम्, धातुत्वकल्पनस्यैव लघुत्वात् ॥ [ कण्ड्वादिभ्यो यक् ] ।

कमेर्णिङ् । भाष्ये-ङित्करणमपि सावकाशमिति। एवञ्च परत्वाद्वृद्धिः प्राप्नोतीति भावः । यद्यमिति । नित्यनिर्देशो ह्रस्वाऽभावफलक उभ्यभावे स्वत एव ह्रस्वत्वस्यावश्यं सत्त्वाद् भवे सत्ता ज्ञापयतीत्यर्थः । ननु णिङ्येवेत्ययुक्तं, प्रतिषेध

---

१ 'किमर्थो णकार' पा० । २ 'णकारो वृद्ध्यर्थः' इति वार्तिकत्वञ्च लुप्तमिति गौडाः । ३ 'अचो ञ्णितीति' पा० । ४ 'स्यादिति' पा० । ५ 'नुबन्धात्' पा० ।

एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'न कमेर्वृद्धिप्रतिषेधो भवती'ति यदयं 'न कम्यमि-चमा'मिति मित्संज्ञायाः प्रतिषेधं शास्ति ॥ ॥*॥ मित्प्रतिषेधस्त्वे चार्थवत्त्वात् ॥*॥ मित्प्रतिषेधस्य चार्थवत्त्वाद्वृद्धिप्रतिषेधः प्राप्नोति ॥ अर्थवान् मित्प्रति-षेधः ॥ कोऽर्थः ?॥ णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं मा भूदिति ॥

ननु च तस्यां अपि 'ह्रिति ने'ति प्रतिषेधेन भवितव्यम्॥न भवितव्यम् । उक्तमेतत्—'ह्रिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरर्थ्यर्थ'मिति ॥ एवं तर्हि न णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं प्राप्नोति॥ किं कारणम् ?॥ 'णिङा व्यवहितत्वात्'॥लोपेकृते नास्ति व्यवधानम् ॥स्थानिवद्भावाद्व्यवधान-मेव ॥ णिङ्येव तर्हि माभूदिति ॥ णिङि च न प्राप्नोति ॥ किं कारणम् ?॥ 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति॥नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति ॥ किं कारणम् ? ॥ णिङा व्यवहितत्वात् ॥ लोपे कृते नास्ति व्यवधानम् ॥ स्थानिवद्भावाद्व्यवधानमेव॥ इदं तर्हि प्रयोजनं यत्तच्चिण्णमुलो-र्दीर्घोऽन्यतरस्यामिति दीर्घत्वं शोऽस्ति तत्कमेर्णिङि मा भूदिति ॥ किं पुनः कारणं तत्र दीर्घोऽन्यतरस्यामित्युच्यते न ह्रस्वोऽन्यतरस्यामित्येवोच्येत?॥ यथा-प्राप्तं[चापि]कमेर्ह्रस्वत्वमेव । तत्रायमप्यर्थो ह्रस्वग्रहणं न कर्तव्यं भवति, प्रकृ-तमनुवर्तते ॥ क प्रकृतम् ?॥ 'मितां ह्रस्व' इति ॥ का रूपसिद्धिः—अशमि

प्र ]कमेर्णिङ् । प्रतिषेधबलीयस्त्वादिति।प्रतिषेधस्य विध्यपवादत्वाद्बाधकत्वा-द्बलीयस्त्वम् । णिङन्तस्येति। कामयमानं प्रयुङ्क्त इति णिच्। णिङ्येवेति। णिङ्नि-मित्ता या वृद्धिस्तस्या णिङ्निमित्तं ह्रस्वत्वं मा भूदित्येवमर्थो मित्प्रतिषेधः स्यादित्य-ज्ञापको णिङ्वृद्धेरित्यर्थः । णिङि चेति । 'ह्रस्वत्व'मिति शेषः । असिद्धमिति । ह्रस्वे कर्तव्ये बहिरङ्गा वृद्धिरसिद्धेत्यर्थः । स्थानिवद्भावादिति । 'क्ङिलुगुपधात्वे'-त्युपधाविधौ स्थानिवत्त्वनिषेधः प्रत्ययविधावेवेति तत्रैवोक्तम् । तथा च 'पटयती',-त्यत्र वृद्धौ कर्तव्यायां निषेधो न भवति । किं पुनरिति । कमेर्णिङि वृद्धिप्रतिषेधा-त्तिन्य ह्रस्वत्वमेव स्थितमिति मित्प्रतिषेधो न कर्तव्यो भवति, नित्यप्रसङ्गस्तु णिङि

उ ]प्रवृत्तौ ह्रस्वस्यैव भावादत आह—णिङ्निमित्तेति। ता त्वसौ मन्यते।ह्रस्वे इति। वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाभावात्तस्याऽप्रवृत्तौ ज्ञापकत्वमेव स्थितमिति भावः । ननु पर्जन्यवल्लक्षणप्रवृत्तेर्ह्रस्वदशायामपि प्राप्तह्रस्ववारणेन दीर्घश्रवणाय मित्त्व-निषेधः सार्थक इत्यरुचेराह भाष्ये—नैव चेति । प्रत्ययविधावेवेति । 'पारिखीय' इत्यादौ । भाष्ये 'इदन्तर्हि प्रयोजनं यत्तच्चिण्णमुलोरि'ति। 'मित्संज्ञाप्रतिषेधस्ये'ति

१ इद क्वचित्। २ 'नन्वेतस्या'। ३ 'तर्हि णि'। ४ 'ह्रस्वत्व न'। ५ 'न तत्र'।

अशामि, शाम शामम् शामशाम ? ॥ वृद्ध्या सिद्धम्॥ न सिध्यति-'नोदात्तोपदेशस्य मान्तस्यानाचमे'रिति वृद्धिप्रतिषेध प्राप्नोति ॥ नैष दोषे । चिण्कृतो स वृद्धिप्रतिषेधो, न णिचि॥ इद तर्हि-अजनि अजानि, जन जनम् जान जानमिति। जनिवध्योश्चेति वृद्धिप्रतिषेध प्राप्नोति ॥ सोऽपि चिण्कृतोरेव, न णिचि ॥ णिज्व्यवहितेषु तर्हि यङ्लोपे चोपसङ्ख्यान कर्तव्य स्यात् । शमयन्त प्रयोजितवान्-अशशमि अशाशमि शम शमम् शाम शाम। शशमयते -अशशामि-अशशामि । शशाम-शशामम् शशाम शशामम्॥ किं पुन कारण न सिध्यति?॥ 'चिण्णमुल्परे णौ मितामङ्गाना ह्रस्वो भवती'त्युच्यते,यश्चात्र णिश्चिण्णमुल्परो,न तस्मिन्मिदङ्ग,यस्मिश्च मिदङ्ग नाऽसौ णिश्चिण्णमुल्पर ॥णिलोपे तर्हि कृते चिण्णमुल्पर ॥ स्थानिवद्भावान्न चिण्णमुल्पर ॥ अथ 'दीर्घोऽन्यतरस्या'मित्युच्यमाने यावता स्थानिवद्भाव कथमेतत्सिध्यति ? ॥ एतदिदानीं दीर्घग्रहणस्य प्रयोजन-'दीर्घविधि प्रत्यजादेशो न स्थानिवद्भवती'ति स्थानिवद्भावप्रतिषेध·

प्र ]वृद्धेर्ज्ञापक एवेति भाव । उपसङ्ख्यान कर्तव्य स्यादिति । पाक्षिकवृद्धिप्राप्त्यर्थमित्यर्थ ।एतदिदानीमिति।ननु पाक्षिकदीर्घनिवृत्त्यर्थो मित्प्रतिषेधो न ज्ञापक । यद्वेति।अणिडन्ता दमेर्यदा णिच्क्रियते तदा तत्र ह्रस्वनिवृत्त्यर्थो मित्प्रतिषेध स्यादित्यर्थ ॥

उ ]शेष ।'चिण्णमुलो'रित्यत्र ह्रस्वपक्षे निन्यासे दोषमाह भाष्ये-णिज्व्यवहितेष्विति। पाक्षिकेति । वृद्धेर्वैकल्पिकत्वार्थं 'वृद्धिर्वे'त्युपसङ्ख्यान कर्तव्यमित्यर्थ । दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानात्सिद्धमिति भाव । भाष्ये-दीर्घविधिप्रतीति । 'न पदान्त'सूत्रे जशादिसाहचर्येण नपादिकदीर्घस्यैव ग्रहणेन 'पूर्वत्राऽसिद्धे न स्थानिव'दित्याश्रित्य भगवता 'न पदान्त' सूत्रे तेषा प्रत्याख्यानेन च स्थानिवत्त्वनिषेधाऽप्रसक्तेरिदम्भाष्यमेकदेश्युक्तिरिति नार्थभायनम् । णिजन्तात्ण्यिचि उपसङ्ख्यानेन सिद्ध । 'शशम शशाम'मित्याद्यपि यङ्लुगन्तात्णमुलि सिद्धम् । 'न च 'चिण्णमुलो'रित्यत्र दीर्घविधानसामर्थ्यादनपादिकेऽपि निषेध इति वाच्यम्, 'हेड'धातोरहिडि अहीडि-इति भाष्येण चारितार्थ्यात् । ह्रस्वविधाने हि 'अहेडी'ति स्यादिति वाच्यम्। केचित्त्वेतद्भाष्यप्रामाण्यात्तत्रत्यवार्त्तिके 'वरेयलोपस्वरवर्ज'मित्यत्र दीर्घोऽप्युपसङ्ख्येय । तदिदानीं दीर्घग्रहणस्य प्रयोजनमिति । अतत्यभाष्यस्वारस्याद्देऽधातोर्घत्वादिप्रामाणिक पाठ ,'ऊकाल'सूत्रस्थभाष्यप्रामाण्याच 'वा दान्ते'तिसूत्रस्थभाष्यप्रामाण्याच चिण्णमुलोरिति सूत्रस्थभाष्यावेति यथाश्रुतभाष्य रमणीयमेवेत्याहु । 'तस्मात्प्रतिषेध प्राप्नोती'त्यस्य 'तन्निषेधो वक्तव्य' इति शेष । अत एव

१ इद क्वचिन्न । २ 'इद तर्हि' । ३ 'अत्र चिण्णमुल्परो' । ४ 'स्थानिवद्भावप्रतिषेध' । ५ 'मेवैतावता' । ६ 'वरवज' । ७ 'तनदि' ।

सिद्धो भवति ॥ यदा खल्वप्यायादय आर्धधातुके वा भवन्ति तदा णिचि णिङ्नास्ति तेद्यो मिप्रतिषेध स्यात्। तस्मात्प्रतिषेध प्राप्नोति ॥*॥ उक्त वा ॥ ॥ [ उक्त वा ]॥ किमुक्तम्?॥ 'तद्धितकाम्योरिक्प्रकरणा दि[ग्लक्षणेयो गुणवृद्धो प्रतिषेध। नचैपग्लक्षणा वृद्धिरि]ति । ॥ [ कमेर्णिङ् ॥ ] ॥

आयादय आर्द्धधातुके वा ॥ ३।१।३१ ॥

कथमिदं विज्ञायते-'आयादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽया दीनां निवृत्तिर्भवतीति, आहो स्विदायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवती ति ॥ किं गतमेतदियता सूत्रेण, आहो स्विदन्य तरस्मिन्पक्षे भूय सूत्रं कर्तव्यम् ? ॥ गतमित्याह ॥ कथम् ? ॥ यदा ताव दायादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवतीति तदाऽविशेषेण सर्वमायादिप्रकरणमनुक्रम्य 'अयादय आर्द्धधातुके वे'त्यु च्यते । यदाऽप्यायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीना मुत्पत्तिर्भवतीति, तदेकं वाक्यं तच्छेद च । गुपूधूपविच्छिपणिपनिभ्य आय । 'आर्द्धधातुके वा' । ऋतेरीयङ् । 'आर्द्धधातुके वा' । कमेर्णिङ् ।

प्र] आयादय । आर्द्धधातुक इति परसप्तमीमाश्रित्य पक्षद्वयविचार । द्वयोरपि च पक्षयोर्दाप इति मत्वा प्रश्न-कथमिति। आहोस्विदन्यतरस्मिन्निति। निवृत्ति शब्द उत्पत्तिशब्दो वा निर्देष्टव्य इति मन्यते । यदा तावदिति । एतद्वाक्य निरपेक्षैरायादिविधानवाक्यै परनिमित्तानपेक्षा आयादयो यदा विधीयन्ते तदाऽनेना र्द्धधातुके तेषां पक्षे निवृत्ति क्रियते । यद्यपि नित्या शब्दास्तथापि शास्त्रप्रक्रियाया क्व चिदुत्पन्नस्य लोपादिद्वारेण निवृत्ति क्रियते । क्व चिदपवादविधानेनोत्सर्गस्याऽ नुत्पत्तिर्ज्ञाप्यते । ततो निवृत्तिपक्षो नाऽनुपपन्न । यदेति । यदा सूत्रत्रयस्याऽय

उ] 'उक्त वे'ति 'वा'शब्द सङ्गच्छते । [ कमेर्णिङ् ] ।

आयादय । विषयसप्तम्यां विचाराऽऽरम्भादाह-यदीति । आयान्तादिभ्य आर्द्धधातुके निवृत्त्यं विध्यभावान्निवृत्तिर्विधेया । तदर्थं तदुपादानं कार्यमित्याह— निवृत्तीति।उत्पत्तिशब्दो वेत्यस्य प्रयोजनं चिन्त्यं सर्वत्र विधिवाक्ये तदभावे ऽप्युत्पत्त्यवगते । एकतरपक्षेऽधिकवर्तव्यतायामेव भाष्यतात्पर्याच्च। क्वचिदनुत्पत्ति शब्दो वेति पाठ । आयाद्यनुवृत्त्यैव सिद्ध 'आयादय' इति पञ्चम्या विपरिणम्यते । आयादिभ्यो यदार्द्धधातुकं तत्र परे गुपादिभ्य आयाद्यनुत्पत्तिरित्यर्थं । परन्तु इद गुर्विति दिक् । पक्षे निवृत्तेरिति । निवृत्तिपद विनापि सामर्थ्यादिति भाव । क्वचिदिति । 'अदिप्रभृतिभ्य' इत्यादौ । क्वचिदिति । यथा दीर्घविषये यण् ।

१ 'तदर्थ'। २ अय पाठ क्वचित्क । ३ 'द्विरि चे'त्यनोच। ४ 'सिद्धऽस्य'।

'आर्द्धधातुके वे'ति[1] ॥ कश्चात्र विशेषः ? ॥*॥ आयादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्वार्द्धधातुकमिति चोभयथाऽनिष्टप्रसङ्गः ॥*॥ आयादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्वार्द्धधातुकमिति चोभयथाऽनिष्टं प्राप्नोति । यदि विज्ञायते-'आयादिभ्यो यदार्द्धधातुकं तस्मिन्विवक्षिते वाऽऽयादीनां निवृत्तिर्भवती'ति, गुप्तिः जुगोपेति चेष्टं न सिध्यति, इदं चाऽनिष्टं प्राप्नोति-गोपाञ्चकार गोपेति । इदं तावदिष्टं सिद्धं भवति गोपायाञ्चकार गोपायेति ॥

अथ विज्ञायते-'आयादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्विवक्षिते वाऽऽयादीनामुत्पत्तिर्भवती'ति । गुप्तिर्जुगोपेति चेष्टं सिद्धं भवति । इदं चाऽनिष्टं न प्राप्नोति-गोपाञ्चकार गोपेति । इदं त्विष्टं न सिध्यति-गोपायाञ्चकार गोपायेति ॥

इदं तावदिष्टं सिध्यति-गोपायाञ्चकारेति ॥ कथम् ? ॥ अस्त्यत्रायादिप्रकृतेर्यदार्द्धधातुकं लिट्, तस्मिन्विवक्षिते वाऽऽयादय, आम्प्रत्यये पतिष्यति यथा विकरणास्तद्वत्[2] ॥ इदं तर्हीष्टं न सिध्यति-गोपायेति ॥*॥ सिद्धं तु सार्वधातुके नित्यवचनादनार्थित्य वाविधानम् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [ 'सार्वधातुके नित्यवचनादनाश्रित्य वाविधानम्' ] । अविशेषेणाऽऽयादीना-

प्र ]शेषः शेषस्त्वैकवाक्यतया सत्यामार्द्धधातुके परत आयादयो विकल्पेनोत्पद्यन्त इति पक्षः । यदि तर्ह्येकवाक्यता तत सार्वधातुक आयादयो नोत्पद्येरन् । नैष दोषः । 'गुपूधूप'त्यनेनार्द्धधातुके वेति वक्तव्ये पृथक्करणात्सार्वधातुकेऽप्यायादयो भवन्तीति ज्ञायते । आर्द्धधातुक एव त्वेकवाक्यतया विकल्पेन विधीयन्ते ।

गुप्तिरिति । 'गोपाय'शब्दस्य प्रत्ययान्तत्वादकारेण क्तिनो बाधनाद्गुप्तिर्न सिध्यति । आमि परत आयस्य पाक्षिक्या निवृत्त्या जुगोपेति न सिध्यति । दोषोपलक्षण-

उ ]सूत्रस्थस्येति । 'आयादय' इति पदोपादानसामर्थ्यादित्यर्थः । अन्यथाऽव्यवहितत्वात् 'स्नेर्णि'त्यस्यैव शेषः स्यात् । पृथक्करणादिति । तत्सामर्थ्याद्भिन्नवाक्यतया एकवाक्यतया च वाक्यार्थ इति भावः । एकं वाक्यमिति-भाष्यस्य-एकवाक्यमर्थोऽर्थः । अकारेण-'अ प्रत्यया'दिति विहितेन । क्तिनो बाधादिति । स्त्रीप्रकारापूर्वं वाऽस्मत्यानिवेरभावादिति भावः । आमि परतइति । यद्यपि लिड्यार्द्धधातुके आयादिनिवृत्तिस्तथापि प्रत्ययस्थानेन प्रत्ययान्तत्वादाम्प्राप्नोति । वस्तुत परत्वादामि कृते एवैतत्प्रवृत्तिरिति बोध्यम् । तद्भावितेति । अत एव लुकि लोपः सत्वसिद्धिः । भाष्ये गुप्तिर्जुगोपेति चेष्टं सिद्धमिति । आयस्य वैकल्पिकत्वात्तदभाव सिद्धिरित्यर्थः । इदन्त्वनिष्टमिति । इदमुपलक्षणं, क्तिनि कृते आयप्रत्यये 'गोपायती'त्यनिष्टमपि प्रसज्यतेत्यपि बोध्यम् । अन्यास्तु न, आर्द्धधातुकोपदेशे

१ इति क्वचित् । २ 'चोभयथा' । ३ 'सिद्धं भवति' । ४ 'विकरण' । ५ इदं क्वचिन्न ।

वाविधिमुक्त्वा 'सार्वधातुके नित्य मिति वक्ष्यामि । *॥ स्यादिवलीयस्त्व तु विप्रतिषेधन तुल्यनिमित्तत्वात् ॥*॥ स्यादिभिस्त्वायादीना बाधन प्राप्नोति विप्रतिषेधेन ॥ किं कारणम् ? ॥ 'तुल्यनिमित्तत्वात्' । तुल्य हि निमित्तमायादीनः स्यादीना च । स्यादीनामवकाश —करिष्यति हरिष्यति । आयादीनामवकाश —गोपायति धूपायति। इहोभय प्राप्नोति—गोपायिष्यति धूपायिष्यतीति । परत्वात्स्यादय प्राप्नुवन्ति ॥*॥ न वाऽऽयादिविधानस्यानवकाशत्वात् ॥*॥ न वैष दोष ॥ किं कारणम् ? ॥ 'आयादिविधानस्याऽनवकाशत्वात्' । अनवकाशा आयादय , उच्यन्ते च ते, वचनाद्भविष्यन्ति ॥

ननु चेदानीमेवाऽवकाश प्रक्लृप्त —गोपायति धूपायतीति? ॥ अत्रापि शप्स्यादिर्भवति ॥ यद्यत्रापि शप्स्यादिर्भवति न त्वत्रास्ति विशेष सति वा शप्यसति वा ॥ अन्यदिदानीमेतद्युच्यते—'नास्ति विशेष' इति । यत्तु तदुक्तम् 'आयादीना स्यादिभिरव्यासोऽवकाश' इति, स नाऽस्त्यवकाश । अवश्य खल्वप्यत्र शप्स्यादिरेषितव्य ॥ किं प्रयोजनम् ? ॥ गोपायन्ती धूपायन्तीति, शप्श्यनो नित्यमिति नित्यो नुम्यथा स्यादिति ॥ यदि तर्ह्यनवकाशा आयादय , आया

प्र ]दैनेन् ,'गुप्त'इत्यपि न सिध्यति, क्तप्रत्यये परत आयस्य निवृत्तौ सत्या प्रत्ययलक्षणन गुणप्रसङ्गात्। न च प्रत्ययलोपसूत्रे लोपस ज्ञासूत्रे वा तद्भावितग्रहणमाश्रितम्। गोपायतीति । विशेषाऽभावादत्र शपोऽनुपपत्तिरित्यायादीनामवकाश मन्यते । अन्यदिदानीमिति । विशेषाऽभावेऽपि लक्षणवशात् प्रवर्त्य शपेति भाव । 'कामयते'इत्यन

उ ]तद्भावात् ।सार्वधातुके नित्यमिति । अत्र नित्यग्रहणमार्थिकार्थकथन सामान्यसूत्रे 'वे त्येनाऽस्य नित्यत्वमिद्धे । स्यादिभिरिति । लादशप्रकरणुत्तर 'स्यतासी' इति पक्षे इदम् । तुल्य हि निमित्तमिति । अनेनाऽन्तरङ्गत्व निरस्यति। परत्वात्स्यादय इति । तथा च 'सकृद्गते न्यायेनाऽऽयो न स्यादेवेति भाव । न च 'सार्वधातुके नित्य मित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिक आयो भविष्यति न हि तेनाऽपि विप्रतिषेध , तस्याऽनैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम्, अपवादविषये उत्सर्गाऽप्रवृत्त्या सार्वधातुकविषय तदप्रवृत्ते । न त्वत्रास्तीति । विशेषकृच्छ्राभ्य तदभाव न प्रवर्त्तते इति मन्यते । स नाऽस्त्यवकाश इति।पर्जन्यवल्लक्षणप्रवृत्तेरिति भाव । विशेषोऽप्यस्तीत्याह—कामयत इति । 'गोपायन्ती त्यत्रापि विशेष भाष्ये दर्शयति—अवश्य खल्वपीति । यदि तर्हीति । एवचाऽनवकाशत्व

१ इद क्वचिन्न। २ 'परत्वात्तु'। ३ इदमत्र क्वचिन्न । ४ विप्रतिषेधन तुल्य'। ५ 'तीति' पा० । ६ 'यद्यप्यत्रापि' पा० । ७ सति वाऽप्यसति' पा० । ८ 'गोपायन्ति' पा० । ९ इद क्वचिन्न ।

द्विभि स्यादीनां बाधनं प्राप्नोति ॥ यथा पुनरयं सूत्रभेदेन परिहारो यदि पुनः 'शपि नित्य'मित्युच्येत ॥ सिध्यति, सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु॥ननु चोक्तं'सत्यादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्यदार्द्धधातुकमिति चोभयथाऽनिष्टप्रसङ्ग' इति ॥ नैष दोषः । आर्द्धधातुक इति नैषा परसप्तमी ॥ का तर्हि ?॥ विषयसप्तमी॥ आर्द्धधातुकविषये इति । तत्रार्द्धधातुकविषये आयादिप्रकृतेरायादिषु वा कृतेषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ॥

## सनाद्यन्ता धातवः ॥ ३।१।३२ ॥

अन्तग्रहणं किमर्थं न 'सनादयो धातव' इत्येवोच्येत ?॥ केनेदानीं तदन्तानां भविष्यति ? ॥ तदन्तविधिना ॥ अत उत्तरं पठति ॥*॥ सनादिष्वन्तग्रहणमुक्तम् ॥*॥ [सनादिष्वन्तग्रहण उक्तम् ]॥ किमुक्तम् ?॥ "पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थ"मिति । इदं चाऽपि प्रत्ययग्रहणमयं चाऽपि संज्ञाविधिः ॥

किमर्थं पुनरिदमुच्यते, न'भूवादयो धातव'इत्येव सिद्धम् ?॥ न सिध्यति । पाठेन धातुसंज्ञा क्रियते न चेमे तत्र पठ्यन्ते ॥ कथं तर्ह्येषामपठ्य-

प्र ]नु विशेषोऽस्त्येव, शप्यन्तरेणाऽस्य रूपस्याऽभावात् । यथा पुनरिति। वार्त्तिककारेण तु 'सिद्धं सार्वधातुके नित्यवचना'दिति ब्रुवता सूत्रभेदेन परिहार उक्तः । अवश्यकर्त्तव्ये च सूत्रभेदे 'शपि नित्य'मिति न्यासः कर्त्तव्यो येन दोषो न भवतीत्यर्थः । ननु तौदादिकत्वादिष्टे दोष भाष्य न तु शपा । एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति, शिति नित्यमिति तु न्यासः कर्त्तव्यः ।[आयादय आर्द्धधातुके वा]।

सनाद्यन्ता । भूवादय इत्येवेति। भुवो वादयो भूवादय इत्यर्थाश्रयणादिति भावः । ततश्च क्रियावाचित्वात्सनाद्यन्तानां धातुसंज्ञा सिध्यतीत्यर्थः । पाठेनेति। 'आदि'शब्दस्य प्रत्येकं सम्बन्धादर्थपाठाभ्यां धातुसंज्ञा विहिता, तेनाऽऽगवयत्यादयः समानशब्दाश्च सर्वनामादयो निवर्तिता भवन्तीति भावः । स्थानिवद्भावेन धातुसंज्ञासिद्धिं वक्ष्यतीति पृच्छति–कथं तर्हीति । ननु भूवचिप्रभृतिशब्दा धातुपाठे पठिता एव ।

उ ]तै स्यादिबाधने लोपासिध्यती'त्यादिसिद्धिरिति भावः । यथा पुनरित्यत्र सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमनीहत्य यदि पुनः 'शपि नित्य'मित्युच्यते तदा सर्वदोषपरिहार इति भाष्याक्षरार्थः । क्वचिद्भाष्ये एव 'शिती'ति पाठः । विषयसप्तमीति । 'आर्द्धधातुक' इति सूत्रभाष्योक्तरीत्या ज्ञानिनिर्देश इति भावः । सूत्रे 'आयादय' इत्युक्तिरनन्तरस्यैव सम्बन्ध इति भ्रमवारणार्थेति तत्त्वम् ।[आयाः] सनाद्यन्ता । गणपाठानिबन्धना संज्ञा कथमेषामत आह–भुवो वादय इति ।

१ 'मुच्यते'।२'आर्द्धधातुकविषये'। ३ अयं पाठो लुप्त । ४ 'शिती'ति क्वचित्।

मानानां धातुसंज्ञा भवति–अस्तेर्भूः ब्रुवो वचिः चक्षिङः ख्याञिति॥ यद्यप्येते तत्र न पठ्यन्ते प्रकृतयस्त्वेषां तत्र पठ्यन्ते, तत्रैः स्थानिवद्भावात्सिद्धम्॥ इमेऽपि तर्हि यद्यपि तत्र न पठ्यन्ते येषां स्वार्थे आदिश्यन्ते ते तत्र पठ्यन्ते, तत्र स्थानिवद्भावात्सिद्धम् ॥ न सिध्यति । 'आदेशः स्थानिव'दित्युच्यते न चेमे आदेशाः ॥ इमेऽप्यादेशाः ॥ कथम् ? ॥ आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ॥ एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते न चेमे षष्ठीनिर्दिष्टस्यादेशाः ॥ षष्ठीग्रहणं निवर्तिष्यते॥ यदि निवर्त्तते, अपवादे उत्सर्गकृतं प्राप्नोति 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति केऽप्यण्कृतं

प्र ]नैतदस्ति।नहि ये धातुपाठे पठितास्त इहाऽनिर्दिश्यन्ते, शब्दान्तरत्वादेशानां । सन्यादीनां तु पाठशङ्कापि नास्ति। येषां स्वार्थ इति । इष्यादीनामित्यर्थः । न चेम इति । इतिशब्दस्याऽऽदेशशब्दस्य तत्र ग्रहणात्तेषामेव स्थानिनिरस्यादेशत्व प्रसिद्धं तेषामेव तत्र ग्रहणमित्यर्थः । इमेऽपीति । क्रियानिमित्तत्वस्यादेशशब्दस्य तत्र ग्रहणमित्यर्थः । अत्र चोदयन्ति–यदि स्थानिवद्भावेन सनादीनां धातुसंज्ञा विधीयते,तदा तदन्तविध्यभावात् प्रत्ययानामेवाङ्गत्वानि बन्धनान्यादीनि प्राप्नुवन्ति, प्रत्ययान्तानां चेष्यन्ते । यङ्प्रत्ययश्च समभिहारविशिष्टक्रियावचनाद्धातोः स्वार्थे विधीयते, आयादयश्च शुद्ध एव स्वार्थे विधीयन्ते इति तेषां स्थानित्वस्य चिन्त्यत्वस्य भावात् स्थानिवत्त्वाऽभावाद्धातुसंज्ञा न प्राप्नोति । अत्रोच्यते–कर्तुमिच्छतीति कर

उ ]वदन्तानि सादयः । स्वार्थवाचकाः । क्रियावाचिन इति यावत् । यथा सूत्र्यादीनां क्रियावाचकत्वं तथोक्तम् । तेनेति । पाठेन आणवन्यादयः, अर्थेन–'या' इत्येवमादय इत्यर्थः । 'पाठेने'त्यादि ' 'न चैते तत्र पठ्यन्त' इत्यन्तैवाऽत्र भाष्यकारोक्तिः । धातुसंज्ञासिद्धिमिति । 'सनाद्यन्तेऽपी'ति शेषः । पृच्छतीत्यस्यैकदेशीति शेषः ।

शब्दान्तरत्वादिति । स्थानषष्ठीनिर्देशादपूर्वोपदेशाच्च । तस्यैतत्र ग्रहणं तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः । पठितसादृश्येन भवतीत्यादिस्थानापन्न एषामपि तत्रैव धातुत्वऽप्याह—जग्ध्यादीनामिति । भाष्यमुपलक्षणमिति भावः । अनेनास्यैकदेश्युक्तित्वं ध्वनितम् । स्त्वीति । तस्या योगाद्व्यवस्थादिति भावः ।न चेमे इति भाष्ये। इमे–सनादय इत्यर्थः । तत्रेति । 'स्थानिव'दित्यत्रत्यर्थः । स्थानिनिवृत्त्येति । स्थानषष्ठीनिर्देशादिति भावः । क्रिया निमित्तत्वस्येति । आदेशग्रहणसामर्थ्यादानुमानिकस्यैव यौगिकस्यापि ग्रहणमित्याशयः । तदन्तविध्यभावादिति । स्थानिवत्सूत्रे विशेष्याऽसन्निधानात्तदभावे आदेशान्तस्थानिदेशेन धातुत्वाऽभाव इति भावः । यद्वा क्रियादिविधौ तदभावादित्यर्थः । अत्रोच्यत इति । 'धातोः कर्मण' इत्यादेः समानकर्तृकर्मभूतधात्वर्थविशि-

प्राप्नोति ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'नापवादे उत्सर्गकृतं भव-
ती'ति यदयं श्यन्नादीन् कांश्चिच्छितः करोति—श्यन्श्नंश्नाश्नुरिति ॥

स्यतासी लृलुटोः ॥ ३।१।३३ ॥

इमे विकरणाः पठ्यन्ते तत्र न ज्ञायते क उत्सर्गः कोऽपवाद इति । तत्र
वक्तव्यमयमुत्सर्गोऽयमपवाद इति॥ इमे ब्रूमः—॥ ॥यगुत्सर्गोऽपवादे[२] शबादि
स्यादयश्च ॥*॥ [ यगुत्सर्गोऽपवादः शबादिः स्यादयश्च ] ॥

यद्येवम्—॥*॥ अपवादविप्रतिषेधाच्छबादिदर्शनम् ॥*॥ अपवादवि-
प्रतिषेधे शबादिभिः स्यादीनां बाधनं प्राप्नोति । शबादीनामवकाशः —
पचति यजति । स्यादीनामवकाशः —पक्ष्यते यक्ष्यते । इहोभयं प्राप्नोति—

प्र ]गतत्यर्थे 'सर्वे सर्वपदादेशा' इति न्यायाद्वर्तमानस्य इषे प्रसक्ते चिकीर्षिशब्दस्स
तन्त आदिश्यत इति सिद्धं तदन्तस्य धातुत्वम् । एवं समभिहारविशिष्टलवनक्रिया
वाचि'लू'शब्दप्रयोगप्रसङ्गे 'लोलूय'शब्द आदिश्यते गुपे प्रसङ्गे 'गोपाय'शब्द
इति भगवतो भाष्यकारस्याभिप्रायः । [ सनाद्यन्ता धातवः ] ॥

स्यतासी । उत्सर्गापवादपरिज्ञानाय पृच्छति—इमे इति । यगुत्सर्ग इति ।
भावकर्मग्रहणाननुवृत्त्या सार्वधातुकमात्रे विधानादिति भावः । अपवादविप्रति
षेधादिति । यगपवादानामुभयेषां शबादीनां स्यादीनाञ्च विप्रतिषेधे सति परत्वा

उ ]दिच्छाया प्रतिपाद्याया तत्स्थानेऽर्थाभिधानयोग्यो यद्वान्वर्थकर्मकत्वमिच्छाया प्रति
पादयितुं तद्वाचादि सनन्त आदेश इत्यादि ग्रन्थेगार्थ इति भावः । तदन्तगप्रयुक्ता
विकरणास्तु न, अदादिवादेरननिर्देशात् । करणाङ्गे इत्यर्थे कर्तुमि(ग्डै)त्येनस्समभिव्या
हारेण वर्तमानस्यैवे प्रसङ्गे 'सर्वे सर्वपदादेशा' इति न्यायात्सनन्त आदिश्यत इत्य
र्थः । भगवतो भाष्यकारस्येति । 'एकदेशिन' इति शेषः । अत एव इमे तर्हि
यद्यपीत्यादिभाष्यग्रन्थ एकदेशिनोरुक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम् ॥

स्यतासी लृलुटोः । उत्सर्गापवादधर्मेति । स चाऽपवादविषयेऽवश्यं प्रसिद्ध
उत्सर्गस्य धर्मः । तदप्रतियोग्यविषयाऽभावेन निरवकाशत्वरूपोऽपवादस्य ।

भावकर्मग्रहणाऽनुवृत्तौ उत्सर्गत्वाऽसम्भवादाह—भावेति। भाष्ये—स्यादीनवकाश
पक्ष्यत इति । कर्मादौ शपोऽप्राप्तेरिति भावः । यत्रेति । 'अनेकलक्षणप्रसङ्ग' इति
बहुव्रीहिः । अपवादशब्दश्च तद्विषयपरः । अनवकाशोऽपवाद इति भावः ।
धर्मविधौ स्थितिः। अन्यथा'ऽस्ति च सम्भवो यदुभयं स्या'दिति वार्तिकस्यार्थे 'पचती'—

१ 'श्र'मिति क्वचित् । २ इदं भाष्यमित्यन्ये । वार्तिकमित्यपरे । ३ 'वाद
शबादय' पा०।४ अयं पाठो लुप्तः।५ एतत्स्थाने—'यदि यगुत्सर्गोऽपवादः शबादि
स्यादिश्च' पा०। ६ 'पवादप्रतिषेधे शबादि' पा०।७ इदं प्राचीनं लुप्तम्।८ 'पठति' ।

पश्यति यक्ष्यति । परत्वाच्छ्यनादयः प्राप्नुवन्ति ॥*॥ अपवादो नामानेकलक्षणप्रसङ्गः ॥*॥ अपवादो नाम स भवति यत्राऽनेकलक्षणप्रसङ्गः । अत्र चैव भावकर्मणोर्यग्विधीयते कर्तरि शप् । क्व प्रसङ्गो यद्भावकर्मणोर्यक् कर्तरि शबादयो बाधेरन् ?॥ एवं तर्हि—॥ ॥यक्शपावुत्सर्गौ अपवादाः श्यनादयः स्यादयश्च ॥*॥ एवमपि—॥*॥अपवादविप्रतिषेधाच्छ्यनादिबाधनम् ॥*॥ अपवादविप्रतिषेधाच्छ्यनादिभिः स्यादीनां बाधनं प्राप्नोति।श्यनादीनामवकाशः—दीव्यति सीव्यति। स्यादीनामवकाशः—पक्ष्यति यक्ष्यति। इहोभयं प्राप्नोति—देविष्यति सेविष्यतीति। परत्वाच्छ्यनादयः प्राप्नुवन्ति॥ नैष दोषः । शबादेशाः श्यनादयः करिष्यन्ते, शप् च स्यादिभिर्बाध्यते। तत्र दिवादिभ्यः स्यादिविषये शबेव नास्ति कुतः श्यनादयः ॥ तत्तर्हि शपो ग्रहणं कर्तव्यम् ?॥ न कर्तव्यम्। प्रकृतमनुवर्तते ॥ क्व प्रकृतम्?॥'कर्तरि शप्'इति॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥नैष दोषः । 'दिवादिभ्यः' इत्येषा पञ्चमी 'शप्'इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति ॥ प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥ नायं प्रत्ययविधिः । विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ॥

*अथ वाऽनुवृत्तिः करिष्यते।'सार्वधातुके यक्'।स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति ।* 'कर्तरि शप्' । स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति । *'दिवादिभ्यः श्यन्'। स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति ॥*

तथ वाऽन्तरङ्गाः स्यादयः ॥ काऽन्तरङ्गता ?॥ लावस्थायामेव स्यादयः सार्वधातुके श्यनादयः ॥ [ स्यतासी लृलुटोः ] ॥

---

प्र ]च्छ्यनादयः स्युरित्यर्थः । अपवाद इति । यत्रोत्सर्गलक्षणस्याऽपवादलक्षणस्य च प्रसङ्गस्तत्राऽपवादव्यवहारः । यग्विधौ तु भावकर्मग्रहणानुवर्तनात्कर्तरि यकोऽप्रसङ्गः नाऽस्ति तदपवादत्वमित्यर्थः । लावस्थायामिति । ननु च परत्वादादेशैर्भाव्यम् । न च लादेशानामनित्यत्वम्, कृतेष्वपि स्यादिषु आतृतीयपरिसमाप्तेर्धात्वधिकारऽपि धातोर्विहितस्य लस्येत्येव विहितविशेषणाश्रयणादादेशानां प्रसङ्गात् । एवं तर्हि कृतेष्वपि आदेशेषु स्यादयो भवन्तोऽन्तरङ्गा एव भवन्ति । नहि तद्विधौ

---

उ ]स्यादौ शपि कृते तमेव निमित्तीकृत्य यकस्यादिनि भावः ।भाष्ये—अथवाऽनुवृत्तिरिति । एवञ्च तत्तत्सन्निधौ विधानसामर्थ्यात्साम्यप्रवादबाधनमिति भावः । लावस्थायामिति भाष्यस्य—आदेशोपत्तेः प्रागेव स्यादय इत्यर्थः प्रतिभाति। तत्र शङ्कते—ननु चेति । अनित्यत्वमिति । व्यवधानेन धातोः परत्वाऽभावादप्रवृत्तेरिति

---

१ इदं भाष्यमित्यन्ये । २ इदं क्वचित् । ३ इदं भाष्यं न वार्तिकमित्यन्ये ।
४ 'करिष्यन्ति' पा० । ५ 'भवतीति' पा० ।

## सिब्बहुलं लेटि ॥ ३।१।३४ ॥

॥१॥ सिब्बहुलं छन्दसि [ सनाद्यन्ते लेयवादयः ] ॥२॥ सिबुत्सर्ग-

म ]शब्देन सार्वधातुकत्वमर्थविशेषो वा कर्त्रादिराश्रित । इत्याद्ययस्तु तदाश्रयत्वा द्बहिरङ्गा । अतश्च चैतदभ्युपगन्तव्य–'कृतेषु लादेशेषु स्यादय क्रियन्ते' इति । अन्यथा तासे परस्य लसार्वधातुकस्यानुदात्तत्वविधानेन विकरणस्य स्वरो लसार्वधातुकस्वर बाधत इति–अस्यार्थस्य कथ ज्ञापक स्यात् । यदि हि लस्थाया तासि क्रियेत पश्चात्सार्वधातुक, तदा सति शिष्टत्वात्सार्वधातुकस्योदात्तत्वे प्राप्तेऽप्राप्तानुदात्तार्थं वचनमिति ज्ञापकत्व नोपपद्येत । ये त्वाहु –सङ्ख्याविधानवाक्येनात्मनेपदपरस्मैपदप्रकरणेन च लादेशविधानवाक्यस्यैकवाक्यताया लादेशाना बहिरङ्गत्वात्तत्र स्थायामेवान्तरङ्गत्वात् प्रतिपदविधानाच्च स्यादयो भवन्तीति तैस्तासे परस्य लसार्वधातुकस्यानुदात्तविधानस्य पूर्वोक्तार्थज्ञापकत्वमसमर्थित भवति । [ स्यतासी ] ।

सिब्बहुलम् । सिबुत्सर्ग इति। परनिमित्तमनुपादाय सनादिवर्ग धातो सि

ड ]भाव ।अन्यथेति।इदत्र ज्ञापकम्–'अनुदात्तस्वदमेकवचनं'मित्यत्र भाष्ये स्पष्टम्। लादेशोत्तर स्यादिप्रवृत्तौ तु सति शिष्टस्यादिस्वरनिमित्तस्वर्ज्यमानस्वरेण लसार्वधातुकानुदात्तत्वे सिद्धे पुनर्विधीयमान तज्ज्ञापकाय सम्पद्यत इति भाव । ये त्विति । एतन्मते 'अन्यत्र विकरणेभ्य' इत्यशो वाचनिक इति बोध्यम् । प्रतिपदविधाना च्चेति चिन्त्य, निरवकाशत्वाभावादिति कश्चित् ।परे तु–'अनुदात्त'मिति सूत्रे भाष्ये सतिशिष्टस्वरबलीयस्त्वे 'सुनुत' इत्यादौ सार्वधातुकस्वरनाव स्यादिति शङ्कया वार्तिककारेणोक्त 'स्यादिस्वराऽप्रसङ्गस्तासे परस्यानुदात्तवचना'दिति । 'परत्वाग-देश' इत्यत्र च तन्मतम् । अत्राप्यसवर्णविप्रतिषेधाच्छ्यनादिभि स्यादिबाधन-मिति वार्तिकोक्तपूर्वपक्षस्य तन्मताऽनुसारेण समाधानद्वयमुक्त्वाऽथ वेति तृतीय समाधानम्भगवतोक्तम् । तस्याऽयम्भाव –'आर्द्धधातुक' इत्यनुवृत्त्याऽऽर्द्धधातुकत्वा-वस्थाया स्यादय इत्यन्तरङ्गा इति । विकरणस्वरस्य दुर्बलत्वन्त्वेतत्पक्षे वाचनिक-मेव । कैयटोक्तमर्थान्तेन सार्वधातुकादिसापेक्षत्वं बहिरङ्गत्व न युक्त, तस्याऽत्र शास्त्रेऽनाश्रयणादित्युक्तम् । अत एवाऽत्र विप्रतिषेधो वार्तिककृतोक्त सङ्गच्छते । न्यायसन्तरङ्गत्वमपि स्या न इत्यभियुक्तिरत्रव्याख्या, 'काऽन्तरङ्गता' 'अवस्थाया स्यादय' इति भाष्योक्तिगर्भत्वाच्च । अन्यापेक्षत्वात्तिबादिभ्य पूर्व स्यादय इत्येव वक्तुमौचित्याच्चेत्याहु । [ स्यतासी ललुटो ] ॥

सिब्बहुलम्। उत्सर्गपदार्थमाह–परनिमित्तमनुपादायेति। एव हि सामान्य-विधित्वादुत्सर्गत्व भवति। [भाष्ये]–सनाद्यन्ताधिकार इति। सनाद्यन्त इति येषा-

१ 'दुत्सर्गा' पा० । २ अयमश क्वचिन्नास्ति, किन्त्वग्रे पृष्ठेवार्तिकत्वयाऽस्ति ।

छन्दसि कर्तव्यः॥ 'सनाद्यन्ते नेपर्थ्यार्थः' । सनाद्यन्ताधिकारे च कर्तव्यः ॥ किं प्रयोजनम् ? ॥ 'नेपत्याद्यर्थं । इन्द्रो नस्तेन नेपतु । गा धो नेटौदिति । ॥ ॥ प्रकृत्यन्तरत्वात्सिद्धम् ॥*॥ प्रकृत्यन्तरत्वात्सिद्धमेतत्॥कथम्?॥ प्रकृत्यन्तर नेपति । ॥ ॥ नेपतुं नेष्टादिति दर्शनात् ॥*॥नेपतु नेष्टादिति हि दृश्यते॥

अथ किमर्थं पकार. । ॥*॥ [ पकार ] स्वरार्थ ॥*॥ 'अनुदात्तौ सुप्पिता'विप्येप स्वरो यथा स्यात् ॥ ॥ पित्करणानर्थक्य चाऽनच्कत्वात् ॥*॥ पित्करण चाऽनर्थकम् ॥ किङ्कारणम् ?॥ 'अनच्कत्वात्'। अनच्कोऽयन्तत्र नाऽर्थ. स्वरार्थेनाऽनुबन्धेन पकारेणे ॥ इटि कृते साऽच्को भविष्यति ॥*॥ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ॥ ॥ [ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ] ॥ आगमानुदात्तत्वेनेटोऽनुदात्तत्वं भविष्यति ॥ एव तर्हि सवय कर्तव्य. ॥ किं प्रयोजनम् ? ॥ यदवयासिसीष्ठा । एकाज्लक्षण

प्र ]विधेय ।तेन तदन्तस्य धातुसज्ञाया सत्या नेपवादीनि सिद्ध्यन्ति।नीशब्दात्सिपि गुणे च कृते लोटि च नेपविति रूपम् । प्रकृत्यन्तरत्वादिति । नेपतेरप्रेरणार्थविति पाठत्वस्यार्थ उत्सर्गो न कर्तव्य । अवशसिसीष्ठा इत्याद्यर्थस्तु कर्तव्य एव । सवयमिति । सनादिमध्येऽत्रैव चेति भाव । यदवयासिसीष्ठा इति । यानैरवपूर्वात्

उ ]मधिकारो बुद्धिस्थता तेषु कर्तव्य इत्यर्थ । सिध्यन्तीति। लोऽप्यपि सिप्सिद्धिरित्यर्थ । नेपविति प्रयोगे सिप्शपो समावेश सिध्यति । विकरणत्वे तु स न स्यादिति भाव. । लेट्त्वाच्छन्दसि 'लेटोऽडाटा'वित्यस्याऽप्राप्तिरिति बोध्यम् । अतोत्सर्गः कर्तव्य , स च सनाद्यन्ते कर्तव्य इति पूर्वपक्षद्वयम्। तत्रान्त्य खण्डित एव, उत्सर्गता त्वावश्यकोत्याह–अवयेति । लिडि सिप्सिद्ध्यर्थमुत्सर्ग कर्तव्य इत्यर्थ । भाष्ये–इति हीति । 'नेपतु'इत्यत्र सनादिवर्गे करणे 'नेष्टा'दित्यस्याऽसिद्धि । अत्र करणे 'नेपवि'त्यस्याऽसिद्धि । प्रकृत्यन्तरत्वे तु 'नेष्टा'दिति नयते सिपि सिद्धम् , अत्रैव लेटीतिपदरहितसूत्रकरणादित्याशय । यद्वा 'नेष्टा'दित्यत्र विकरणव्यत्ययेन शपो लुक् ।'नेपतु नेपनादिति दृश्यते' इति भाष्ये पाठ । 'लोरेऽपी'ति शेष । 'नेष्टादिति (हि)दृश्यते',इति लेखकप्रमाद ।अन्यथा प्रकृत्यन्तराऽऽवश्यकत्वं न दर्शितं स्यात् । भाष्ये–आगमाऽनुदात्तत्वादिति । 'तासि'दित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भाव । सनादिमध्ये इति। 'लेटी'ति पदरहितमिति

१ अयमंशो वार्तिकतया पठ्यते क्वचित् ।२ 'कर्तव्यं' 'सनाद्यन्ते च कर्तव्य ' 'वक्तव्य ' । ३ 'नेष्टाम्' पा० । ४ इदं क्वचित् । ५ 'नेप ' पा० । ६ इदं भाष्यमित्यन्ये । ७ 'स्यादिति' पा० । ८ 'कुत ' पा० । ९ 'पकारेणानुबन्धेन' पा० । १० 'इडनुदात्तार्थ' पा० । ११ अयं पाठो दृश्यते । १२ 'इनुदा' ।

इड्वतिषेधो मा भूदिति ॥ कायमकारः श्रूयते ? ॥ न क्व चिच्छ्रूयते । लोपो-ऽस्य भविष्यत्यतो लोप आर्द्धधातुक इति ॥ यदि न क्व चिच्छ्रूयते नार्थः स्वरार्थेन चकारेणाऽनुबन्धेन ॥ एवमपि कर्तव्य एवं ॥ किं प्रयोजनम्? ॥ अनुदात्तस्य लोपो यथा स्यादुदात्तस्य लोपो मा भूदिति ॥ किं च स्यात् ? ॥

प्र ]सप् लिङ् थास् सुट् सीयुट् । भवन्तस्यानस्यानेकाच्त्वात्सीयुडादाविडागमो भवति। यदि पुनः सिपृक्तित्वेन तदानन्वभिमतः उच्चारणार्थो व्याख्येयः । अन्यथा तस्य श्रवणं स्यात् । तत्र सिबन्तस्य धातोरेकाच्त्वादिड्प्रतिषेधः प्रसज्येत । ननु योऽत्र धातुरुपदेशेऽनुदात्तो, साशब्दो न तस्मात् परमार्द्धधातुकं सिपा व्यवधानात्। यस्मा च सिबन्तात्परमार्द्धधातुकं नासावुपदेशेऽनुदात्तः । एवं तर्हि 'सनाद्यन्ता धातव' इत्यस्य यदा समाख्यवयवा धातवो भवन्तीत्यथा व्याख्यानं तदा सिपो धात्ववयवत्वात्तन्निमित्तकेन ग्रहणादिड्प्रतिषेधप्रसङ्गः । यदाऽपि स्थानिवद्भावाश्रयणेन सूत्रप्रत्याख्यानं तदा स्थानिवद्भावेनाऽनुदात्तादेकाच श्रूयमाणात् प्राप्नोत्येवेट्प्रतिषेधः । अनुदात्तस्येति। 'धातो' रित्यनन्तरेऽपि योक्तम् । अथ वैतत्प्रदेशपाठश्रमेणाद्भाष्यम् ।

उ ]भाः ।एवञ्च सपः सार्थकत्वेन सिद्धचरितार्थमिति बोध्यम् ।ननु स्थानपरिवर्तनेन सनादिवर्गे करणे फलाऽभावस्य भाष्ये दृष्टेराह–अथ वेति । अत्राऽपि करणेनेड्सिद्धेरिति तात्पर्यम् । भाष्ये–किम्प्रयोजनमित्यकारविषयः प्रश्नः । यदवयवमिमिष्टा इति। नन्वत्र सिप्यपि तेन व्यवधानाच्चिरेणाऽप्रवृत्तावेट्सिध्यन्त्येवेत्यत आह–सबन्तस्याङ्गस्येति । 'एकाच' इत्यङ्गस्यैव विशेषणम् । 'उपदेशे'-इति चाऽनुदात्तेनैव सम्बध्यते। उपदेशे योऽनुदात्तस्तदवयवेनादेशाऽचोऽङ्गादिति चार्थः । सवर्णनिमित्तकत्वं पूर्वमेव, ततश्च त्वदेशा इति भावः । उच्चारणार्थ इति । इत्सञ्ज्ञायाः फलान्तराऽभावादिति भावः ।उच्चारणे सहायसम्पादनेन चरितार्थस्येत्सञ्ज्ञया लोपेनैव निवृत्तिरिति बोध्यम् । सिबन्तस्य धातोरिति।'अङ्गस्ये'ति वक्तुमुचितम् । संयुटमस्य पत्वाऽभावश्छान्दसः । ननु चेति । तद्घटितादित्यर्थे न सनसिद्धिभिमानः । नाऽस्मादुपदेश इति । सिबन्तस्योपदेशाऽभावादिति भावः । एवञ्च सिपैव सिद्धेऽकारोच्चारणं व्यर्थमिति पूर्वपक्षाशयः । सनादिवर्गेऽप्यऽभिप्रायेणेदरूपफलमुक्तमिति समाधत्ते–एवन्तर्हीति । अकारोच्चारणसामर्थ्यादुपदेशेऽनुदात्तघटितैकाचोऽङ्गादित्यर्थ इति न दोष इति तत्त्वम् । अनुदात्तादेकाच इति । सपि तु परत्वादिडादिषु कृतेषु अतो लोप इति भावः । अथ वेति । अत्र पाठे हि तदन्तस्याऽधातुत्वात्तदप्रसक्तिरिति भावः ।इदमेव युक्तम् । नन्वत्र योऽनुदात्त इकारस्तत्र परतो न लोपः । आर्द्धधातुके हि सः । न च तदनुदात्तमत आह–स्वार्थधातुकाऽनुदात्तत्वे

१ इद कश्चित । २ 'नेडसिद्धि' ।

उदात्तनिवृत्तिस्वर प्रसज्येत ॥*॥ सिब्बहुलं छन्दसि णित् ॥*॥ सिब्बहुल छन्दसि णिद्वक्तव्य । सविता धर्मं साविषत् । प्र ण आयूंषि तारिषत् ।

### कास्प्रत्ययादाममन्त्रे लिटि ॥ ३।१।३५ ॥

॥*॥ कास्ग्रहणे चकास उपसङ्ख्यानम् ॥*॥ कास्ग्रहणे चकास उपसङ्ख्यानं कर्तव्यम् । चकासाचकार ॥ न कर्तव्यम् । 'चकास्प्रत्यया'दिति वक्ष्यामि ॥*॥ चकास्ग्रहणे कास उपसङ्ख्यानम् ॥ ॥ चकास्ग्रहणे कास उपसङ्ख्यानं कर्तव्यम् । कासाचक्रे । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'कास्ग्रहणे चकास उपसङ्ख्यान मिति ॥ नैष दोष ॥ चकास्शब्दे कास्शब्दो ऽस्ति, तत्र 'कास्प्रत्यया दि'त्येव सिद्धम् ॥ न सिध्यति ॥ किं कारणम् ? ॥

प्र ]उदात्तस्येति। छन्दस्युभयथे ति सार्वधातुकत्वादङुपदेशादिति ल्सार्वधातुकाऽनुदात्तत्वे सति प्रत्ययस्वरेण धातुस्वरेण वा सशब्दाऽकारस्योदात्तत्वादुदात्तनिवृत्तिस्वर इट प्रसज्येत । पकारे तु सति अनुदात्त एवेड्भवति । पित्करणसामर्थ्यादेव च सशब्दाऽकारस्य धातुस्वरो न भवति, एतत्प्रदेशपाठाद्वा । याशब्दस्यैव तु भवति । 'तिङ्ङतिङ' इति यो निघात स 'निपातैर्यद्यदी'ति प्रतिषिद्ध । अवशब्दस्य 'तिङि चोदात्तवती'ति निघात । साविषदिति । 'षू प्रेरणे' इत्यस्य लेटि रूपम् । 'तारिष दिति तरते । [ सिब्बहुलं लेटि ] ॥

उ ]सतीति।अत्र पाठे–प्रत्ययस्वरेणेति। सनादिपाठे–धातुस्वरेणेति। 'प्रत्ययस्वरेणे'त्येव युक्त, सनादिपाठस्य स्थानत्यागे फलाऽभावेन भाष्ये दूषितत्वात् । 'पित्करणसामर्थ्या'दित्यपि चिन्त्यम् , एतत्प्रदेशेत्याद्येव युक्तम् । याशब्दस्यैवेति । एवञ्च 'यासिसीष्टा' इत्याद्युदात्तमिति भाव । ननु 'तिङ्ङतिङ' इति निघात स्यादत आह–तिङ्ङतिङ इति । अत्रेद तत्त्वम् ,–अत्रैव पाठे 'लेटी'ति पदरहितं कार्यं, अकारस्तु ल्सार्वधातुकानुदात्तत्वायोत्तरीत्येड्प्रतिषेधाऽभावाय च । उदात्तनिवृत्ति स्वरवारणाय च पकार । अन्तरङ्गत्वाच्च पूर्वं सिपि ततो विकरणव्यवधानेप्यादेशा । अत आर्द्धधातुकोपदेशोऽकारान्तत्वाल्लोपसिद्धिरिति । [ सिब्बहुलं लेटि ] ॥

कास्प्रत्यया । नन्वत्र 'प्रत्यय'ग्रहणं व्यर्थम् 'आममन्त्रे लिटी'ति योगविभागेन सामान्यत आम विधाय कास्ग्रहण नियमार्थं व्याख्येयम्— 'औपदेशिकधातोश्चेत्कास एवे'ति प्रत्ययान्ते सिद्धेरिति चेन्न, अनेकाच्प्रत्ययान्तग्रहणार्थत्वात्। तेन कण्ड्वादिभ्य आचारक्विबन्तेभ्य आम् । ध्वनितं चेद हरदत्तग्रन्थे । न च एकाच्प्रत्ययान्तपरमेवाऽस्तु, इजिग्रहणेनैव सिद्धे प्रत्ययग्रहणवैयर्थ्यापत्ते , गोपायाञ्चकारेत्यादिभाष्यप्रयोगविरोधापत्तेश्च । कास्यनेकाच इति । कासिपदमनेकाज्धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थ । तथा हि

अर्थवत कास्शब्दस्य ग्रहणं, न च चकास्शब्दे कास्शब्दोऽर्थवान् ॥ एवं तर्हि [ ॥*॥ 'कास्यनेकाज्ग्रहणञ्चुलुम्पाद्यर्थम्' ॥*॥ ] 'कास्यनेकाच' इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'चुलुम्पाद्यर्थम्' । चुलुम्पाञ्चकार दरिद्राञ्चकार ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३।१।३६ ॥

॥*॥ गुरुमत आम्विधाने लिण्निमित्तात्प्रतिषेधः ॥*॥ गुरुमत आम्विधाने लिण्निमित्ताद्गुरुमतः प्रतिषेधो वक्तव्यः । इयेष उवोष । गुणे कृते 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्रसज्येत ॥ गुरुमद्वचनमिदानीं किमर्थं स्यात् ?॥ ॥*॥ गुरुमद्वचनं किमर्थमिति चेण्णानुत्तमे यणादिप्रतिषेधार्थम् ॥*॥ गुरुमद्-

प्र ] इजादे । उवोषेति । नन्वत्रोषविदेति विकल्पेनाऽऽमा भाव्यम् । अत आह । द्विवचनबहुवचनयोर्गुणाभावाद्गुरुमत्त्वाऽभावाद्विकल्प सावकाश इति यत्र गुरुमत्त्वं तत्र नित्यमेवाम् प्राप्नोति । एतच्च 'विप्रतिषेधे पर'मिति, प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकारेणोदाहृतम् । तत्र ह्याश्रिते विकल्प एव भविष्यतीति नैतद्दोषोपन्य-सनीयम् । गुरुमद्वचनमिति । ईषतुरीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्त्वादाम भवितव्यमिति गुरुमद्वचनसामर्थ्यादुपदेशावस्थायां गुरुमत

उ ] 'एकाचो धातोर्धर्मस्य एवे'ति नियमपरतया तद्व्याख्येयमिति । एतच्च 'चकास उपसङ्ख्यान'मिति वार्तिकं, सूत्रस्थप्रत्ययग्रहणञ्च न कार्यमिति भाष्यतात्पर्यम् । यथाश्रुतवार्तिकेऽपि प्रत्ययग्रहणस्थानेऽनेकाज्ग्रहणं कर्तव्यमित्येव तात्पर्यमिति हर-दत्तानुसारिणः । अन्ये तु 'कासी'ति सप्तमी, सम्पठिते सूत्रे इत्यर्थः । अन्यथा समाहारद्वन्द्वे टजापत्तिः । इतरेतरयोगे तु द्विवचनापत्तिः । प्रत्ययग्रहणाऽपनये च न मानम् । सूत्रे प्रत्ययग्रहणन्तु योगविभागनियमकल्पनारूपगौरवपरिहारेण स्पष्टा-र्थमेव । एवञ्च 'क'शब्दादिभ्य आचारक्विपि 'कामास' इत्यादिरूपाण्येव, सत्यभि-धाने इत्याहुः । [ कास्प्रत्ययादाममन्त्रे ] ॥

इजादेश्च । भाष्ये लिण्निमित्ताद्गुरुमत इति । गुरुमाने लिण्निमित्तत्त्वं गुरुद्वारा बोध्यम् । द्विवचनबहुवचनयोरिति । तयोः कित्त्वादिति भावः । तत्र द्विर्वचनाऽपेक्षया नित्यत्वाद्विकल्पेन आम् । णलि तु परत्वाद्गुणेन नित्य आम्प्राप्नोतीति दोषः । एतेन 'अत्रापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमनवकाश' इत्यपास्तम् । विप्रतिषेधे इति । यद्यसम्भवे विप्रतिषेधः, अस्ति चाऽत्रोभयोः सम्भवबुद्धिरित्युच्यते तदापि विकल्पसिद्ध्या 'उवोष'त्यस्य सिद्धिरिति भावः । प्रतिपदेति । अनवकाशत्वाऽभावेऽपि पूर्वप्रवृत्तविद नियामकमिति भावः । 'उवोषे'ति क्वचिद्द्वितीयान्तपाठ इत्यन्ये । ननु द्विवचनादौ कित्त्वेन गुणाऽभावे आमभावाय गुरुमद्वचनं चरितार्थमत आह—ईषतुरिति । उपदेशेति । एतच्च

१ इद लुप्त । २ 'कास्यनेकाच चुलुम्पाद्यर्थम्' इत्यन्ये पठन्ति । ३ 'प्राप्नोति'।

चन किमर्थमिति चेण्णल्युत्तमे यजादीनां मा भूदिति । इयजाऽहम् । उव पाऽहम् । ॥*॥ उपदेशवचनात्सिद्धम् ॥*॥ [ उपदेशवद्वचनात्सिद्धमेतत् ] । उपदेशे गुरुमत इति वक्तव्यम् ॥ यद्युपदेशग्रहणं क्रियते उछेराम्वक्तव्यः । उच्छाञ्चकार । व्युच्छाञ्चकारेति ॥*॥ ऋच्छिप्रतिषेधो ज्ञापकः उछेराम्भावस्य ॥*॥ यदयमनृच्छ इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यस्तुड्निमित्तायस्य गुरुमत्ता भवति तस्मादामिति । स तर्हि ज्ञापकार्थं ऋच्छिप्रतिषेधो वक्तव्यः ॥ ननु चावश्यं प्राप्त्यर्थोऽपि वक्तव्यः ॥ नाऽयं प्राप्त्यर्थेन । 'ऋच्छत्यॄता'मिति ऋच्छेर्लिटि गुणवचनं ज्ञापकं 'नच्छेर्लिट्याम्भवती'ति ॥ नैतदस्ति ज्ञापकम् , अन्यर्थमेतत्स्यात् ॥ कथं पुनर्ऋच्छेर्लिटि गुण उच्यमानोऽन्यर्थं शक्यो विज्ञातुम् ?॥सामर्थ्यात् । ऋच्छिर्लिटि आर्त्तीति कृत्वा प्रक्रम्य

प्र ]इत्याश्रयिष्यत इति भावः । णल्युत्तम इति। एतच्चोपलक्षणं,तेन थलपि गृह्यते- इयष्ठ इयनिथेति । लिड्भ्यासस्य सम्प्रसारणे कृते यजादेः इजादयो भवन्तीति । उपदेशवचनादिति।वचनं व्याख्यानमभिप्रेतम्।अन्यथा वचनेन वचनान्तरस्य निरासे को गुणः स्यात् ?। तस्मिन्नित्ययोगे मतुप आश्रयणादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इत्यर्थः । 'उपदेशग्रहण'शब्देनाऽप्युपदेशो गृह्यतेनेति व्युत्पत्त्या व्याख्यानमेवोच्यते।उछेरिति। उछी विवासे इत्युपदेशे गुरोरभावात्ताऽस्य गुरुत्वं नित्यमुक्तं । तुड्निमित्तेति। तुग्ग्रहणमागममात्रोपलक्षणं, तेनाऽऽचकास्त्यत्रापि भवति । प्राप्त्यर्थो पीति।प्रतिषेधप्राप्त्यर्थ इत्यर्थः । ऋच्छेरिति ।आमा व्यवधानेऽपि वचनाद्गुणो भविष्यतीति चेत्, एवं सति 'तस्मिन्निति निर्दिष्टे'इत्यस्य बाध्यत,तस्मादाम एवाऽभावो गुणविधानेन ज्ञाप्यते।सामर्थ्यादिति।'ऋ गतिप्रापणयो'रित्यस्य हिताप वापि ऋच्छादेश कृतो न त्वनादेशः ऋच्छिर्निर्दिष्ट इत्यर्थः । ऋच्छिरिति । तिपि ऋच्छादेश विधानाल्लिटि तदभावः । तिष्ठतेरिति । अत्रापि स्थ इति निर्देश कृत्वा निर्देश

उ ] लिड्निमित्त'दिति प्रतिषेधोऽनर्थक इति भावः । इयष्ठेति । मतोपरत्वेन गुरुत्वेऽपि उपजीव्यविरोधभयाऽऽमिति गुरुमद्ग्रहणस्येदम्फलमिति भावः । इयनिथेत्येव वा प्रत्युदाहरणम् । ननु यजादीनां कथमित्यादित तत्राह–लिड्भ्यासस्येति । तस्मान्नित्ययोग इति । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने' इत्युक्त । प्रकृत लक्ष्यानुसारात्तत्रैव मतुबिति भावः । ननु वचनशब्दस्य व्याख्यानपरत्वऽप्युपदेश ग्रहणमित्यप्रकृतमत आह–उपदेशग्रहणेति । तुग्ग्रहणमिति । सामान्यापेक्ष ज्ञापकमित्यर्थः । ऋ गतावित्यस्मात् दाह–प्रतिपद्येते । तुड्निमित्तेत्यस्यार्थे ह्नेन हनाऽपि प्राप्तस्य प्रतिषेधार्थ इति भावः । तस्मादाम एवेति । यद्यप्यत्रभूतपरिभाषया

१ इह इत्यर्थ स्यात् । २ इद न सर्वत्रेवम् । ३ 'प्रकृत्यर्थो' पा० ।

र्थं विज्ञायते । तद्यथा—तिष्ठतेरित् जिघ्रतेर्वेति, चङि तिष्ठतिजिघ्रती न स्त इति कृत्वा प्रकृत्यर्थं विज्ञायते ॥ किं पुनरर्त्तेर्लिटि गुणवचनं प्रयोजनम् ?॥ आरतुः आरुः, एतद्रूपं यथा स्यात् ॥ किं पुनः कारणं न सिध्यति ॥ द्विर्वचने कृते सवर्णदीर्घत्वे च कृते यदि तावद्धातुग्रहणेन ग्रहणमृकारान्तानां लिटि गुणो भवतीति गुणे कृते रपरत्वे च अरतुः अरुरित्येतद्रूपं प्रसज्येत ।

प्र ]कृत ,तत्राऽनेन रूपेण स्थाशब्द एव प्रतीयत इत्यर्थः । द्विर्वचन इति । यणादेशात् पूर्वविप्रतिषेधेन द्विर्वचनं क्रियते । तथा हि—सति स्थानिवद्भावशास्त्रे द्वयोरपि यण्द्विर्वचनयोर्नित्यत्वमिति विप्रतिषेध उपपद्यते । अत्र वा यथा 'निन्यतु'रित्यत्र यणादेशेन भाव्यमिति द्विर्वचनात् पूर्वमेव इयङ् प्रवर्तते तथेहाऽपि द्विर्वचने कृते सवर्णदीर्घेण भाव्यमिति यत्न प्रवर्तते । सति वा यणि तस्य स्थानिवद्भावाद्द्विर्वचनम् । तत्र कृते यणादेशात् परत्वात्सवर्णदीर्घत्वम् । यदि तावदिति । अन्तादिवद्भावादुभयदेशस्याऽन्यतरतो व्यपदेशात्स्थानिवद्भावाद्वेति भावः । अन्त-

उ ]एवोऽन्तितस्तथाऽपि तस्या वाक्यार्थबोधप्राक्कालोपस्थितिस्तत्त्वा वैयर्थ्यस्य च रूपस्य संस्कारत्वे यथामुपस्थितेनेनाऽस्य वाक्यविरोधन्यायेनाऽऽस्थाय एवेति भावः । एवं तु भिमितेत्याद्यर्थे आपितेऽप्यस्य सार्थस्य दुरुपपादम्, कच्छेरासभावस्य प्रकारान्तरेण सिद्धेरिति नैतज्ज्ञापकमिति तात्पर्यम् । ननु स्थानिकार्यस्याऽऽदेशे जायमानत्वेऽपि आदेशकार्यस्य कथं सामर्थ्यादपि स्थानिनि प्रवृत्तिः, तत्र स्थानिवद्भावस्यैवाऽत्रोपायाऽभावादत आह—रु यतीति । गितीति । स्वतन्त्रस्य त्वासां व्यवस्थानार्थन्त्र-परत्वाऽभावो बोध्य ॥ ननु परत्वात्प्रथमं 'द्विर्वचनेऽची'त्यनेन द्वित्वे स्थानिवद्भावाद्द्वित्वे कृते पुनरादेशरूपेणैवोत्तरखण्डस्याऽवस्थानादभ्यासस्योरति हलादि शेषेऽत आदेरिति दीर्घे आरतुरित्यादिसिद्धिरत आह—यणादेशादिति । ननु 'यस्मिन्न' इति कथं विप्रतिषेधोऽत्र आह—सतीति । 'द्विर्वचनेऽचीत्यस्मिन्नि'ति शेषः । द्विर्वचनेऽची'ति सूत्रे स्थानिवद्भावपूर्वविप्रतिषेधयोः किं ज्याय इति भाष्योक्तेः पूर्वविप्रतिषेधारम्भे तदभावस्य लाभादयम्पूर्वविप्रतिषेधो नित्यानामपि बाधक इति वक्तुयुक्तम् । अत एवाऽग्रचेराह—अथ वेति । सति वा यणीति । द्वित्वे स्थानिदेशेन द्वित्वे जाते पश्चाद्यथायथ सोऽभ्यासत्वप्राप्तिरिति दीर्घ एवेति भावः । अन्तादिवदिति । उत्तरखण्डस्यैव क्रियावाचकत्वेन धातुत्वमिति भावः । समुदायस्य धातुत्वे तेनैतद्ग्रहणमिति स्पष्टत्वेनेति बोध्यम् । स्थानिवदतिदेशस्यापि सम्भवादाह—स्थानिवद्भावाद्वेति । स्थान्यग्रहणस्याऽभ्याचाऽनतिप्रसङ्गेनेति प्रतिषेधाऽभावः । स्थानिवत्त्वप्रयोजकमुपपादकम्—उभयादेशस्येत्यादि। भाष्ये—गुणे पुनः सतीति। ननु

१ 'विशाम्यते' पा० । २ 'कृते सवर्णदीर्घत्व, सवर्ण' पा० । ३ इद क्वचिन्न ।

अथाऽभ्यासग्रहणेन ग्रहणम्–उरत्व, रपरत्व,हलादि शेषोऽत आदेरिति दीर्घत्वमतो लोप इति चेत्याकारलोप–अतु उरिति वचनमेव श्रूयते। गुणे पुन सति गुणे कृते रपरत्वे च द्विर्वचन हलादि शेषोऽत आदेरिति दीर्घंव तत सिद्ध भवति आरतुरारुरिति। यथा आटतु आटुरिति ॥ किं पुन कारण सवर्णदीर्घत्व तावद्भवति न पुनररत्वम्?। परत्वादुरत्वेन भवितव्यम् ॥ अन्तरङ्गत्वात् [ सवर्णदीर्घत्व प्राप्नोति ]। अन्तरङ्ग सवर्णदीर्घत्व, बहिरङ्गमुरत्वम्॥ काऽन्तरङ्गता?॥वर्णाश्रयत्व सवर्णदीर्घत्वम्,अङ्गस्योरत्वम् ॥ उरत्वमप्यन्तरङ्गम् ॥ कथम् ? ॥ वक्ष्यत्येतत्प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति। उभयोरन्तरङ्गयो परत्वादुरत्वम्। उरत्वे चै कृते रपरत्व हलादि शेषोऽत आदेरिति दीर्घंच परस्य रूपस्य यणादेश , सिद्धं भवति–आरतु आररिति ॥ अथापि कथ चिदन्तेरिटि गुणेनाऽर्थ. स्यादेवमपि न दोष । ऋच्छत्यृतामिति ऋकारोऽप्यत्र निर्दिश्यते ॥ कथम् ?॥ प्रश्लिष्टनिर्देशोऽयम्। ऋच्छति–ऋ–ऋताम्–ऋच्छत्यृतामिति ॥ इहापि तर्हि प्राप्नोति चस्करतुश्चस्करुरिति ॥ सयोगादि

प्र ]रत्वादिति। 'वर्णादाङ्ग बलीय' इत्येतत्तु समानाश्रयाङ्गवार्णविषयम्। यथा स्यरवयवनमिति गुणवृद्धी भवतो यणादेशात्। इह तूरत्व लिङ्गाश्रय, वर्णद्वयाश्रय तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमनयो । अथापीति। आसप्तमपरिसमाप्तेरङ्गाधिकारो वक्ष्यत्येतत्सिद्ध्य आश्रित इति भाव । ऋकारोऽपीति। बहुवचननिर्देशादिति भाव । इहापीति। 'ऋ' इति वर्णग्रहणात्तदन्तविधिसद्भावादिति भाव ।

सयोगादेरिति। अकेवलस्य। वर्णान्तरसहितस्येत्यर्थ। ततश्च धातोरेव ग्रहणमनि

उ ]परत्वात्कृतेऽपि गुणे द्विर्वचनेऽचीति रूपातिदेशात् ऋशब्दस्यैव द्वित्वमिति को विशेष इति चेत, यत्राऽऽदेशो कृते एकाच्त्वादिव्याघातप्रयुक्त द्वित्वप्राप्तिस्तत्रैवातिदेशप्रवृत्तिरित्याशयात्। इह तूरत्वमिति। आसप्तमनाप्तङ्गाधिकारादिति भाव । इदमग्रेऽपि कैयट आहेत्यनुपदमेव स्फुट भविष्यति। वक्ष्यतीति। अत्राऽऽन्यामे रेफस्य सम्प्रसारणे उरत्वे तस्याऽऽश्रितपरनिमित्तत्वेन 'न सम्प्रसारण' इति तत्र तन्निषेधे स्थानिवत्त्व सिध्यतीत्यर्थ । ऋकारनिर्देशे लिङ्गमाह—बहुवचनेति। धातोरेवेति। गत्यर्थस्य, न तु तदन्तविधिरित्यर्थ । अन्ये-तदन्तरेणार्तेरिति। वार्णपरिभाषयैवेति भाव । सा समानाश्रयविषयैवेति तु न, नानाभावादिति भाव। ननु पूर्वमुर(दे)त्वेऽपि हलादि शेषेऽत आदेरिति दीर्घ परस्य ऽे यणादेश बाधित्वाऽऽपो गुण इति प्रयोगोऽभिहितस्तत्राह–अन्तरेण ऋच्छिग्रहण

१ 'उरदत्व' 'उरदत्वे' पा०। २ 'दीर्घत्वन्तु जाता' पा०। ३ 'लग' पा०। ४ 'धूयत' पा०। ५ इद क्वचित्। ६ इद वार्त्तिकमित्यन्ये।

उ-'अनृच्छो दयायासश्चे'ति । [ इजादेश्च गुरुमतोऽनृच्छ ] ॥

उपविदजागृभ्योऽन्यतरस्याम् ॥ ३।१।३८ ॥

॥·॥ विदेराम्वित् ॥*॥ विदेराम्कित्त्वम् । विदांचकार ॥ न वक्तव्यः । विदिरकारान्त ॥ यदकारान्तो 'वेत्ती'ति गुणो न सिध्यति । "लिङ्गं सियोगेन" ॥ एवमपि 'विवेदे'ति न सिध्यति ॥ एवं तर्हि "आम्संनियोगेन" ॥ भारद्वाजीयाः पठन्ति- ॥*॥ विदेराम्निपातनाद्वा गुणत्वम् ॥*॥ इति ।

भीह्रीभृहुवां श्लुवच्च ॥ ३।१।३९ ॥

श्लुवदतिदेशे किं प्रयोजनम् ?॥ ॥·॥श्लुवदतिदेशे प्रयोजन द्वित्वेत्त्वे॥*॥ [ श्लुवदतिदेशे द्विर्वेत्त्वे प्रयोजनम् ] । बिभरांचकार ॥ [ भीह्रीभृहुवाम् ] ॥

कृञ्चानुप्रयुज्यते लिटि ॥ ३।१।४० ॥

किमर्थमिदमुच्यते ?॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् ।

---

प्र ]महितया च सूत्रपाठ इति दर्शयति-अनृच्छो दयायासश्चेति । [ इजादेश्च ] ।

उपविद । विदिरकारान्त इति । सूत्रे अकारान्तत्वं विदेर्निपात्यत इति भाव । इतरो धातुपाठ एवाऽकारान्तत्वमनेन विदेरुक्तमिति मत्वाह-यदीति । गुणो न सिध्यतीति । इकारस्योपधत्वाऽभावादकारलोपाऽभावाच्च विदन्तीति स्यादित्यर्थ । आम्सन्नियोगेनेति । आम प्राधान्येन विधीयमानत्वात्तदनुयायित्वमलस्येत्यर्थ ।

भीह्री । द्विर्वचनमेव विधेयं किमतिदेशेनेति पृच्छति-श्लुवदतिदेश इति । 'न लुमताङ्गस्ये'ति गुणप्रतिषेधो न भवति । 'प्रत्ययलोप' इत्यस्या प्राप्तेरय निषेधो न चाऽप्रासौ प्राप्तिरस्ति । [ भीह्रीभृहुवां श्लुवच्च ] ॥

कृञ्चानु । किमर्थमिति । अन्तरेणाऽपि सूत्रारम्भमनुप्रयोग सिद्ध काट-

---

उ.]तदाह ऊर्णोतेरिति ॥ [ इजादेश्च गुरुमतोऽनृच्छ ] ।

उपविद । उपिजागृसाहचर्यात्परस्मैपदिन आदादिकस्यैव विदेर्ग्रहणम् । अकारलोपाऽभावाच्चेति । गुणाऽसिद्धिर्दोषोपलक्षणमिति भाव । ननु लिटोऽप्युपस्थित्या तत्सन्नियोगेनाऽपि विधानं स्यादत आह-आमिति। निपातनाद्वेति भाष्ये। सूत्रेऽदन्तत्वनिपातनादित्यर्थ ॥ [ उपविदजागृभ्योऽन्यतरस्याम् ] ।

भीह्रीभृहुवां । न लुमतेति लुमच्छब्दवति कार्ये सत्यङ्गस्य कार्यं नेत्यर्थ इति मन्यते । प्रत्ययेति । लुमता शब्देन लुप्ते प्रत्ययलक्षणेनाऽङ्गकार्यं नेति तदर्थ इति भाव ॥ [ भीह्रीभृहुवां श्लुवच्च ] ॥

कृञ्चाऽनु । अनुप्रयोगायाऽन्यथाऽननुप्रयोगस्य वारणाय च सूत्रमावश्यकमित्यत आह—अन्तरेणाऽपीति।'लिङ्परम्य कृञ' इत्यस्या'ऽनुप्रयोग सिद्ध' इत्यनेनाऽन्वय ।

---

१ अत्र ॥*॥ 'विदेराम्विद्विद्सनियोगेन' ॥*॥इति तु वार्त्तिकमिति गौडा ।

आमन्तमन्यत्पदार्थकं, तेनाऽयं समासोऽर्थ इति कृ चाऽनुप्रयोगो भविष्यति॥ अत उत्तरं पठति ॥*॥ कृञोऽनुप्रयोगवचनमस्तिभूप्रतिषेधार्थम् ॥*॥ कृञोऽनुप्रयोगवचनं क्रियते । [ किं प्रयोजनम् ? ॥ ] 'अस्तिभूप्रतिषेधार्थम्' । अस्तिभुवोरनुप्रयोगो मा भूदिति ॥*॥ आत्मनेपदविध्यर्थं च ॥*॥ आत्मनेपदविध्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । आत्मनेपदं यथा स्यात् ॥ उच्यमानेऽप्येतस्मिन्नवश्यमात्मनेपदार्थो यत्नः कर्तव्यः । अस्तिभूप्रतिषेधार्थेन चाऽपि नार्थः ॥ ॥ इष्टः सर्वानुप्रयोगः ॥*॥ सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते । किमिष्यत एवाऽहो स्वित्प्राप्नोत्यपि ? ॥ इष्यते च प्राप्नोति च ॥ कथम् ? ॥ 'कृ'ञिति नेदं धातुग्रहणम् ॥ किं तर्हि ? ॥ प्रत्याहारग्रहणम् ॥ क सन्निविष्टा

प्र ]योजनमङ्गप्रयत्नादिप्रतिपादनाय लिट्परस्य कृञ । आमन्त्रादि कालविशेष एवा वसीयते न त्वर्थान्तरं तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति औपसंख्यानिकोऽपीति। उत्तरेणैव सर्वार्थाभिव्यक्तनादामन्त्रस्यानर्थकत्वप्रसङ्गात् । नापि भिन्नार्थस्य-ईङ्गाभ्या चति। आमन्त्रमन्यद्धनात्वनायमस्य प्रयोगात्। कृञ तु सामान्यवचनं । सामान्यविशेष वाचकत्वात् प्रयोगोऽर्थविशेषप्रतिपादनेऽनुगुण इति भावः । अनुप्रयोग इति । यद्य प्यामन्त्रादिलभ्यर्थाभिव्यक्तिर्न भवति तथापि प्रकरणादिनाऽऽक्षेप्स्यतीति तस्मादनुप्रयोगसिद्ध्यर्थमिदं वक्तव्यमिति भावः । आमन्त्रमिति । पूर्वं चाऽनामन्त्रिता प्रकरणादिवशादप्यस्या प्रतिपत्तारिति तदर्थाभिधानायानुप्रयोगः सिध्यत्येवेति भावः । करोतेरेवाऽनुप्रयोगो यथा स्यादस्तिभुवोर्मा भूदिति नियमार्थमेतदिति दर्शयितुमाह-कृञ इति । आत्मनेपदेति । सिद्धे कृञोऽनुप्रयोगे पुनर्वचनमतिशयनाऽनुगुणस्यानुप्रयोगार्थं, तेनात्मनेपदप्रकृतेरामन्त्रादात्मनेपदान्त एव करोतिरनुप्रयुज्यत इत्यात्मनेपदविधिः सूत्रं न कर्तव्यं भवतीत्यर्थः । अवश्यमिति । परस्मैपदेनाऽपि कर्त्रर्थस्याऽवगमात्तदन्तस्याऽनुप्रयोगः स्यादिति भावः । प्रत्याहारग्रहणमिति । एतच्चाऽस्य सत्रेऽन्यत्र कृग्रहणाल्लिङ्गिति तत्त्वर्थादिति ज्ञायते । सम्पदश्चार्थविरोधान्न भविष्यत्यनुप्र

उ ] आमन्त्रादि क्रियाविशेष एवेति पाठः । कालविशेष' इति पाठे कालेन विशेष्यते स स विशेष्य इत्यर्थः । सामान्य इति । सामान्यस्याऽपि विशेषे पर्यवसानात्तदुपपन्नमेतदिनापि विशेषगमनिमित्तनाचकनिरित्यर्थः । भ्वस्त्योरिति । तयोरपि सामान्यवाचकत्वादिति भावः । भाष्यं दूषयति-उच्यमानेऽपीति । परस्मैपदेनाऽपीति । सूत्रस्यारम्भे त्वदुक्तनियमाऽप्रसङ्गादिति भावः । सम्पदश्चेति । चत 'स'-रहितपदस्याऽपीत्यर्थः । एतत् सम्पदो धातुत्वाऽभावात्कृभ्वादिगणपाठेन प्रत्याहारे सन्निवेश इत्यान्तम् । सन्निवर्तिन सन्निहिता एव प्रत्याहारत्वे प्रसङ्गाऽभावाच्च ।

१ 'अस्तिभुवो' । २ अयं पाठो लुप्तः । ३ इदं क्वचिन्न । ४ किमिष्यन्तेव' । ५ नैतत्' ।

नर प्रत्याहार ?॥ 'कृभ्वस्तियोग' इत्यत प्रभृत्या कृञो ञकारात् ॥*॥ सर्वानुप्रयोग इति नेदशिष्यमर्थाऽभावात् ॥*॥ सर्वानुप्रयोग इति चेदशिष्य, कृञोऽनुप्रयोगवचनम् ॥ किं कारणम् ?॥ 'अर्थाभावात्' । आमन्तमव्यक्तपदार्थक तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इद तर्हि प्रयोजन 'कृभ्वस्तीनामेवाऽनुप्रयोगो यथा स्यात् पचादीना मा भू'दिति॥ एतदपि नास्ति प्रयोजनम् ॥*॥ अर्थाऽभावाच्चान्यस्य [ सिद्धम् ] ॥*॥ अर्थाऽभावाच्चाऽन्यस्य सिद्धमेतत् ॥ कुत ?॥ कृभ्वस्तय क्रियासामान्यवाचिन, क्रियाविशेषवाचिन पचादयो, न च सामान्यवाचिनोरेव विशेषवाचिनोरेव वा प्रयोगो भवति । तत्र विशेषवाचिन उत्पत्ति सामान्यवाचिनोऽनुप्रयोक्ष्यन्ते ॥*॥ लिङ्गरार्थं वा ॥*॥ लिङ्गरार्थं तर्हि कृञोऽनुप्रयोगवचन क्रियते । लिङ्गरस्यैवाऽनुप्रयोगो यथा स्यादन्यपरस्य मा भूदिति ॥ किंपरस्य पुन प्राप्नोति ?॥ लङ्गरस्य॥ न लङ्गरस्यानुप्रयोगेण भूतकालो विशेषित स्यात्॥ निष्ठापरस्य तर्हि

प्र ]योग । अशिष्यमिति । वियतिनिवृत्त्यर्थमपि नोपयुज्यते । प्रयुक्तानामन्वाख्यानात्तस्य चानुप्रयोगादर्शनात् । न चेति । द्वयोरेकार्थयो प्रयोगाऽभावादिति भाव । न्यायप्रदर्शनार्थं च 'सामान्यवाचिनो'रित्युक्तम् , न तु सामान्यवाचिभ्य कृभ्वस्तिभ्य आम्विधानमस्ति । सामान्यवाचिनश्चार्थं द्योतयितु विशेषवचनो न शक्त । प्रत्युत विशेषान्तरव्यावृत्त्या तदर्थविरोधी । लङ्गरस्येति । भूतविशेषस्यामन्तेन प्रतिपादनाद्भूतस्याऽपि भूतपूर्वां वर्तमानतामाश्रित्य लड्प्रयोग स्यादिति भाव ।

न लङ्गरस्येति। आमन्तार्थाभिव्यक्त्यर्थत्वादनुप्रयोगस्य विरुद्धकालाभिधायिलड्नुप्रयोगो न भविष्यति। न च साम्प्रतिकवर्तमानतासम्भवे भूतपूर्वाश्रयो लड्प्रयोग उपप-

उ ]विद्यतीति। 'विद सत्ताया'मिति स्मरणादिति भाव । भाष्ये-अर्थाऽभावाच्चेति। 'एधा'मित्यादिना पच्यादेरन्वयाऽयोग्यत्वात् एधामित्यायमे स्वस्याऽनुप्रयोगोऽसम्भवी, तत्राप्यान प्राप्ते । कृभ्वादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोग । तदाह भाष्ये-न च सामान्येत्यादिना। द्वयोरेकार्थयोरिति । आम्विषययोरित्यर्थ । द्वितीयप्रयोगेऽप्याम प्राप्तेरिति भाव । न च 'पाचया'मित्युत्तर पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोग स्यादिति वाच्यम् उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तरिति भाव । ननु निवृत्तप्रेषणक्रमो णिचि पारयामित्यत पचेरनुप्रयोग स्यादिति सामान्यविशेषवाचिनोरित्यपि वक्तु युक्तमत आह-सामान्यवाचिनश्चेति। वर्तमाननिहितस्य लट कथ भूते प्रसक्तिरत आह-भूतपूर्वामिति । न च साम्प्रतिकेति।

१ इति क्वचिन्न। २ इद क्वचिन्न। ३ 'असिद्धम्' । सिद्धम्' ।
४ 'वचना पचादय' ।

मा भूत् [इति]॥ न लिट्परस्याऽनुप्रयोगेण पुरस्तादप्रयुक्तौ विशेषितौ स्याताम्॥ लुङ्परस्य तर्हि मा भूत्॥ न लुङ्परस्याऽनुप्रयोगेणाऽनद्यतनो भूतकालो विशेषितः स्यात्॥ लङ्परस्य तर्हि मा भूत्॥ न लङ्परस्याऽनुप्रयोगेणाऽनद्यतनः परोक्षः कालो विशेषितः स्यात्॥ अथ तर्हि भूते परोक्षेऽनद्यतने लट् विधीयते 'हशश्वतोर्लङ् चे'ति, तत्परस्य मा भूदिति॥ एतदपि नास्ति प्रयोजनम्। "एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भवति"। तद्यथा 'गोषु स्वामी–अश्वेषु चे'ति। न हि भवति 'गोषु–चाऽश्वानां च स्वामी'ति। ॥*॥ अर्थसमाप्तेर्वाऽनुप्रयोगो न स्यात् ॥*॥ अर्थसमाप्तेर्वाऽनुप्रयोगो न स्यात्। आमन्तेन परिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो न स्यात्॥ एतदपि नास्ति प्रयोजनम्। इदानीमेव ह्युक्तमामन्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यतीति ॥*॥ विपर्यासनिवृत्त्यर्थं वा ॥*॥ विपर्या-

प्र ]यत इत्यर्थः।एकस्या इति। वेदलोकप्रसिद्धोऽयं न्यायः। तथा हि 'खादिरे बध्नाति' पालाशे बध्नाती'त्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते। तत्र यदि कश्चित् खदिरस्य भ्रेषो भवति तदा तत्स्तम्भवपुर मात्स्यात्खादिरबुद्ध्या प्रतिनिधीयते,न तु पलाशः परिगृह्यते। साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियाऽनिर्वाहप्रसङ्गात्। लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय 'गवां स्वामी'ति षष्ठ्युपक्रम्यते तदा 'अश्वानां चे'त्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते। अन्यथा'ऽश्वेषु चे'त्युक्तेऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति। तस्मादेकोऽर्थो यया शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तयैवाऽसौ निर्वाह्यो न त्वन्यया शब्दाकृत्येत्यर्थः। एवं हि प्रतिपत्तिर्लाघवं भवति। अर्थसमाप्तेर्वेति। आमन्तं पदं यावन्तमर्थमभिधातुं शक्नोति तावानर्थस्तत्रैव परिसमाप्त इत्यनुप्रयोगो न स्यादिति भावः। एतद्भाष्यकारो दूषयितुमाह–एतदपीति। 'अविम्यसर्गाऽभावा'दित्युक्तत्वात्। विपर्यासनिवृत्त्यर्थं वेति। सिद्धे कृञ्प्रयोगे देशनियमार्थं वचनम्। अनुप्रयोगस्य

उ ]वर्तमानसामीप्ये तत्रापि न विवक्षितमुख्यभूतत्वप्रतीतिः स्यादिति भावः।खादिरे–खदिरविकारे यूपे। मात्स्यादिति। एवञ्च बहुखदिराऽसन्निधानान्वयोगो–दुर्दुर-मेति तत्र खादिरबुद्ध्युपादानेन खदिरारब्धैव क्रिया निर्वाहिता भवति। पालाशे तूपादीयमाने तत्र खदिरबुद्ध्यनुपादानात्खादिरेणोपक्रान्ता क्रिया न निर्वाहिता स्यादिति न तदुपादानमिति भावः। अश्वेषु चेति। एतच्च तथा प्रयोगेऽसाधुरिति वदन्ति। वार्तिके 'वा'शब्दो विकल्पार्थकोऽपि पूर्वेण प्रयोजनानां खण्डितत्वा-

१ 'लुङ्परस्य' पा०। २ 'अनद्यतन भूत' पा०। ३ 'परोक्षकाले' पा०। ४ 'परोक्षानद्यतने' पा०। ५ 'च भविष्यती'ति'। ६ इदं क्वचिन्न। ७ 'आमन्तेन च परि' पा०।

सनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । ईहांचक्रे । चक्रे ईहामिति मा भूत् ॥*॥ व्यवहितनिवृत्त्यर्थं च ॥८॥ व्यवहितनिवृत्त्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । अन्वेव चोऽनुप्रयोगो यथा स्यात् । ईहाञ्चक्रे । व्यवहितस्य मा भूत्[2] । ईहां देवदत्तश्चक्रे इति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥८॥

## च्लि लुङि ॥ ३।१।४३ ॥

धाऽय च्लि. श्रूयते[1] ॥ न कश्चि[3]च्छ्रूयते । एतस्य सिजादय आदेशा उच्यन्ते ॥ यदि न कश्चिच्छ्रूयते किमर्थंस्तर्हि च्लिरुत्सर्गः क्रियते न सिजुत्सर्ग एव कर्तव्य । तस्य क्सादयोऽपवादा भविष्यन्ति ॥ अत उत्तरं पठति ॥*॥ च्लयु[5]त्सर्गः सामान्यग्रहणार्थः ॥ ७॥ च्लिरुत्सर्ग क्रियते ॥ [किं प्रयोजनं[6] ?] ॥ 'सामान्यग्रहणार्थः' ॥ क सामान्यग्रहणार्थेनाऽर्थः[1] ॥ 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो ले'रिति । तत्राऽनन्तरस्त्रयाणां ग्रहणं कर्तव्य स्यात् । चङङो.

प्र ]पश्चादर्थत्वात् । तेनाऽऽमन्तस्य पाश्चादेव कृञ्प्रयुज्यते न पूर्वं नापि व्यवहितमित्यर्थसम्पत्ति ॥ इति भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

च्लि लुङि । आदेशैः सर्वत्र बाधितत्वाऽस्य प्रयोग प्रयोजनं, नापि क्विबादीनामिव कार्यार्थता दृश्यते । ततोऽस्यानर्थक विधानमिति पृच्छति—कायमिति । च्लिरुत्सर्ग इति । स्थानीत्यर्थ । स ह्यादेशेनाऽपोद्यते । सिजुत्सर्ग इत्यत्र तु सामान्यविधिरुत्सर्गशब्देनोच्यते । च्ल्युत्सर्ग इति । च्लेरुत्सर्गो धातुमात्राद्विधानमित्यर्थ । तत्रानन्तर इति । त्रयाणां तावदस्यं कर्तव्य, जनेस्तु दीपजनेति तच्छब्दे

उ ]तदर्थं भाष्यकृता व्याख्यायते—विपर्यासनिवृत्त्यर्थं तर्हीति । भाष्ये—अन्वेवेति । पश्चादव्यवधानेनेत्यर्थ ॥ [ कृञ्चानुप्रयुज्यते लिटि ] ॥

इति श्रीनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे तृतीयमाह्निकम् ।*

च्लि लुङि । नन्वश्रवणेऽपि क्विबादिवत् कार्यार्थं स्यादत आह—नापीति । उत्सर्गपदस्याऽपवादप्रतियोगिन्येव प्रसिद्धेराह—स्थानीत्यर्थ इति । ननु च्ल्युत्सर्ग इत्यनुपपन्न, च्लेरन्यस्योत्सर्गस्याऽभावात् । कर्मधारये तूत्सर्गशब्दस्य पूर्वनिपातापत्तिरत आह—च्लेरिति । च्लिरुत्सर्ग इति भाष्यन्तु फलिताऽर्थपरम् । क्वचित्तु भाष्येऽपि 'च्लेे'रित्येव पाठ । मन्त्रे' इति सूत्रे त्रयाणामपि चङङ्क्षा लिग्रहणेन लभ्यता स्यादिति प्रयोजनं न्लरस्यणस्य । अन्यथा सिच इत्यनुवर्तनेति चङङोदोष । लिख तु तेषा स्थानिवद्भावेन । अन्तरङ्गानपीति न्यायस्त्वत्र नास्ति, अनित्य-

१ 'च कृञोऽनु' पा० । २ 'भूदिति' पा० । ३ 'न श्रूयते' पा० । ४ 'किमर्थं च्लि' पा० ५ 'च्ल्युत्सर्ग' पा० । ६ अयं पाठ क्वचित्र ।

सिचश्चेति ॥ * ॥ क्सविधाने चानिड्वचने च्लिसम्प्रत्ययार्थं ॥ ११ ॥ * ॥ क्सविधाने चाऽनिड्वचने च्लिसंप्रत्ययार्थं च्लिग्रहणं क्रियते। च्लेरनिट इति क्स सिद्धो भवति ॥ ॥ घस्लृभावे च ॥ * ॥ घस्लृभावे च च्लावेव कृते लुङिति इत्यच्छिद्धो भवति ॥

अथ चित्करणं किमर्थम् ? ॥ ॥ च्लेश्चित्करणं विशेषणार्थम् ॥ १२ ॥ च्लेश्चित्करणं क्रियते ॥ [किम्प्रयोजनम्?] ॥ 'विशेषणार्थम्' ॥ * विशेषणार्थेनार्थ ॥

---

प्र ] विहितस्य चिणो मन्त्र यदि लुग्भ्यत तदा चतुर्थस्यापि ग्रहणं कर्तव्यमित्य वरत इत्युक्तम् । तत्र घसेराकारान्तत्वात्तदर्थं चह्निग्रहणं कर्तव्यं, घस्लादर्थ्ये यस्ग्रहणं, धात्वन्तरार्थं तु सिग्रहणमित्यर्थ । क्सविधान इति । 'अनिट' इत्येतत् च्लेर्विशेषणं यथा स्यादित्यर्थ । तथा हि यद्यनिड्ग्रहणेन धातुर्विशेष्यते 'यस्मादन्यत्रेडागमो न दृष्ट' इति विषयान्तरगतमनिट्त्वमाश्रयणीयम, लुङादेशाना सार्वधातुकत्वादिट्प्राप्त्यभावात् । ततश्च गुहादिभ्य क्सो न स्यात्, तेषां विकल्पितेट्कत्वात् । अथापि पाक्षिकेनेडभावेन तदानिट्त्वं स्यात् तथापि नित्य क्स स्यात् । च्लौ तु विशेष्यमाणे यदा तस्येडागमो नास्ति तदा क्सो भवति–'अघुक्ष'-दिति । यदा त्विड्भवति तदा सिच्–'अगूही'दिति । घस्लृभावे चेति । इति यदार्द्धधातुके तदादेशस्तद्भावो विधीयते । तत्र च्लौ परतो घस्लृभावे सत्याङ्ग्यानि। अन्यथा सिच्येव घस्लृभावः स्यात् । ततश्च सिच श्रवणं स्यात् । नहि ग्रन्तस्यो

---

उ ] त्यात् । तेन मन्त्रे 'अघसत्' 'अघु' इत्युभयसिद्धि । तद्ध्वनयन्नाह–त्रयाणामिति। चस्योच्चारणे कर्तव्ये, चेन सिचोऽनुकर्षं इति पदान्तरं व्यर्थमिति भाव । एतेन चह्नग्रहणं व्यर्थं, धसताव हि तदुपयोग । तत्र सिचो लुक्येव सिद्धमित्यपास्तम् । 'अघसत्' इत्यसिद्धापत्ते । आकारान्तत्वादिति,–'मन्त्रे घस' इति सूत्रप्राप्ति-निमित्तकथनम् । भाष्ये–च्लिसम्प्रत्ययार्थं इति । अनिट्प्रभृति च्लेर्विशेषणत्वेन य सम्प्रत्ययस्तदर्थं । यस्मादन्यत्रेति । अस्य 'तदी'त्यादि । यस्माद्धातोर्लुङ्भिन्ने प्रत्यये इत्यर्थ । लुङि योऽनिडित्याश्रयितुमशक्यमित्याह–लुङादेशानामिति । ततश्चेति । विषयान्तरगताऽनिट्त्वाश्रयणाच्चेत्यर्थ । अथापीति । इडाऽभावोऽनिट्, तस्मान्नतुप् मत्वर्थात्तुगिति भाव । यदा त्विडिति । तदा निर्दिश्यमानपरिभाषया इड्विहितस्य सिचित्यर्थ । 'घसो'रित्यस्य विहितविशेषणत्वाश्रयणान्निर्दिश्यमानस्य व्यवहितत्वमिति न शङ्क्यम् । अगूहीदिति । 'ह्यन्ते'ति वृद्धिनिषेध । गुणे 'ऊदु-पधाया' इत्यूत्वम्।आर्द्धधातुके विवक्षिते घस्लादेशविधानादाह–लुङीति।परमसम्मत्यभिमानेनेदमिति भाव । ननु च्लिर्न कार्य, चङ्क्सादयश्च सिच स्थानेऽदेशा कार्या। 'च्ले'रित्यस्य स्थाने 'सिच' इति कार्यम् । 'मन्त्रे' इति सूत्रे च 'च्ल'रिति

---

१ 'सिच इति'। २ इते क्वचित । ३ अयं पाठ प्रायो दृष्ट । ४ 'गतार्थं' ।

'च्लेः सि'जिति । 'च्लेः सि'जित्युच्यमाने लिङ्‌लिटोरपि प्रसज्येत ॥ नैतदस्ति प्रयोजनम् । 'लुङी'त्युच्यते न च लुङि लिङ्‌लिटौ स्तः ॥

अथेदित्करणं किमर्थम् ? ॥*॥ इदित्करणं सामान्यग्रहणार्थम् ॥*॥ इदित्करणं क्रियते ॥ [ किं प्रयोजनम् ? ॥] 'सामान्यग्रहणार्थम्' ॥ क्व सामान्यग्रहणार्थेनार्थः ? ॥ 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो ले'रिति, 'आम' इति च ॥ इकारे चेदानीं सामान्यग्रहणार्थे क्रियमाणेऽवश्यं सामान्यग्रहणाविघातार्थः ककारः कर्तव्यः ॥ क्व सामान्यग्रहणाऽविघातार्थेनाऽर्थः ककारेण ? ॥ अत्रैव । यत्तावदुच्यत 'च्ल्युत्सर्गः सामान्यग्रहणार्थ'इति । क्रियमाणेऽपि वै च्ल्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति,–'च्लि लुङि' 'च्लेः सिच्' 'ले'रिति॥यदेत 'ले'रिति, तत्परार्थं भविष्यति ॥ कथम् ? ॥ यदेतद्गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र सिचो ग्रहणमेतल्लेरिति वक्ष्यामि ॥ यदि 'ले'रित्युच्यते

प्र ]त्सर्गस्यापवादेन बाधः कर्तुं शक्यत इति भावः । तथा 'मन्त्रे घसे'ति यदि सिचो लुक्क्रियते तदा 'आदिः सिचोऽन्यतरस्या'मिति स्वरः स्यात् । लुमता लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनाऽस्य स्वरस्येष्टत्वात् । लुङीत्युच्यत इति । लुङीत्यनुवर्तत इत्यर्थः । तदनुबन्धकग्रहण इत्ययमपि परिहारः सम्भवति । भाष्यकारेण तु प्रकारान्तरेण परिहृतत्वान्नोक्तः । आम इति चेति । तत्र सामान्यग्रहणे सति यथासम्भवं कार्यं विज्ञायत इति भावः । अत्रैवेति । अन्यथा तदनुबन्धपरिभाषयाऽस्यैव ग्रहणं स्यान्न लिङ्स्तथाऽऽम इत्यनेन लिङो लुक् स्यादित्यर्थः । तान्येवेति । 'च्लि' 'च्लेः' 'ले'रिति । 'सिज्लुकी'त्येतस्मितरेणाऽपि कर्तव्यम् । 'मन्त्रे घसे'त्यत्र च्लोः स्व सिच इति तान्येव त्रीणीत्यर्थः । च्ल्युत्सर्गवाद्याह—यदेतदिति । लेरिति वक्ष्यामीति । तदेव 'मन्त्रे घसे'त्यत्रानुवर्तिष्यते, ततश्च स एव भवतीत्यर्थः । धेट

उ ] न कार्यं, सिच इत्यनुवर्त्यैवेष्टसिद्धेरिति नैते दोषा इति चेन्न, 'अगुप'मित्यादौ लुगापत्तेः । दोषान्तरमप्याह–तथा मन्त्रे इति । ननु 'लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यान'मिति प्रत्ययलक्षणप्रतिषेधात् कथं स्वरप्राप्तिरत आह–लुमतेति । तस्य 'सर्वाऽऽमन्त्रितसिज्लुक्स्वरवर्ज'मिति निषेधादिति भावः । अस्य–'आदिः सिच' इत्यस्य । 'सर्वामन्त्रितसिज्लुक्स्वरवर्ज'मिति निषेधादिति भावः । अस्य–'आदिः सिच' इत्यस्य । 'सर्वामन्त्रितसिज्लुक्स्वरवर्ज'मिति तन्नोक्त्यादिति भावः । तदनुबन्धकेति । ककाराऽभावेऽस्यैवाऽनुबन्धकत्वादिति भावः । तत्रेति । 'आम' इति सूत्रेऽनुवर्तमानेन 'ले'रिति पदेन च्लेरोऽपि ग्रहणं सिध्यतीत्यर्थः । तदेव मन्त्रे इति।'गातिस्थे'ति सूत्रे लिग्रहणे यदि 'अन्तरङ्गानपी'ति न्यायेन चल्यवस्थाया

१ 'ले' पा० । २ इदं क्वचित् ।

धेट्श्वातु शब्दः प्राप्नोति । अदधत् अधात् अधासीत् । अदधादित्येतदपि प्राप्नोति । ॥*॥ न चङो लुकि द्विर्वचनम् ॥*॥ न चङो लुकि द्विर्वचनेन भवितव्यम् ॥ किं कारणम् ? ॥ 'चङी'त्युच्यते, न चाऽत्र चङं पश्यामः ॥ प्रत्ययलक्षणेन ॥ 'न लुमता तस्मिन्नि'ति प्रत्ययलक्षणप्रतिषेधः ॥ बहुवचने तर्हि धातु शब्दः प्राप्नोति। अदधन् अधुः अधासिषुः । अदधानित्यपि प्राप्नोति ॥ नैष दोषः । 'आत' इति जुस्भावो भविष्यति ॥ न सिध्यति । सिज्ग्रहणं तत्राऽनुवर्तते॥सिज्ग्रहणं [ तत्र ] निवर्तिष्यते॥ यदि निवर्तते 'अभूव'न्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति॥एवं तर्हि लुक्सिजपवादो विज्ञास्यते ॥ यदि लुक्सिजपवादो विज्ञायते 'मा हि दाता माहि धाता'मित्यत्र 'आदिः सिचो-

प्र ]इति।'विभाषा घ्राधे'त्यत्र सिग्रहणाऽनुवृत्तौ सत्यां धेरादेशेषु कृतेषु स्थानिवद्भावात्सिग्रहणेन तेषां ग्रहणात्किं कृते चङ्निमित्तं द्विर्वचनं प्राप्नोतीत्यदधादित्यपि स्यात् । ननु चङोऽपस्य स्थानिवद्भावादाकारलोपे सत्यदधदिति भाव्यं, तत्कथमुच्यते 'अदधादिति प्राप्नोती'ति ? । नैष दोषः । 'विलुगुपधात्व'मिति लुका लुप्तस्य स्थानिवत्त्वनिषेधात्र लुमताऽस्येति प्रत्ययलक्षणनिषेधाच्चाऽऽकारलोपाऽभावात् । आत इति । विध्यर्थमेतद्भविष्यति न तु नियमार्थमित्यर्थः । एवं तर्हीति । अकृतेष्वादेशेषु तदपवादो लेरेव लुग्विधास्यते, तेनाऽभूवन्निति जुस् भविष्यति । 'आत' इत्येतच्च

उ ]तुतर्हि 'अगु'रित्यादौ 'सिजभ्यस्ते'ति जुस् न स्यात्। 'मा हि गाता'मित्यादौ 'आदिः सिचोऽन्यतरस्या'मिति स्वरश्च न स्यात्। तस्मादन्तरङ्गानपीति न्यायाऽनाश्रयेणाऽऽदेशे कृते स्थानिवद्भावेन सिचो लुगेवेति तत्त्वम् ।तदाह भाष्ये–धेट्श्वातु शब्द मिति । तद्ध्वनयन्नाह–लेरादेशेष्विति । आकारलोपे इति । निषेधे हल्ङ्यादिलोपे भस्भावे चेत्यपि बोध्यम्।'अधादिति भाव्य'मिति पाठः। 'अदधदिति भाव्य'मित्यपपाठः । नैष इति।अङ्गकार्ये बाधक 'न लुमते'ति निषेधो, न तु द्वित्वे इत्यभिमानः । विध्यर्थमिति । 'चङो लुकी'ति शेषः । भाष्ये–अभूवन्निति । चङ्लुकि विध्यर्थत्वे सम्भवति नियमार्थत्वं न स्यादिति 'सिजभ्यस्ते'ति जुस्स्यादित्यर्थः । प्राप्तेष्वादेशेष्विति। कृतेष्वादेशेष्वित्यर्थः । अकृतेष्वादेशेष्विति पाठान्तरम् । नन्वेवमगुरित्यत्र जुस् स्यादत आह–आत इत्येतदिति । नियमस्याऽसम्भवादित्यर्थः । न च लुग्भ्यस्तेति कार्यं,तेन चङ्लुक्यपि जुस् ,सिज्ग्रहणानुवृत्त्या 'आत' इत्यस्य नियमश्च। दभूवन्नित्यपि सिद्धमिति वाच्यम् , 'अजुहवुः' 'अवोचन्'नित्यादौ स्वादिभ्योऽपि परस्य जुसापत्तेः । तस्मात्सन्त्येव इति सूत्रार्थं चिन्त्यं वार्ये इति सिद्धम्। 'आम' इत्यत्राऽपि 'ले'रिति यस्य नोपरीति ,प्रत्ययमात्रस्य तेन ग्रहणात्। ननु धातुरपि

१'दित्यपि'।'दित्यत्रापि'।२भाष्यमिदमित्यन्ये।३'भाव्य'।४इदं क्वचित्।५'विलसिते'।

न्यतरस्या'मित्येष स्वरो न प्राप्नोति । तस्मान्नैतच्छक्यं वक्तुं–'लुक्सिजपवाद' इति ॥ न चेदुच्यते–अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । तस्मादात इत्यत्र सिज्ग्रहणमनुवर्त्यं, तस्मिंश्चाऽनुवर्तमाने धेटश्चातुःशब्दं प्राप्नोति । तस्माद्गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र सिज्ग्रहणं कर्तव्यम् । तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति 'च्लि लुङि' 'च्लेः सिच्'–'ले'रिति ॥यदप्युच्यते–'क्समविधाने चानिड्वचने च्लिसमत्ययार्थ'इति। धातुमेवाऽत्राऽनिट्त्वेन विशेषयिष्यामो–'धातोरनिट' इति ॥ कथं पुनर्धातुर्नामाऽनिट् स्यात् ? ॥ धातुरेवाऽनिट् ॥ कथम् ? ॥ अनिमित्त वा इटः,–अनिट् । न वा तस्मादिडस्ति सोऽयमनि[ट् अनि]डिति ॥ अथ धातौ विशेष्यमाणे क योऽनिडिति विशेषयिष्यसि ?॥ किञ्चाऽतः?॥ यदि विज्ञायते 'निष्ठायामनिट' इति, भूयिष्ठेभ्य प्राप्नोति । भूयिष्ठा हि शलन्ता इगुपधा निष्ठायामनिटः । अथ विज्ञायते–'क्ङिति योऽनि'डिति, न कुतश्चित्प्राप्नोति, सर्वे हि शलन्ता इ-

म ]विध्यर्थं भविष्यति, अधुरदुरपुरित्यादिसिद्ध्यर्थमिति भावः । तस्मादिति। स्वरसिद्धये सिजादेशो कृते लुक्कर्तव्य इत्यर्थः । कथमिति । आर्द्धधातुकस्य हीड्विधीयते । तदेव तदभावादनिडिति व्यपदिश्यते, मत्वर्थे बहुव्रीहिविज्ञानादिति भावः ।

अनिमित्तमिति। धातोरिटश्च निमित्तनिमित्तिभावोऽस्तीति नाऽनुपपन्न पञ्चर्थे बहुव्रीहिरिति भावः । न वा तस्मादिति । 'अनिट' इति वचनसामर्थ्यात्पञ्चम्यर्थे बहुव्रीहिराश्रयिष्यत इत्यर्थः ।क योऽनिडिति।असति च्लिविधाने विस्तरेण क्सेनाऽनिट्त्वाश्रयेण भाव्यम् । तत्राऽस्मिन् विषय इटः प्राप्त्यभावाद्विषयान्तरमनिट्त्वस्यापेक्षणीयमिति प्रश्नः । निष्ठायामिति । यद्यार्द्धधातुकमात्रं परिगृह्यते ततो गुहादिभ्य ऊदिद्भ्यो न स्यादिति निष्ठाश्रयणम् । तदाश्रये च गुहादिभ्यो नित्यः क्स

ड ]'न विद्यते इडस्मा'दिति व्युत्पत्त्याऽनिड्वदवाच्योऽत आह–मत्वर्थे इति। अवयवाऽवयविभावादिरूपे पञ्चर्थे इत्यर्थः । भाष्ये–अनिमित्त वा इटइति । न विद्यते इडर्थं यस्येत्यर्थः । पञ्चम्यन्तार्थेऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह–न वाऽस्मादिति ।तद्याचष्टे–वचनसामर्थ्यादिति ।मत्वर्थ इति। 'कर्मकर्तृवचनेनाऽप्रथमाया' इति च वार्तिकोक्तेरिति भावः ।अस्मिन् विषये–लुङ्रूपे विषये। तत्राऽनिट्त्वस्याऽव्यभिचारात् ।विषयान्तरम्–प्रत्ययान्तररूपम्।ऊदिद्भ्यो नेति।आर्द्धधातुकमात्रादिविषये पक्षे सेट्त्वादिति भावः ।नित्यः क्स इति।'यस्य विभाषे'ति निष्ठायामनिट्त्वादिति भावः ।इष्यते इति।अनेनैषोऽपि तत्र पक्षे दोष इति सूचितं।निष्ठाग्रहणपक्षे भूयिष्ठेभ्य

१ 'न चेदेवमुच्यते' पा० । २ 'सिचो ग्रह' पा० । ३ 'वाऽस्मात्' । ४ अयं पाठ क्वचित् । ५ विशिष्यमाणे' । ६ 'निष्ठायामिति' पा० ।

गुरवा लिटि सेट् ॥ किं पुन कारणं धातौ विशेष्यमाणएनयोर्विशेषयोर्विशेषयिष्यते न पुनर्यत्र सामान्येनेटो विधिप्रतिषेधौ?॥ क सामान्येन?॥ वलादावार्द्धधातुके॥

यदप्युच्यते 'घस्लृभावे चे'ति । आर्द्धधातुकीया सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु। तत्रार्द्धधातुकसामान्ये घस्लृभावे कृते 'लृदित' इत्यङ् भविष्यति । [ च्लि लुङि ] ॥

## च्ले सिच् ॥ ३।१।४४ ॥

किमर्थश्चकार ?॥ ॥*॥[चकारो] विशेषणार्थ ॥*॥ क विशेषणार्थेनार्थ ?॥ 'सिचि वृद्धि परस्मैपदे'ष्विति॥ 'सौ वृद्धि'रितीयत्युच्यमानेऽग्निर्वायुरित्यत्रापि प्रसज्येत॥ नैतदस्ति प्रयोजनम् । 'परस्मैपदेष्वि'त्युच्यते न चाऽत्र परस्मैपद

प्र ]प्रसज्येत, विकल्पितश्चेष्यते। भूयिष्ठाहीति। स्नुरिपुस्तुस्निहुमुष्यादीना च नित्याया मनिट्त्वात् तस्य प्राप्नोति । न पुनर्यत्रेति । गुप्नादयो विकल्पितेट इटो भावाऽभावाभ्या भिद्यन्ते, तत्र ये सेडन्तेभ्य सिज्भविष्यति, अनिड्भ्यस्तु क्स इति न कश्चिद् दोष । आर्द्धधातुकसामान्य इति । अङ्प्रत्ययागमार्द्धधातुकसामान्य लृदित्त्वेपितमाश्रयिष्यतदर्थ । यदि तर्हि च्लि प्रत्याख्यायते तदा 'मन्त्रे घसे'ति सिचो लुक्यादि सिच इति स्वर प्राप्नोति। नैष दोष । तत्र हि छन्दसि क चिदडागमोदात्तत्वेन भाव्य, क चिल्लिङ्विधानेन । यत्र त्वडागमोऽस्ति लिङ्विधानस्य च निषेध प्रत्ययस्वरश्चेष्यते स विषयश्छन्दसि नास्ति । एतच्च भाष्यकारेण च्ले प्रत्याख्यानाद्विज्ञायते। 'मा हि स्मते'-त्यादौ तु सिच एव चित्त्वेनाऽन्त्यार्थेन चायमनुदात्तत्व बाधिष्यत इति तदर्थोऽप्यनुबन्धासक्तार्थं च्लेर्न कर्तव्य । [ च्लि लुङि ] ॥

च्ले सिच् । अग्निरिति । सौ च परस्मैपदेषु चेति समुच्चयो विज्ञायेत, तथा चात्रापि स्यात् । सौविति च सिसुशब्दयो साधारणो निर्देश स्यात् । आगन्तुना चेकारेण सकारो निर्दिश्यतेति भाव । न चात्रेति । पृथग्विभक्तिनिर्देशा-

उ ]इति सूचित दोषमाह-इष्विति। भाष्ये-वलाद्यार्द्धधातुक इति । अय भाव ,-अनिटो धातोरिगुपधे क्वेति विषयविशेषाऽऽश्रयाणा कुप्रत्ययस्यार्द्धधातुके यदा योऽनिटिति कालविशेषावच्छिन्नो विषयविशेषो गृह्यते त्वस्याऽनुगेयादिति । तदाऽऽह-गुहादय इति । सामान्यमिति । 'आर्द्धधातुक' इति विषयसप्तमीति भाव । यत्रेति । 'मा हि दाता'मित्यादौ । सिच एव चित्त्वेनेति । एतच्चोत्तरसूत्रे स्फुटम् ॥ [ च्लि लुङि ] ।

च्ले सिच्। साधारण इति । तन्त्रेणेति भाव । पक्षान्तरमाह-आगन्तुना

१ 'विशेषयिष्यमाणौ' पा० । २ 'विशेष्यते' विशेषयिष्यमि' पा० । ३ 'अङ् भविष्यति' । ४ इद क्वचित । ५ इद भाष्यमित्यन्ये ।

पश्याम ॥ स्वरार्थस्तर्हि ॥ 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्व यथा स्यात् ॥एतदपि नास्ति प्रयोजनम्,अनच्कोऽय, तत्र नार्थ. स्वरार्थेन चकारेणाऽनुबन्धेन ॥ इटि कृते साऽच्को भविष्यति ॥ तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्व भविष्यति ॥ न सिध्यति । 'आगमा अनुदात्ता भवन्ती'त्यनुदात्तत्वं प्राप्नोति ॥ अत उत्तर पठति–॥*॥ सिचश्चित्करणानर्थक्य स्थानिवत्त्वात् ॥*॥ सिचश्चित्करणमनर्थकम् ॥ किं कारणम् ? ॥ 'स्थानिवत्त्वात्' । चितोऽयमादेश. स्थानिवद्भावाच्चिद्भविष्यति ॥*॥ अर्थवत्तु चित्करणसामर्थ्यादीट उदात्तत्वम् ॥*॥ नैष दोष. । अर्थवत्तु सिचश्चित्करणम् ॥ कोऽर्थ. ?॥ 'सिचश्चित्करणसामर्थ्यादीट उदात्तत्व' [ । सिचश्चित्करणसामर्थ्यादीट उदात्तत्वं ] भविष्यति । नाऽप्राप्ते प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते तद्यथैव प्रत्ययस्वरं बाधते एव स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत ॥

*॥ तस्माच्चित्करणम् ॥*॥ तस्माच्चकार' कर्तव्यः ॥

अथेदित्करण किमर्थम् ? ॥*॥ इदित्करणं नकारलोपाऽभावार्थम् ॥*॥ इदित्करणं क्रियते । [ किं प्रयोजनं ? ॥ 'नकारलोपाऽभावार्थम्' ? ] ॥ नकार-

प्र ]दङ्गाऽङ्गिभावोऽत्र न तु समुच्चय इति भाव । स्वरार्थ इति। सिचोऽनच्कत्वेऽपि 'चितस्सप्रकृते'रिति वचनान्मा हि धार्ष्टामित्यादौ धातोरुदात्तार्थं इत्यर्थ । अनच्कोयमिति । 'मा हि धार्ष्टा'मित्यादावादि' सिचोऽन्यतरस्यामिति पाक्षिकेणोदात्तत्वेन भाव्यमिति चित्स्वरस्याप्रसक्तविषय इति भाव ॥ अर्थवदिति । च्लेश्चित्करणस्य सामान्यग्रहणाऽविघातार्थत्वान्मा हि लावीदित्यादौ स्थानिवद्भावप्राप्तं स्वरमागमानुदात्तत्व बाधेत । तस्मादन्तोदात्तार्थं सिचश्चित्त्वमित्यर्थ । नैष दोष इति । 'सिचश्चित्करणानर्थक्य'मिति य उक्त स नास्तीत्यर्थ । अत्र के चिदाहु –प्रत्ययस्वरस्य द्वावपवादौ–आगमानुदात्तत्वं यासुडित्यत्र ज्ञापितं तद्देशं, चित्स्वरश्च पाठित । तत्रा-

उ.]चेति। तथा च सकारमात्रे तात्पर्यमिति भाव ।पृथगिति। अन्यथा'सपरस्मैपदयो'रित्येव वदेत् । 'स'इति वर्णमात्रम् । स च परस्मैपदसाहचर्यादधिकाराच्च प्रत्यय एव ग्रहीष्यते । धातोरुदात्तार्थ इति । लादेशनिमित्तनिघाते जाते पुनरुदात्तार्थ इत्यर्थ । भाष्ये तत्र प्रत्ययाद्युदात्तत्वेनेति । सिज्विधावुपस्थिताद्युदात्त इति शास्त्रस्याऽनवकाशत्वेन वैयर्थ्येन तदुत्तरकालमिटि स्वरविधायकेनेत्यर्थ. । अनच्कविषये बाधेन लब्धवात्तद्सम्बन्ध एवेति 'धातो'रित्यादेरवान्यतापक्षदोषनिघातो भविष्यतीत्युत्तरयति–आगमा इति।एवञ्च तद्बाधेनोदात्त याव चित्त्वं सार्थकमिति भाव ॥ स्थानिवद्भावप्राप्तमिति । 'स्थानिनि दृष्टस्यैवाऽतिदेश' इत्यत्र

१ 'स्थानिवत्त्वा' । २ 'करणे सान' पा० । ३ इद लुप्त सम्प्रति । ४ 'बाधेत' ।

लोपो मा भूदिति। अस्त्यन्यत्। 'अनिदितां हल उपधायाः क्ङिती'ति।

॥*॥ न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य ॥*॥ न वैतत्प्रयोजनमस्ति ॥ किं कारणम्? ॥ यदयं 'हनः सिच्' इति हन्तेः सिचः कित्त्वं शास्ति तज्ज्ञापयत्याचार्यो 'न सिजन्तस्य नकारलोपो भवती'ति ॥ नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम्? ॥ सिच्येव नलोपो यथा स्यात् परस्मिंस्तन्निमित्ते मा भूदिति ॥ कः पुनरत्र विशेषः — सिचि वा नलोपे सति परस्मिन्वा निमित्ते? ॥ अयमस्ति विशेषः — सिचि नलोपे सति नलोपस्यासिद्धत्वादकारलोपो न भवति। परस्मिन्पुनर्निमित्ते नलोपे सत्यकारलोपः प्राप्नोति ॥ समानाश्रयमसिद्धं [ व्याश्रयं तु सिद्धमेव ]। व्याश्रयं चेदम् ॥ ननु च परस्मिन्नपि निमित्ते नलोपे सत्यकारलोपो न भवति ॥

प्र ]पक्षादविप्रतिषेधाच्चित्स्वर एव भविष्यति नार्थः सिचश्चित्त्वेनेति। नैतदस्ति। नहि प्रत्ययस्वरस्यैवापवादः, पञ्चम्या आनाम्नानुगादीनां तदन्तरप्रसङ्गात्। कुषिरञ्जादीनां च चितामू। 'स्थानिवद्'दित्यत्र च कार्यनिर्देश इति परत्वमपि चित्स्वरस्य नास्ति। आगमानुदात्तत्वेन चाविशेषात्स्वरो बाध्यते। तस्मात्तद्बाधनार्थं सिचश्चित्त्वं कर्तव्यमिति स्थितम्। परस्मिन्निति। सिचः परं यदार्धधातुकं तस्मिन्नित्यर्थः।

उ ]न भवति, किन्तु तत्र सम्भावितस्याऽपीति भावः। कार्यातिदेशोऽनन्दर्शनैत्र कार्ये विधानात्परत्वेन 'धाता'रित्येतद्वत्स्वरापवादोऽपि नित्यत्वल्लभ्येनाऽऽगमानुदात्तेन बाध्येतेति तात्पर्यम्। न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाध, 'मन्त्रे' इति सूत्रे 'ले'रिति सामान्यग्रहणार्थत्वात्। अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् लिटः। ततश्च 'आम' इति सूत्रे लेरित्यस्याऽसम्बन्ध एव स्यात्। ततश्च परत्वाऽन्तरङ्गत्वा…त्या निरन्दिषु सत्सु लुकि प्रत्ययलक्षणेन निषेधत्वादेवदत्त कारयाञ्चकारेत्यत्राऽऽमन्तस्य निघातः तत्र परत्वं चाऽनिघात स्यादिति 'आम' इत्यत्र 'ल'रित्यनुवर्तनीयमिति सभिमानम्। यदि त्वन्तरङ्गत्वपरीति न्यायेन निरन्दिभ्यः पूर्वमेव लुक्प्राप्तस्तदा न च्लेश्चित्स्य प्रयोजनमिति तत्सामर्थ्याद्वाऽन्तोदात्तत्वं सिद्धम्। तस्मात्सूत्रकारोऽनुसारेण सिचि च्लौ वा चकारोच्चारणमिति सूत्रार्थः। अपवाद विप्रतिषेधादिति। स्थानिवद्भावेन हि चित्त्वमात्रमतिदिश्यते, स्वरस्तु स्वशास्त्रेणैवेति भावः। न हि प्रत्ययस्वरस्यैतावितिः। एवञ्च 'नाऽऽम्नते प्रत्ययस्वर' इत्यारभ्य 'स्थानिवद्भावादपि वा प्रतिस्नाभावे बाधेन'त्यन्तग्रन्थो भाष्ययुक्तेषु ग्रन्थेषु प्रक्षेप इत्यन्योऽप्यग्रन्थ इति भावः। आगमाऽनुदात्तत्वेनेति। बाध्यसामान्यचिन्तयेति

१ 'विन्करण'पा०।२ 'नकारलोप'पा०। ३ 'लिङ्निमित्ते वा'पा०। ४ 'सति नकारलोपे कृतेऽकारलोप प्रसज्येत' पा०। ५ इदं क्वचिन्न। ६ 'नकार'।

कथम् ?॥'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति॥तदेतद्धन्ते सिच किल्क रण ज्ञापकमेव 'न सिजन्तस्य न[कार]लोपो भवती'ति॥*॥ ईदिद्वा स्थानिव त्स्वात् ॥*॥ अथाऽप्यनेनेदिताऽर्थं स्यात् । इदितोऽयमादेश स्थानिवद्भावा दिदिद्भविष्यति।॥*॥ स्पृशमृशकृषतृपदृपां सिज्वा ॥*॥ स्पृशमृशकृषतृपदृपां सिज्वेति वक्तव्यम् । स्पृश-अस्पृक्षत् अस्प्राक्षीत् । स्पृश ॥ मृश-अमृ क्षत् । अम्राक्षीत् । मृश ॥ कृष-अकृक्षत् अक्राक्षीत् । कृष । तृप-अतृ पत् अत्राप्सीत् । तृप ॥ दृप-अदृपत् अद्राप्सीत् ॥ किं प्रयोजनम् ? ॥ सि ज्यथा स्यात् ॥ अथ क्स सिद्ध ॥[कथ सिद्धे ?॥] सिद्धे 'शल इगुपधाद निट क्स' इत्येव ॥ सिजपि सिद्ध ॥ कथम् ? ॥ च्लेश्चित्करण प्रत्याख्या यते, तत्र च्लावेव झलक्षणेऽमागमे कृते विहतनिमित्तत्वात्क्सो न भविष्यति॥

यद्येवमन्त्यस्य सिजादय प्राप्नुवन्ति ॥*॥ सिद्ध तु सिचो यादित्वात्॥*॥ सिद्धमेतत्॥कथम् ?॥'यादित्वात्'। यदि सिच्करिष्यते सोऽनेकादित्वात्सर्वस्य

प्र ] असिद्धमिति। बाह्यसार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गत्वादसिद्धत्वमित्यर्थ । आर्द्धधातुकोपदेशे यदकारान्त तस्य लोप इत्येव वा हन्तेरतो लोपो न भविष्यति । तथा चोच्यते-'अवयवलोपिनामनो लोपो नास्ती'ति ॥ स्पृशेति । त्रिभ्य क्से प्राप्ते, द्वाभ्यां पुषादङि पक्षे सिज्विधीयते । च्लेश्चित्करणमिति । ततश्च प्रयोजना ऽभावाच्चकारस्येत्संज्ञा नास्तीति च्लौ झलादौ पक्षेऽमागमे कृते सिच् । अमभावपक्षे तु

उ ]भाव ।वस्तुतस्तु 'लवितव्य'मित्यादौ प्रत्ययसन्नियोगेनाऽऽद्युदात्तत्वे कृते पश्चादिड् जायमानोऽस्वरक स्यादिति सामान्यत स्वराऽप्राप्तिविषये तस्य चारितार्थ्योद्बाध कत्वोक्तिर्ध्वन्या, सुतरां सर्वस्वरस्य । यदि शेषनिघातेन तत्राऽनुदात्तत्वसिद्धिरित्यु च्यते तदा तद्वचनमेव व्यर्थं नास्ति चेति 'आद्युदात्तश्चे'ति भाष्ये ध्वनितम् । चित्वन्तु धातुस्वरेण प्रत्ययस्वरेण वैरवाक्यनापन्नशेषनिघातेन प्राप्तानुदात्तत्व बाधनार्थं कार्यमेव। ननु सिचि जायमानोऽपि परस्मिन्निमित्त एव जायतेऽत आह- सिच परमिति । भाष्ये-नलोपस्याऽसिद्धत्वादिति । 'असिद्धवदत्राभा'दित्यने नेत्यर्थ । बहिरङ्गत्वादिति । ननु 'त'शब्दनिमित्तलोपे तस्य बहिरङ्गतयाऽसिद्ध त्वादाहतेन्यादौ 'हस्वादङ्गा'दिति न स्यात् । सिज्निमित्तत्वे त्वसिद्धत्वाऽभावान्नेत्य- र्तानि चेन्न,-त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्ते । भाष्ये-अथाऽप्यनेनेत्येक दस्युक्ति ॥ एकदेश्येवाह-कथ च्लेरिति । ततश्चेति । स्वरस्य मिचश्चित्वेनैव सिद्धिरिति भाव । भाष्ये-चित्करण प्रत्याख्यायत इत्यस्य इत्संज्ञा प्रत्याख्यायत

१ 'लक्षणे'ति क्वचित्र । २ अय पाठ क्वचित्र । ३ 'इदित्वाद्वा' पा० ।
४ 'दृप' पा० । ५ 'सिद्ध'इति क्वचित्र ।

ति भवादेशो भविष्यति॥ किं पुनर्न श्रूयते चकारः?॥ 'लुप्तनिर्दिष्टो चकारः'॥ चङ्ङो कथम्?॥*॥ चङ्ङो प्रश्लिष्टनिर्देशात्सिद्धम्॥*॥ चङ्ङोरपि [सिद्धम्॥ कथ?॥ 'प्रश्लिष्टनिर्देशात्'।] प्रश्लिष्टनिर्देशोऽयम्। च-अङ्-चङ्, अ-अन्-अन्। सोऽनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति॥ चिण कथम्?॥*॥ चिणोऽनित्त्वात्॥*॥ चिणश्चकारस्याऽनित्त्वात्सिद्धम्॥ किमिदमनित्त्वादिति?॥ अन्यस्याऽन्य स्थाने भवन् प्रत्यय स्यात्। अप्रत्यया प्रत्ययसंज्ञायामित्संज्ञा न। अनित्संज्ञाया लोपो न। असति लोपेऽनेकाल्। यदाऽनेकाल्तदा सर्वादेशः। यदा सर्वादेशस्तदा प्रत्ययः। यदा प्रत्ययस्तदेत्संज्ञा, यदेत्संज्ञा तदा लोपः॥ एवं च लेत्र वार्तिककारस्य निर्णय –'सप्रयोजनं चिण्करण'मिति॥ अपि च रेफस्य न प्रकल्पते–अस्पृक्षत् अस्प्राक्षीत्। अस्पार्क्षीदिति न सिध्यति। सिचि पुनः सति विभाषा सिच्। सिच्यपि झलक्षणो

प्र ]तु स्य इति नयोग्य ग्रहणं न कार्यमित्यर्थः। अन्यस्येति। अन्त्यग्रहणमुपलक्षणं, चङादयो ह्यादेः परस्य प्राप्नुवन्ति। चिणोऽनित्त्वादिति। चिण्भावकर्मणोरित्यत्र धातुग्रहणं नापेक्ष्यत इत्यतः परस्येति न भविष्यति। पदादीपादिभ्यश्चात् परस्येति प्राप्नोति। तस्माद्विहितविशेषणाश्रयेण परिहर्तव्यम्। सप्रयोजनमिति। सामान्यग्रहणाऽविघातार्थत्वस्योक्तत्वात्। सति च प्रयोजने चकारस्येत्संज्ञया भाव्य इत्यर्थ

उ ]स्येत्र तात्पर्यम्। चङादय इति। णिश्रिद्रुस्रुभ्य इत्यादि पञ्चमीनिर्देशेन विधानादित्यर्थः। 'णिश्रिद्रुस्रुभ्य' इति विहितविशेषणमिति भाष्याशय इत्यन्ये। भाष्ये-च अङिति। चिण्यायनाऽप्यापि चस्येत्त्वाऽभावेऽनेकाल्त्वात्सिद्धमित्यत्र प्रश्ने फलं चिन्त्यम्, उपायान्तरपरमेतदभ्युपेत्यापीत्यनालोच्य पूर्वप्रवृत्तिं, प्रवृत्तमिति बोध्यम्। नन्व'न्यस्याऽन्य स्थाने भव'न्निति भाष्यमनुपपन्नम्, 'आदेः परस्य'त्यस्य प्राप्ते प्रत्ययादित्वनेत्वमिद्धेरत आह–चिण्भावेत्ति। विहितेति। पदादिभ्यो विहितस्य च्लेरित्यर्थ परशब्देन विधानाऽभावादाद परस्येत्यस्याऽप्राप्तिरिति भावः। भाष्ये–अप्रत्यय स्यादिति। प्रत्ययाधिकारे पाठेऽप्यन्वर्थसंज्ञाश्रयणाऽभावात्, न हि प्रत्ययस्याऽवयवस्तदर्थयतीति भावः। ननु यन्त्वन्त पातितोऽपि प्रत्ययोऽर्थवत्त्वमिवाऽन्याऽवयवस्याऽप्यर्थवत्त्वमस्तु, समुचित्य चाऽवयवसमुदायबोधकता। तद्वदत्र ताऽर्थाऽधिकारात्प्रत्ययत्वेऽपि न दोषत्वमिति चेन्न, एकदेशविकृतन्यायेनाऽदोषात्। तद्ध्वनयन्नाह–एव चेति। एतेन 'नाऽनुबन्धकृतमनेकाल्त्व'मिति सर्वदेशान्तर्गतं दुर्लभमित्यपास्तम्। 'वार्तिककारस्य'त्युक्त्या स्वीकरीत्या चकारस्य

१ इदं क्वचिन्न। २ इदं वार्तिकमित्यन्ये। ३ 'चिणोऽनित्त्वान्निर्देश'। ४ 'एव'। ५ 'च्लि लुङी'त्यत्र हि 'च्लेर्थिन्करण विशेषणार्थ'मित्युक्तम्।

ऽमागमो विभाषा । यस्य खल्वप्यमा [ ञ्जो ] निमित्त न विहन्यते स स्यादेव । तस्मात्सुष्ठूच्यते–'स्पृशमृशकृषतृपदृपां सिज्वे'ति ॥ [च्ले सिच्] ।

## शल इगुपधादनिट: क्स ॥ ३।१।४५ ॥

॥*॥ क्सविधान इगुपधाभावश्च्लेर्गुणनिमित्तत्वात् ॥*॥

क्सविधान इगुपधस्याऽभाव ॥ किं कारणम् ?॥ 'च्लेर्गुणनिमित्तत्वात्' । च्लिर्गुणस्य निमित्तम् । तत्र च्लावेव गुणे कृते 'इगुपधा'दिति क्सो न प्राप्नोति ॥ ॥*॥ न वा क्सस्याऽनवकाशत्वादपवादो गुणस्य ॥*॥ न वैष दोष ॥ किं कारणम् ?॥ 'क्सस्याऽनवकाशत्वात्' । अनवकाश क्सो गुण बाधिष्यते ॥*॥ अनिङ्वचनमविशेषण च्लेर्नित्याऽऽदिष्टत्वात् ॥*॥

प्र ]गम्न भवतीत्यमागमाऽभावात् क्स एव प्रसज्येतत्यर्थ । यस्य खल्वपीति । पुषादय । स हि कृतेऽप्यमागमे प्रवर्तते । [ च्ले सिच् ] ॥

शल इगु । क्सविधान इति । विशेषणाऽसम्भवाल्लक्षणदोषमुद्भावयति । भूतपूर्वत्याश्रये विहितविशेषणाश्रये वा लक्ष्याऽसिद्धि । कित्करण तु क्सस्याचीति विशेषणार्थं वत्सा इत्यादौ लोपनिवृत्तये स्यात् ॥ न वा क्सस्येति । भूतपूर्वगत्याश्रये कित्वमनर्थक स्यादिति सानुबन्धकं रूपमनवकाशमित्यपवादत्वाद्गुणस्य बाधकमित्यर्थ । न च क्सस्याचीति विशेषणार्थं कित्वम् , प्रत्ययत्वादर्थवत्त्वाच्चास्यैव क्सस्य तत्र ग्रहणस्य सिद्धत्वात् । उणादीनामव्युत्पन्नत्वाद्वत्सा इत्यादौ प्रसङ्गाऽभावात् । अनिङ्वचनमिति । अनिट इत्येनच्च्लेर्विशेषण यथा स्यादिति चिण्वदुत्सर्ग कृत

उ ]च्चैरेव वा प्रत्याख्यानमिति सूचितम् । च्लावेव झलादिलक्षणेऽपि 'अस्पार्क्षी'-दित्यस्याऽसिद्धिरूपं दूषणान्तरमाह–अपि चेति । तृपदृपादौ फल दर्शयति भाष्य–यस्य खल्वपीति ॥ [च्ले सिच् ] ॥

शल इगुप। लक्षणदोषमिति । असम्भवरूपमित्यर्थ । भूतपूर्वेति । विशेषणसामर्थ्याद्धि तदाश्रयणम् । लक्ष्याऽसिद्धिरिति । सर्वत्र गुणश्रवणापत्तिरित्यर्थ ।

ननु क्सस्य कित्वसामर्थ्यात्पूर्वमपि गुणो न भविष्यतीत्यत आह—कित्करणमित्विति । वत्सो वर्षे स औणादिक । क्सस्य गुणाऽपवादत्वे हेतुमाह–भूतेति ।

ननु भासावित्यादावपि लोपापत्तिरत आह–प्रत्ययत्वादिति। 'वत्सा'इत्यादौ दोष वारणायाह–उणादीनामिति । तृणमावित्यादौ दोषस्तु 'दुग्वा दुहे'त्यनेन क्सपे-दाऽनुवृत्ते र्थाधिकाराऽनुरोधेन दुहादिषु यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणाद्वा रणीय । अत एव दृशे क्स तादृक्षमित्यादौ न दोष इति कित्वसामर्थ्याद्गुणो नेति बोध्यम् । 'दुधुक्षती'त्यादौ सन सानुबन्धकत्वान्न दोष । एतद्दोषनिषये तृणम

१ दृ० प्रतिषु । २ 'हप' पा० । ३ 'सपद' ।

अनिड्वचनमविशेषणम्॥ किं कारणम् ?॥ 'च्लेर्नित्यादिष्टत्वात्'। नित्यादिष्ट श्च्लिर्न क्वचिच्छ्रूयते। तत्र 'च्लेरनिट' इति क्सो न प्राप्नोति। ॥*॥ न वा क्सस्य सिचपवादत्वात्तस्य चानिडाश्रयत्वादनिटि प्रसिद्धः क्सविधिः ॥*॥ न वैष दोषः ॥ किं कारणम् ?। 'क्सस्य सिचपवादत्वात्'। सिचपवादः क्सः। स चाऽनिडाश्रयः। न चापवादविषय उत्सर्गोऽभिनिविशते। 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः'। 'प्रकल्प्य वाऽपवादविषयन्ततउत्सर्गोऽभिनिविशते'। तन्न तावदत्र कदाचित् सिज्भवति, अपवादः क्सः प्रतीक्षते। क्सस्य सिचपवादत्वात्तस्य चानिडाश्रयत्वादनिट्त्वं प्रसिद्धम्। अनिटि प्रसिद्धे क्सविधिः। अनिटि प्रसिद्धे क्सो भविष्यति ॥ सिजिदानीं क्व भविष्यति ? ॥*॥ शेषे सिविधानम् ॥*॥ शेषे सिज्विधानं भविष्यति। अक्रोषीत् अमोषीदिति ॥

### श्लिष आलिङ्गने ॥ ३।१।४६ ॥

किमर्थमिदमुच्यते ?॥॥*॥ नियमार्थम् ॥*॥ [नियमार्थोऽयमारम्भः]- श्लिष आलिङ्गन एव क्सो यथा स्यात्। इह मा भूत्-उपाश्लिषज्जतु च काष्ठं च। समाश्लिषज्जगकुलमिति ॥ अत उत्तरं पठति- ॥ ॥*॥ श्लिष आलिङ्गने

प्र ]त्युक्तम्। तत्रास्य सिचा नित्य भाव्यमितीडभावोपलक्षितस्य रूप न क्वचिद्दृश्यत इति च्लेरनिट इति विशेषणस्याऽप्रसिद्धिरित्यर्थः ॥न वा क्सस्येति। अत्र भावः- गुह लिह् इति स्थिते सिचा न भाव्यं, क्सस्याय विषय इति। क्सेनाऽपि न तावद्भाव्यं यावदस्याऽनिट्त्वं न ज्ञातम्। तत्र क्सारम्भेनैवेट्प्राप्तौ तन्निषेधादनिट्त्वम स्तीति क्सः सिद्धः -अलिक्षदिति। यत्र त्विट्प्रतिषेधो नास्ति तत्र सिचव भवति- अक्रोषीदिति ॥ [ शल इगुपधादनिटः क्सः ]

श्लिष आ ॥ किमर्थमिति। किं पुषादित्वादङि प्राप्ते तद्वारणाय विध्यर्थमिदम्, अथ पूर्वेण क्से सिद्धे नियमार्थमिति प्रश्नः ॥ इतरो वक्ष्यमाणयोगविभागं मनसि कृत्वाह—नियमार्थमिति। उपाश्लिषदिति। प्रत्यासत्तावत्र

उ ]नाहक्षादेरनभिधानमिति कश्चित्। सिचा नित्यमिति। आदेशान्तराऽभावे तस्याऽवश्यम्भावादित्यर्थः। सिजेव भवतीति। निर्दिश्यमानपरिभाषया च्लेरेव स। 'धातो'रिति च विहितविशेषणमिति निर्दिश्यमानस्य व्यवहितत्वमिति भावः ॥

श्लिष आलिङ्गने। विधित्वसम्भवे नियमार्थत्वं कथमित्यत आह-इतर इति। प्रत्यासत्ति-सन्निकर्षमात्रम्। प्राणिकर्तृकतद्विशेषश्चाऽऽलिङ्गनमिति बोध्यम्। श्लिषर्नाऽप्रासे इति। परस्मैपदविषये विधित्वं स्यादित्यर्थः। भाष्ये-आलिङ्गनेऽनालिङ्गने चेति। कर्मणि कर्मव्यतिहारे चाऽऽत्मनेपदमितित्यर्थः। तत्राऽऽलिङ्गने

१ इद भाष्यमित्यत्रे। २ 'विषयमुत्स'। ३ 'दनिट्प्रसिद्ध'। ४ इतम्।

नियमानुपपत्तिर्विधेयभावात् ॥*॥ श्लिष आलिङ्गन इति नियमस्यानुपपत्तिः ॥ किं कारणम् ? ॥ 'विधेयभावात्' ॥ कैमर्थक्यान्नियमो भवति? ॥ 'विधेयं नास्ती'ति कृत्वा ॥ इह चास्ति विधेयम् ॥ किम् ? ॥ पुषादिपाठादङ्प्राप्तस्तद्बाधनार्थं क्सो विधेय ॥ तत्राऽपूर्वो विधिरस्तु नियमो वेत्यपूर्व एव विधिः स्यान्न नियमः ॥ किञ्च स्याद्यद्यय नियमो न स्यात् ?॥ आत्मनेपदेष्वालिङ्गने चाऽनालिङ्गने च क्स प्रसज्येत । यथैव च क्सोऽङं बाधत एवं चिणमपि बाधेत । उपाश्लेषि कन्या देवदत्तेनेति ॥ ॥*॥ सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ 'श्लिष आलिङ्गनेऽचिण्विषये क्सो भवती'ति वक्तव्यम् ॥*॥ अङ्विधाने च श्लिषोऽनालिङ्गने॥*॥ अङ्विधाने च श्लिषोऽनालिङ्गने इति वक्तव्यम् ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु। ननु चोक्त–'श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावा'दिति । नैष दोषः । ॥*॥ योगविभागात्सिद्धम् ॥*॥ योगविभागः करिष्यते। 'श्लिषः' । श्लिषः क्सो भवति ॥ किमर्थमिदम् ? ॥ पुषादिपाठादङ्प्राप्नोति तद्बाधनार्थम् ॥ ततः '–आलिङ्गने' । 'आलिङ्गने च श्लिषः क्सो भवति' ॥ इदमिदानीं किमर्थं [स्यात्] ? । नियमार्थम् । 'श्लिष आलिङ्गने एव' ॥ क्व मा भूत् ? ॥ उपाश्लिषज्जतु च काष्ठं च, समाश्लिषद्ब्राह्मणकुलमिति ॥

यदप्युच्यते–यथैव क्सोऽङं बाधत एवं चिणमपि बाधेतेति। 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरा' नित्येवं क्सोऽङं बाधिष्यते, चिणं न बाधि

प्र.]श्लिषिर्वर्तते, नालिङ्गने॥अङ्प्राप्त इति। श्लिषेर्नाप्राप्ते अङि क्सस्यारम्भाद्बाधकत्वमित्यर्थः । यथैवेति। विध्यर्थत्वे दोषान्तरोद्भावनम् । सिद्धं त्विति। पूर्वेण क्से सिद्धे नियमार्थमेतद्वचनं कर्तव्यम्। अचिण्विषय इति । अनेन नियमार्थत्वं समर्थ्यते । अन्यथा चिण्बाधनाय तद्विषये विध्यर्थमेतत्स्यान्न तु नियमार्थम् । अङ्विधान इति । तत्रथाऽऽलिङ्गनेऽङ्प्रतिषेधात्–श्लिष आलिङ्गनेऽचिण्विषये इति नियमार्थं भवति, अन्यथा विध्यर्थमेतत्स्यात् ।

श्लिष क्स इति।श्लिष इत्यत्राऽनिट इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाऽभाव ।

उ.]इष्टमेव, अन्यत्रापत्तिरेव दोषः । दोषान्तरेति। बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भावः । नियमार्थमिति । अचिण्विषये श्लिष आलिङ्गन एवेत्यर्थः।'अचिण्विषय' शब्देन भावकर्मार्थक'त'शब्दभिन्नमात्मनेपदमुच्यते।अन्यथा विध्यर्थमिति । 'अचिण्विषय' इत्यनेन तद्भिन्नविषयमेव ग्रहणं स्यादित्यर्थः । तत्तु चिण्विषये विधिव्यावृत्त्यर्थं स्यादिति भावः । दाहार्थस्येति । अन्यथा तत्र चारितार्थ्यादङो बाधो न स्यादिति भावः । सानुबन्धकत्वादेति । 'श्लिषु दाहे' इति

प्यते । अथवा तत्र वक्ष्यति चिण्ग्रहणस्य प्रयोजनं- चिणेव यथा स्यादन्यत् मा भूदि'ति ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३।१।४८ ॥

॥१॥ णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानम् ॥१॥ णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानं कर्तव्यम् ॥

'नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ' ॥इति॥

प्र ]माऽनुवर्तनस्य वाधा । तत्र पुषादित्वादङ्मितोऽङ् प्रत्ययश्चिपटन क्सेन बाध्यते ॥

अथ वेति । समुदायापेक्षाया पुरस्तादपवादा इति परिभाषा नास्तीति परिहारान्तरोपन्यासः ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रु। कमेरिति। आर्द्धधातुके विकल्पेन णिङो विधानाण्णिङभावे णिचि प्राप्ते वचनम् । तत्राऽचकमतेति भवति। णिङ्पक्षे तु सन्वद्भावादचीकमतेति। 'सन्वल्लघुनि चङ्परे' इति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिराश्रीयते अन्यस्याऽसम्भवात्। तेन चङ्परे णौ परतो यल्लघु धात्वक्षरं तत्र परतोऽभ्यासस्य सन्वत् कार्यं भवतीत्यर्थः।नाकमिष्ट सुखमिति। नाकं स्वर्गमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः 'कर्मेऽनुष्ठितैः किं स्यं भवती'ति पृष्टैः 'अचकमत'त्युक्तम् । यैस्तु 'अचीकमते'त्युक्तं ते पत्काषिणो यान्ति । स्मरणाऽस्मरणनिबन्धनोऽयं दोषोऽयं लक्षणस्मरणादरार्थः । अन्ये त्वाहु —अचकमिटेति यैरुक्तं त एतापचारादनभिमतशब्देनानुकरणशब्देनोच्यन्ते । अनुकार्यानुकरणयोर्भेदस्याऽविवक्षितत्वाद्विभक्तिर्न कृता । त सुयुक्तैरपि वडवारथैर्गच्छन्त सुखं न

उ ]प्राप्नुयन् । अनुमित इति। न च क्सोऽचरितार्थ ,तत्रादिपदस्यैतत्सामर्थ्येनेतर पुषादिमात्रपरत्वमित्यभिमान । पुषादिपाठोऽपि स्वार्थः । न चाऽन्यत्रैव पाठ्य, अशोक्सनिकान्यायात् । वस्तुत पुषादिपाठसामर्थ्यादादिपदेन तत्र ग्रहणसामर्थ्याच्चाऽङ्क्सयो परस्मैपदे आलिङ्गनाऽनालिङ्गनविषये सर्वत्र विकल्पे प्राप्त, आत्मनेपदे चाऽऽलिङ्गनाऽलिङ्गनयोरविशेषेण क्से प्राप्ते द्वितीयेन नियम –'आलिङ्गन एवे'ति । एवञ्चाऽर्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते । तस्यैव वाक्यस्याऽनुवादो भाष्ये-तद्भावनार्थमिति । न चाऽऽलिङ्गने क्स एवे'ति विपरीतनियमापत्ति , लक्ष्यानुरोधात्प्रत्ययनियमस्यैवाङ्गीकारादिति सूचयन् । योगविभागसामर्थ्याच्च नियमेन सर्वं 'क्स'प्राप्तेनार्थं ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रुस्रुभ्य । ननु णिङ्मात्रपक्षेऽपि सन्वत्त्वं दुर्वारं, तत्र णावित्यनुवृत्तेरत आह–सन्वल्लघुनीति । अन्ये त्वाहुरिति । अत्राऽरुचिस्तु भाष्याऽननुगुण्यम् ।

१ 'सर्वत्राप्रतीति' ।

॥*॥ कर्मकर्तरि च ॥*॥ कर्मकर्तरि चोपसङ्ख्यानं कर्तव्यम् । कारयति कटं देवदत्तः । 'अचीकरत कटः स्वयमेव'। उच्छ्राययति कटं देवदत्तः। 'उदशिश्रियत कटः स्वयमेवे'ति ॥ ॥*॥ न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम्॥*॥न वा कर्तव्यम्॥ किं कारणम् ? ॥ 'कर्मण्यविधानात्' । नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत ॥ कर्तृत्वाच्च कर्मकर्तुः सिद्धम् ॥ अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति॥ननु चायं कर्मणि विधीयते–'चिण्भावकर्मणो'रिति॥ प्रतिषिध्येते तत्र यक्चिणौ–'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यान'मिति॥यस्तर्ह्यहेतुमण्णिच्–'उदपुपुच्छत गौः स्वयमेव'॥अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन,'यक्चिणोः प्रतिषेधे णिग्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यान'मिति ॥

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३।१।५२ ॥

अस्यतिग्रहणं किमर्थम् ?॥ ॥*॥ अस्यतिग्रहणमात्मनेपदार्थं [ पुषादित्वा त् ]॥*॥अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम्॥ किमुच्यते आत्मनेपदार्थमिति, न पुनः परस्मैपदार्थमपि स्यात् ? ॥ 'पुषादित्वात्' । पुषादिपाठात्परस्मैपदेष्वङ्भविष्यति ॥*॥ कर्मकर्तरि च ॥*॥ कर्मकर्तरि चोपसङ्ख्यानं कर्त-

प्र.]प्राप्नुवन्ति,अपशब्दोच्चारणात्। ये त्वचीकरतभाषिणस्ते परुषापिणोऽपि सुखं यान्तीति ॥ कर्मकर्तरि चेति । कर्तर्युच्यमानश्चङ्कर्मकर्तरि न प्राप्नोतीति वचनम् । उदपुपुच्छतेति । पुच्छमुदस्यति उत्पुच्छयते गौः, तत्र यदान्तर्भावितण्यर्थत्वादस्य गवा सकर्मकत्वं भवति तदा 'उत्पुच्छयते गा'मिति भवति । पुनर्गौरेव यदा सौकर्यातिशयेन कर्तृत्वं विवक्ष्यते भूतकालश्च तदैतदुदाहरणम् ॥ [ णिश्रिद्रुस्रुभ्य. ]

अस्यति। पुषाद्य आगणान्तात् । अन्तराले वृत्करणं रधादिसमाप्त्यर्थम् ,न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह—अस्यतिग्रहण-

उ.]वार्तिकोत्तरं पाठेन तत्तत्तुल्यार्थत्वस्य स्वरसतः प्रतीतेः । पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्तोऽधिकसुखप्राप्तिः । 'कर्मेऽङि कीदृश रूप'मिति प्रश्ने स्वरसतः कम्प्रकृतिके दुःखीत्यर्थके तस्य साधुत्वेऽप्यसमञ्जसोत्तरत्वान्न्यूनसुखप्राप्तिः । एवञ्च सामान्यशास्त्राऽनुगतलक्ष्यप्रयोगापेक्षया विशेषलक्षणानुगतशब्दप्रयोगे धर्माधिक्यमित्यस्य भाष्यस्य तात्पर्यम् । कर्मकर्तरीति । कर्मवद्भावाच्चिणा बाधः स्यादित्यभिमानः । भाष्ये–कर्मणि विधीयते य इति । कर्मवद्भावप्राप्त इति भावः । उत्पुच्छयते गामिति। 'कर्तुरीप्सिततम'मिति कर्मत्वं बोध्यम्॥[णिश्रिद्रुस्रुभ्य कर्तरि चङ्]॥

अस्यतिवक्ति। ननु परस्मैपदेष्वङ्दर्शनादात्मनेपदार्थमित्ययुक्तमत आह–पुषा-

१ इदं क्वचिन्न ।

व्यम् । पर्यासयेता कुण्डले स्वयमेव ॥ अत्रापि-॥*॥ 'न वा कर्मस्याविधाना त्कर्तृत्वाच्च कर्मकर्तु सिद्धम्' ॥*॥ इत्येव ॥ [ अस्यतिवक्ति ] ॥

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ३।१।५८ ॥

इह ग्लुचिग्रहण ग्लुञ्चिग्रहण च क्रियते । ॥*॥ अन्यतरच्छक्यमकर्तु म् ॥*॥ कथम्?॥ यदि तावद्ग्लुचिग्रहण क्रियते ग्लुञ्चिग्रहण न करिष्यते । तेनैव सिद्ध न्यग्लुचत् न्यग्लोचीत् । इदमिदानीं ग्लुञ्चे रूप-न्यग्लुञ्चीत् ॥

अथ ग्लुञ्चिग्रहण क्रियते ग्लुचिग्रहण न करिष्यते तेनैव सिद्ध न्यग्लु चत् न्यग्लुञ्चीत् । इदमिदानीं ग्लुचे रूप-न्यग्लोचीदिति ॥ [जॄस्तम्भु] ॥

चिण्ते पदः ॥ ३।१।६० ॥

अथ तशब्दोऽस्त्येवात्मनेपदम् अस्ति परस्मैपदम् , अस्त्येकवचनम्, अस्ति बहुवचन, कस्येद ग्रहणम् ? ॥ य पदरस्ति ॥ कश्च पदरस्ति ? । ॥*॥ पदिरात्मनेपदी ॥*॥ ॥ [ चिण्ते पद ] ॥

चिण्भावकर्मणोः ॥ ३।१।६६ ॥

'चि'णिति वर्तमाने पुनश्चिण्ग्रहण किमर्थम्?॥ नेयेव तद्भूद्धिप्यर्थमिदम्। अथ वा वेयेव तद्भूद्धियार्थेमिदम् ॥ अथ वा चिणिति वर्तमाने पुनश्चिण्ग्र हणस्यैतत्प्रयोजन-'चिणेव यथा स्याद्यदन्य प्राप्नोति तन्माभू'दिति ॥

सार्वधातुके यक् ॥ ३।१।६७ ॥

इह पश्याम -कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते 'पच्येते ओदनौ'

---

प्र ]मिति । अत्रापीति । आतिदेशिकस्य कर्मकार्यस्य कस्यचिदत्राऽविधानात् स्वाश्रय कार्यं प्रतिबन्धकाऽभावात् प्रवर्तत एवेति भाव ॥ [ अस्यतिवक्ति ]।

जॄस्तम्भु। अन्यतरदिति । अनेकार्थत्वाद्धातूनामत्र विषयेऽर्थभेदो न प्रयोजक उभयोरुपादानस्येति भाव । यत्तूभयोपादानसामर्थ्यात् ग्लुञ्चेरङि नलोपो न भवति न्यग्लुञ्चदिति कैश्चिदभ्यधायि, तद्भाष्यविरोधादनादरणीयम् ॥ [ जस्तम्भु ] ।

चिण्भाव । नेयेवमिति । प्रतिषेधमपह्नु तद्भूदित्यर्थ ॥ नन्वत्र प्राप्त्य-भावात्तेनेति नापेक्षिष्यत इत्याह-अथ वेति। निषेधोऽपि पूर्वमेव निर्देशेन निवर्तित त्वात्ताऽपेक्षिष्यत इत्याह-अथ वेति । ततोऽशक्ष्यीति क्सो न भवति ॥

सार्वधा । इह पश्याम इति । वक्ष्यमाणस्य वाक्यार्थस्य दर्शक्रियाया कर्मत्व

---

उ ]द्य आगमान्तादिति।आतिदेशिकस्येति।यक्ष्चित्वा वाधाद्विवचने चिणोऽप्राप्ते । आत्मनेपदमपि 'उपसर्गादस्यत्यूह्योरि'ति वार्तिकेन सिद्धमित्यर्थ ॥ [अस्यति] ।

जॄस्तम्भु । म्लुचे स्नेयकरणार्थं वाक्य सिद्धिरत आह-अनेकार्थत्वादिति॥

---

१ इद भाष्यमित्यन्ये । २ 'मन्येक' । ३ इद क्वचिन्न ।

'पच्यन्ते ओदना' इति। भावे पुनरेकवचनमेव—आस्यते भवता, आस्यते भवद्भ्याम्, आस्यते भवद्भिरिति, केनैतदेवं भवति ?॥ कर्माऽनेकम्, तस्याऽनेकत्वाद्द्विवचनबहुवचनानि भवन्ति। भावः पुनरेक एव॥ कथं तर्हि

---

प्र ]यथा 'पश्य मृगो धावती'ति मृगकर्तृकाया सरणक्रियायाः॥ केनैतदिति। इह क्रियाप्रधानमाख्यातम्। सा च क्रिया साध्यरूपत्वान्निवृत्तभेदा। तदुक्तम्—'निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते। श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना'-इति॥ तत्र यथा साधनभेदात्कर्तृकर्माभिधायिनि लकारे द्विवचनबहुवचने भवतस्तथा भावाभिधायिन्यपि प्रसजतः। अथैकपदवाच्यसाधनसङ्ख्याश्रये द्विवचनबहुवचने भवत इति पक्षस्तदा पाकौ पाका इत्यत्र न प्राप्नुतः, साधनस्य घञाऽनभिधानादिति प्रश्नः॥ कर्मानेकमिति। कर्मशक्त्याधारो द्रव्यमनेकम्। शक्तिशक्तिमतोश्च शब्देन भेदो न प्रतिपाद्यत इति शक्त्यभिधायिनाऽप्याख्यातेनौदनः पच्यत इति शक्तिमद्द्रव्यवाचिन ओदनशब्दस्य सामानाधिकरण्यं भवति॥ भावः पुनरिति। भेदाऽभावलक्षणै[2]रभेदैरन्व भावस्य, न त्वेकत्वसङ्ख्याऽऽख्यातवाच्यस्य भाव-

---

उ ]सार्वधातुके यक्। इहेति कर्मणि तिवनाशाल्लुत्वात्तद्दर्शयति—वक्ष्यमाणस्येति। वाक्यार्थ—क्रिया। सा चेह येनैतदेवम्भवतीत्येतद्रूपा। सरणं—धावनम्। अध्याहृतधावनादिति। पदोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम्। ननु भावस्य क्रियारूपस्य सङ्ख्ययाऽयोगात् द्विवचनादिकं भविष्यति। कर्मणि तु शक्तिशक्तिमतोरभेदोपचाराच्छक्तिगतसङ्ख्यायोगाद्द्विवचनादिकं सेत्स्यतीत्यत आह—इहेति। श्रुतेरिति। साधनादिभेदाद्भिन्नत्वेऽपि श्रुतेराख्यातशब्दात् प्रविभागकल्पना भेदावगमरूपाऽशक्येत्यर्थः। कथं तर्हि द्विवचनादिकं, तत्राह—तत्रेति। साधनभेदादिति। साधनभेदकृतभेदारोपादित्यर्थः। अथैकेति। शब्दशक्तिस्वभावादिति भावः।

तदा पाकाविति। क्रियारूपस्य स्वतः सङ्ख्यासम्बन्धाऽभावादिति तात्पर्यम्। ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्याया अप्रत्ययभूतत्वात्सङ्ख्यायोगाऽभावेना'नेक'मित्यनुपपन्नमत आह—कर्मशक्तीति। शब्देनेति। न हि'पटस्य शुक्ल' इतिवत्'पटस्य कर्मे'ति प्रयोगोऽस्तीति भावः। तदेवाह—सामानाधिकरण्यमिति। कर्मादिपदं शक्तिमदभेदमापन्नैव शक्तिरुच्यते। अत एव 'कर्मत्व'मिति भावप्रत्ययेन शक्तिरुच्यते। प्रवृत्तिनिमित्तेन व्यक्तेस्तादात्म्यसम्बन्धस्याऽऽरोपादिति तत्त्वम्। एवञ्च कर्मणि निर्धारणानाऽऽख्यातेनाऽपि तथैव शक्तिरुच्यत इति सामानाधिकरण्योपपत्तिरिति भावः। ननु भावस्यैकत्वयोगे द्वित्वादियोगोऽपि स्यादत आह—भेदाऽभावेति। परे त्वस्यैवैकवचनसङ्ख्या क्रियायाम्। असत्त्वन्वयनारो-

---

१ इदं क्वचित्। २ 'लक्षणमेकत्व'।

द्विवचनबहुवचनानि भवन्ति—पाकौ पाका इति ?॥ आश्रयभेदात् । यदसौ द्रव्यं भिन्नो भवति भावस्तस्य भेदाद्द्विवचनबहुवचनानि भवन्ति ॥ इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति सर्वे ते तस्या आश्रयभूता भवन्ति, तद्भेदाद्द्विवचनबहुवचनानि प्राप्नुवन्ति॥एवं तर्हीदं तावदयं प्रष्टव्यः – किमभिसमीक्ष्यैतत्प्रयुज्यते—पाकौ पाका इति ?॥ यदि तावत्पाकविशेषानभिसमीक्ष्य, यश्चौदनस्य पाको , यश्च गुडस्य यश्च तिलानां बहवस्ते शब्दाः सम्पाश्च । तत्र युक्तं बहुवचनमेकशेषश्च । तिङभिहिते चाऽपि तर्हि भावे बहुवचनं श्रूयते । तद्यथा—'उष्ट्रासिका आस्यन्ते', 'हतशायिकाः शय्यन्त' इति ॥

अथ कालविशेषानभिसमीक्ष्य,यश्चाद्यतनः पाको, यश्च ह्यस्तनो, यश्च श्वस्त

प्र ]स्त्योऽस्ति । तस्याद्रव्यधर्मत्वादसत्त्वभूतत्वाच्चाख्यातवाच्यस्य भावस्य॥ आश्रयभेदादिति। गुडतिलौदनादीनामाश्रयाणां भेदाद्भिन्नोऽपि पाको भवति। घञादिभिश्च सत्त्वरूपोऽर्थोऽभिधीयत इति द्रव्यधर्मसङ्ख्याभेदाश्रयो वचनभेदो न विरुध्यत इति भावः ॥ इहापीति । आख्यातवाच्यस्याऽपि भावस्याश्रयभेदाद्भेदोऽस्तु । ततश्च वचनभेदप्रसङ्ग इत्यर्थः ॥ पाकविशेषानिति । कश्चित्पाकशब्दः कर्मसाधनो व्याख्यातः। पच्यमानविशेषान् गुडादीनित्यर्थः । तदयुक्तम् । असंज्ञायां कर्मणि घञो दुर्लभत्वात् । तस्मादाश्रयप्रकारादिभेदभिन्नान् पाकविशेषानित्ययमेवाऽत्रार्थः ॥ अथवा संज्ञाग्रहणस्य प्रायिकत्वादसंज्ञायामपि कर्मणि घञ् भवति॥ उष्ट्रासिका आस्यन्ते इति । उष्ट्राश्रयाणामुष्ट्राणां भेदादनेकप्रकाराण्युष्ट्रासनानि भिद्यन्ते, तस्मादेवा

उ ]ऽपि तन्नादिसम्बन्धाऽभावमभ्युपगम्य।तदेव एकं पूर्वोक्तसहकारेण भाष्यव्याख्यानमित्याहु। आधारद्रव्यभेदेऽपि कृत पाकादिभेदोऽत आह—गुडतिलेति। भिन्न पाकोऽपीत्यर्थः । आश्रयभेदात्तत्रापि भेदाऽध्यवसाय इति भावः । [नन्वेवं निष्ठादि द्विवचनादि स्यात् इत्याह कृदभिहित आह—घञादिभिरिति। निष्ठान्यस्तु न सत्त्वभूत इति भावः ]। उक्तार्थाऽननुवादत्वेनाथ्योयमित्याह—आख्यातेति । वस्तुतः पूर्वभाष्येण कृतेऽपि तदनुरस्थानसमाधानतया अपि सङ्ख्याया आरोपेण द्विवचनादीत्युक्तम् ।तत्र शङ्कां समस्तमयत्र। घञो दुर्लभत्वादिति। 'यो गुडस्य'त्यादि वक्ष्यमाणभाष्यविरोधादित्यपि बोध्यम् । एतेनाऽथ वेत्यपि न समञ्जसम्। एवमाऽऽश्रयप्रकारादिकृतभेदाना पाकशब्दादवगतिसम्भवेन युक्तं बहुवचनं, न तु तिङन्त तत्त्वमत्राऽनवगतेरिति भावः । यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये—तिङभिहिते चापीति । ननु'उष्ट्रासिके'त्यादावप्युपगतबाह्ये भावे कथं भेदावगमोऽत आह—अत्राश्रयाणामिति । तस्मात्स्थानेति । न ह्येकासने तावत्साम्य

१ 'आश्रया' । २ 'तथा' । ३ इह क्वचित ।

नस्तेऽपि बहव शब्दा सरूपाश्च। तत्र युक्त बहुवचनमेकशेषश्च ॥ तिङभि-

प्र ]धिकरण्याच्चाख्यातवाच्यभावभेदादास्यन्त इति बहुवचनमित्यर्थ ।इवशब्दप्रयोग-मन्तरेणाऽपि चेवार्थगतिर्भवति । तदयमर्थ —यादृशान्युष्ट्राणामनेकप्रकाराण्यासनानि तादृशानि देवदत्तादिभि क्रियन्त इति॥ 'भवद्भिरास्यते' इत्यत्र स्वाश्रयभेदादाश्रितभेदस्य प्रतिपन्नत्वात् प्रयोजनाऽभावाद्भावो भेद नोपादत्त इत्येकवचनमेव भवति । यथा 'तत्र पलाशेषु बभूव राग' इति । न च सर्वत्राश्रयभेदादाश्रितभेदस्य प्रतीति , 'पदान् पचती'त्यादौ पाकस्याऽभिन्नस्यैवाऽवगमात्॥ केचित्तूष्ट्रासिका आस्यन्त इति कर्मणि लकारमिच्छन्ति उष्ट्रासिकाऽऽख्यस्य भावस्य कर्मत्वात् । यथा 'गोदोहः सुप्यते' इति । एव तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितम् ॥ तेऽपि बहव इति । भिन्नकालत्वादेवेति भाव ॥ तत्र युक्त मिति । शास्त्रेणैकशेषे सत्येकस्याऽनेकार्थाभिधायित्वादन्तरेण वैकशेषारम्भ सद-

उ ]सम्भव ,तत्प्रतिपादने कश्चनेत्यर्थ । 'तत्सामानाधिकरण्याच्चे'ति पाठेऽप्ययमेवार्थ । उपमानोपमेययो सामानाधिकरण्यादित्यर्थ । ननु साम्यवाचकस्याभावात्कथ तत्प्रतीतिरत आह—इवेति । 'परत्र परशब्द प्रयुक्त' इति न्यायादिति भाव । प्रयोज-नाऽभावादिति । प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भाव । यथेति । पलाशरूपाश्रयाऽनेकत्वेऽपि 'राग' इत्येकवचनमेवेति भाव । वस्तुतस्तत्रैकजातीय रागप्रतिपादनार्थैकवचनमिति बोध्यम् । क्रियाश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिक-त्वादपि न सा भावाऽऽख्याते द्विवचनादिनियामिकेत्याह—न चेति।एवमासिका इत्यादि-क्रियाविशेषणमप्रथमान्तं। त्रिक्षधिकारस्थण्वुल स्त्रीत्वस्य सत्वेन'सामान्ये नपुसक'-मित्यस्याऽप्रवृत्त्या न क्लीबत्वम् । उपमानोष्ट्रासनाऽभिन्नान्यासनानीति बोध । बहु-त्वाऽवधारणाच्च नैकवचनमिति बोध्यम् । कर्मणीति । अत्र पक्षे आख्यानाऽवय-वाऽऽसादे परिच्छेदकत्वनिरूपके आगनादौ वृत्ति । परिच्छेदकस्वरूपकर्माश्रय त्वात्कर्मत्वम् , दृष्टान्ते व्याप्त्याश्रयादिव । परिच्छेदकत्वञ्च सादृश्येन । नाऽय भाष्यार्थ इत्याह—एवमपि वति । विवक्षान्तरे—आसे परिच्छेदत्वार्थरूपविवक्षा विशेषे । 'भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तत्रोपपादित स्या'दिति शेष । एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादि द्विवचनाद्येव मासनप्रकारानभिसमीक्ष्याऽऽस्यन्त इत्यादि भावे बहुवचनमिति भाष्यार्थ ।आख्यात-वाच्येऽसत्वं लिङ्गकारकाऽनन्वयित्वमेव बोध्यम् । भिन्नकालत्वादिति । भिन्न क्रमार्थवाचकत्वादित्यर्थ । नन्वेकशेषमात्रेणाऽविद्यमानाऽनेकार्थाऽभिधानशक्ति कथमत आह—अन्तरेण चेति । तिङभिहिते चापीत्यादि भाष्ये । तिङन्तार्थे भावे

१ 'तत्साम्याच्च' ।

हिते चापि तदा भावेऽस्मात्स्यादेकशेषो न भवति—आसि, आस्यते, आसिष्यते इति ॥ अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च । कृदभिहितो भावो द्रव्यवद्भवति॥ किमिदं 'द्रव्यव'दिति?॥द्रव्यं क्रियया समवायं गच्छति ॥ क्व समवायं गच्छति ?॥द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति। तद्वच्चाऽस्य भावस्य कृदभिहितस्य भवति–'पाको वर्त्तते' इति । क्रियावच्च भवति ॥ किमिदं क्रियावदिति ? ॥ क्रिया क्रियया समवायं न गच्छति–पचति पठतीति। तद्वच्चास्य कृदभिहितस्य न भवति–'पाकौ वर्त्तेते' इति ॥ अस्ति खल्वपि विशेषः–कृदभिहितस्य भावस्य, तिङभिहितस्य च ।

प्र ]नानामेकस्यैव स्वभावतोऽनेकार्थत्वादिति भावः । तिङभिहित इति । नह्येकं तिङन्तमनेककालभावप्रत्यायने समर्थं किंचिदस्तीति भिन्नकालमनन्तक्रियाप्रत्यायनाय भिन्ना एव शब्दाः प्रयुज्यन्त इति भावः ॥ द्रव्यवदिति । द्रव्यत्वेन प्रसिद्धो यो घटादिस्तद्वदयं भावो भवति, लिङ्गसंख्यासाधनसम्बन्धप्रतिपत्त्या । तत्र 'वस्तूपलक्षणं यत्' इति द्रव्यलक्षणयोगेऽपि प्रसिद्धाप्रसिद्धापेक्ष उपमानोपमेयभावः ॥

क्रिया क्रिययेति । ननु 'भवति पचति' 'पश्य मृगो धावती'ति कर्तृकर्मभावेन क्रिया क्रियया सम्बध्यत एव । एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विवक्षितम् ॥ ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्तृभावः ? । विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसम्भवाददोषः ॥ तदुक्तं हरिणा—'तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया । सिद्धा तु यस्मिन् साध्या च न तमेव पुनः प्रति ॥ 'मृगो धावति पश्ये'ति साध्यसाधनकल्पना । यथा विषयभेदेन सरणस्यावगम्यते'॥ इति । तत्र कर्तृकर्मत्वमाख्यातवाच्यस्य भावस्य न विरुद्धम् ।

उ ]तथात्वेऽपि कालभेदेन भेदस्य साम्यादेकशेषाऽभावेन न बहुवचनादीत्यर्थः । तदेवोपपादयति–न ह्येकमिति । इतः परं भिन्नद्रव्यसाध्यसाधनादिरूपभेदेन भेदावगमः कृदन्तेऽस्ति,न तिङन्ते इत्येतद् बीजभूतं तयोर्वैषम्यमाह–अस्ति खल्वपीति भाष्ये । ननु लिङ्गसंख्यान्वयित्वमेव द्रव्यत्वमिति वतिरनुपपन्नोऽत आह–तत्रेति । भाष्ये क्रियया समवायमिति । क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणशक्तिभिः सम्बन्धं गच्छतीत्यर्थः । द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमित्यस्य कारकशक्तिमत्त्वमित्यर्थः । करणादिरूपेणेति । कृदन्ते 'पाकेन वैरं कृत'मित्यादौ तथात्वसत्त्वादिति भावः । ननु साध्यत्वादिति । असिद्धस्य जनकत्वाऽसम्भवादिति भावः । सिद्धा त्विति । यन्निरूपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्यर्थः । एवञ्चाऽन्यनिरूपितसिद्धत्वेऽप्यन्यनिरूपितं साध्यत्वं सम्भवत्येवेति भावः । तथा विषयेति । तथा सति

१ 'तथा' । २ इदं क्वचिन्न ।

तिङभिहितेन भावेन कालपुरुषोपग्रहा अभिव्यज्यन्ते, कृदभिहितेन पुनर्न व्यज्यन्ते ॥ अस्ति खल्वपि विशेष –कृदभिहितस्य भावस्य, तिङभिहितस्य च–तिङभिहितो भाव कर्त्रा संप्रयुज्यते, कृदभिहित पुनर्न सम्प्रयुज्यते । यावता किंचिच्च सामान्य कश्चिच्च विशेषो युक्तं यद्द्वयमपि विशेष स्यात्–

प्र ]तथा हि–भवतिक्रियापेक्षमेव तस्य कर्तृत्वम् । सर्वश्चार्थ स्वेन रूपेण भवतीति भवने कर्तृत्वमुपपन्नम् । एव कर्मापि क्रियाफलत्वात् प्रधानमिति कर्मत्वमपि तस्यो पपद्यते । करणादीनि तु सर्वात्मना गुणभावमन्तरेण नोपपद्यन्त इति प्राधान्ये-नाऽत्यन्तविरोधात्तस्य नोपपद्यन्ते ॥ कालेति । पुरुषशब्देन तदर्थ , प्रैत्यक्षपराग्भा वश्चोच्यते । उपग्रह –अनेकप्रकार स्वार्थपरार्थत्वादिक ॥ कृदभिहित इति । ननु कृदभिहितस्यापि भावस्य भवति कर्त्रा योग , यथा 'ब्राह्मणानां प्रादुर्भाव' इति ॥ तत्राहु –एकपदवाच्येन कर्त्रा न युज्यते, यथा पचतीति कर्ता वाच्यो, नैवं पाक इति । शुद्धस्यैव भावस्य प्रत्यायनात् । अथ वा घनादिभि सिद्धरूपता भावस्या-

उ ]विषयभेदेनेत्यर्थ । क्रियाफलत्वादिति । अर्थ आयत्ता तद्द्वरत्वादित्यर्थ । तस्य आख्यानवाच्यभावस्याऽन्वयस्त्वीदृशे विषयेऽन्यतराऽऽकाङ्क्षयैव, 'ज्योतिष्टोमेन यजेते'त्यादौ करणत्वेनाऽन्वयसत्त्वेऽपि स्वघटितपदाऽवाच्यक्रियायां तत्त्वाऽभाव एवेति बोध्यम् । गुणभावमिति । इद चिन्त्य, कर्मण क्रियाफलाश्रयत्वादिव कर्तु क्रियाश्रयत्वादिव च प्राधान्यवत् करणस्यापि स्वव्यापाराऽव्यवधानेन फलोत्पादकत-याऽन्यकारकापेक्षया प्राधान्यमस्त्येव । न हि कर्तृकर्मणो प्राधान्यमेवाश्रयणीयं नेत-रस्येत्यत्र मानमिति । तस्मात्स्वभावत एव तदन्वयाऽभाव इति बोध्यम् । एवं करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव, तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम् । अस्यैवाऽर्थस्य साधकं वैषम्यान्तरं दर्शयति–कालपुरुषे त्यादि । असत्त्वभूताया एवैतत्सम्भव इति भाव । प्रत्यक् उत्तमे, पराक् मध्यमे । प्रत्यक्त्व–स्वगतत्वं, पराक्त्व–श्रोतृगतत्वम् । युष्मदस्मदोरनिरदेशेऽपि मध्यमोत्तमाभ्यां तद्बोध । स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भाव । भाष्ये–कर्त्रा सम्प्र-युज्यत इति । तिङन्तवाच्यो भावो नियमेन कर्त्राकाङ्क्ष , कृदुपात्तस्तु न तथा । न हि 'पाको' 'राग' इत्युक्ते 'कस्ये'ति नियमेन कर्त्राकाङ्क्षा दृश्यते । नाऽपि तस्य नियमेन प्रयोगो दृश्यते । इदमेव ध्वनयितु 'सम्' 'प्रे'त्युपसर्गद्वयोपादानमित्यर्थो मम भाति । यतश्च क्रियात्व सामान्यमुभयत्राऽपि, साध्यत्वसिद्धत्वकृतश्च पूर्वोक्तो विशेषो दृश्यते तथाऽयमपि । यत्तिङर्थस्य भावस्य लिङ्गवाच्यसाधनकृत्संख्याद्ययोग्यता, कृद-र्थस्य तु तद्योग्यतेति भाष्यार्थ । ब्राह्मणानामिति–कर्तरि षष्ठी । एकपदेति ।

१ 'ग्रहा व्यज्यन्ते' । २ 'प्रत्यक्त्वाऽपरभाव' । ३ 'एवञ्च' ।

लिङ्गन सङ्ख्ययान्वेति॥ इद विचार्यते—भावकर्मकर्तार सार्वधातुकार्था वा स्युर्विकरणार्था वेति ? ॥ कथ च सार्वधातुकार्थाः स्यु कथ वा विकरणार्था ?॥ 'भावकर्मवाचिनि सार्वधातुके यग्भवति, कर्तृवाचिनि सार्वधातुके शब्भवती' ति सार्वधातुकार्थाः ।' भावकर्मणोर्यग्भवति सार्वधातुके' 'कर्तरि शब्भवति सार्वधातुक' इति विकरणार्थाः ॥ कश्चात्र विशेष ? ॥*॥ भावकर्मकर्तार सार्वधातुकार्थाश्चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात् ॥*॥भावकर्मकर्तार सार्वधातुकार्थाश्चेदेकद्विबहुषु नियमस्यानुपपत्ति ॥ किं कारणम् ? ॥ 'अतदर्थत्वात्' ॥ नहि तदानीमेकत्वादय एव विभक्त्यर्था ॥ किं तर्हि ? ॥

प्र ]भिधीयत इति तत स्वरेण कर्त्रा योगाऽभाव ।धातुरूपप्रतिपाद्यया तु साध्यतया कर्त्रा योगो भवति॥ अयमेवोपलक्षणभावेन भाव कर्त्रा युज्यत इत्यस्य 'पाचक' इति। तिङ्षु तु पचतीति साध्यमानतया प्राधान्येन । तत्र कृत्सु प्राधान्येन कर्त्रा योगो नास्तीत्य यमत्रार्थ ॥ इद विचार्यत इति । विचरति नाना गच्छति यद्वस्तु तद्विचार्यते नानात्व नीयत इत्यर्थ । दृष्टान्वयव्यतिरेकाश्रया शास्त्रीया पदावयवानामावापो द्धारिस्यर्थवत्ता। तौ चाऽन्वयव्यतिरेकावेकतरस्यापि न व्यवतिष्ठते । सार्वधातुकमन्तरेणाऽपि कर्त्रावगमात् । यथा गच्छ ग्रामम्,अशायि भवता, अकारि कट इति। तथा विकरणाऽभावेऽपि कर्त्रावगतिरस्ति—'लविषीष्ट क्षेत्र'मिति । उभयाभावेऽप्यस्ति—'अनागर्भेता'मिति ॥ क्वचित्तूभयसन्निधौ कर्त्रावगति —पचति पच्यत इति । तत्र निश्चयाऽभावाद्विचार क्रियते—क पक्ष आश्रीयमाण शास्त्र न विरुणद्धीति ?॥

एकद्विबहुष्विति। 'एकत्र एवैकवचन नार्थान्तरे'इति यो नियम स नोपपद्यते, कर्त्रादीनामपि तदर्थत्वादित्यर्थ । अतदर्थत्वादिति । सामर्थ्यादनावधारणमाश्री-

उ ]इय व्याख्या भाष्याऽननुगुणा, 'पाचक' इति कृदन्ते तस्यापि सत्त्वात् । न च तत्र न कृदभिहितो भाव , पचनीयमपि न तिङभिहितो भाव इति तुल्यम् ।

उपलक्षणभावेनेति । विशेषणत्वेनेत्यर्थ ।अत्रापि परे भाष्यस्वरसाश्चिन्त्य एव, पाचकादिशब्दोपक्रमेणैव भाष्यस्य प्रवृत्त ।भाष्ये—सार्वधातुकार्था इत्यत्र सार्वधातुकपद विकृतपरकम् । नानापदोऽर्थिनी वीतमाह—इहेति । शास्त्रीयाऽर्थवत्ता पदाऽवयवानामावापोद्धारिसी अन्वयव्यतिरेकाश्रयत्यन्वय ।आवाप —प्रक्षेप। उद्धार —अपनयनमन्तन्ता । अत एव भाष्यकार शास्त्रमेव पक्षद्वयमाधन्त्वेनोपन्यस्यति । सार्वधातुकमिति । इदम् निरूप्यम् । अत एवाऽग्रे 'गच्छे'त्युदाहरण सङ्गच्छते । एकद्वीति । 'द्व्येकयो'रित्यादिसूत्रेष्वित्यर्थ । ननु 'अतदर्थत्वा'दित्यस्य तदर्थत्वाऽभावादित्यर्थो न युक्त , एकत्वाद्यर्थत्वस्य सत्त्वादित्यत आह—सामर्थ्यादिति ।

१ इद क्वचित्र । २ 'नहीदानीं' । ३ 'पाक' । ४ 'दारिका' ।

भावकर्मकर्तारोऽपि ॥ सन्तु तर्हि विकरणार्थाः ॥७॥ विकरणार्था इति चेत् कृताऽभिहिते विकरणाऽभावः ॥८॥ विकरणार्था इति चेत्कृताऽभिहिते विकरणो न प्राप्नोति—धार्यः पार्य इति ॥ किमुच्यते 'कृताऽभिहित' इति, न लेनाप्यभिधानं भवति ?॥ न शक्यं लेनाऽभिधानमाश्रयितुम् । पक्षान्तरमिदमाश्रितं 'भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वे'ति, यदि च लेनाऽप्यभिधानं स्यान्नेदं पक्षान्तरं स्यात् ॥ कथमशक्यं यदा भवानेवाह—'लः कर्मणि च भावे चाऽकर्मकेभ्य' इति[1]॥ एवं वक्ष्यामि 'लः कर्मणो भावाच्चाऽकर्मकेभ्य' इति ॥ यस्मिंस्तर्हि छे विकरणा न श्रूयन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति ? ॥ क्व च न श्रूयन्ते ? ॥ य एते लुग्विकरणाः श्लुविकर-

प्र ]य एते न तान्येव त्वादीन्यर्थः । अपि तु कर्त्रादयोऽपीत्यर्थः । कृताऽभिहित इति। क्वचिदेव कृति विकरणो विधीयते न सर्वत्रेति कृत एव 'कर्तरि कृ'दिति कर्तार्थो निर्दिश्यते, तेनैव च कर्तुरुक्तत्वात्तदभिधायी विकरणो न प्राप्नोति। ततश्च 'धार्य' इत्यादावसति शपि गुणो न स्यात् । न लेनापीति। 'लः कर्मणि चे'ति वचनाल्लादेशैरपि कर्त्रादेरभिधानमिति तत्रापि विकरणाऽप्राप्तिः किं न चोद्यत इत्यर्थः। ततो 'लः कर्मणी'ति वचनात्कर्त्रादीनां विकरणार्थत्वं नैव सम्भवतीत्युक्तं भवति। एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । लः कर्मणीति । कर्मणि वर्तमानाद्विकरणादिति व्याख्यास्यत इत्यर्थः । तत्र कर्माभिधायी विकरणः 'कर्म'शब्देन भाष्य उक्तः । ननु सार्वधातुकनिमित्तो विकरणो न तु विकरणनिमित्तो लकारः, तत्कथमेवं व्याख्यायते?॥ एवं

उ ]न तान्येवेति। न तानि एवाऽर्थो यस्येति विग्रह इत्यर्थः । तत्पदार्थमाह—त्वादीनीति । तन्मात्रार्थत्वाऽभावादित्यर्थ इति तात्पर्यम् । ननु विकरणानां तदर्थत्वे 'कृताऽभिहित' इत्यनुपपन्नमत आह—क्वचिदेवेति । एवञ्च सर्वत्र विकरणाऽभावात् कृता तेषु शक्तिकल्पनाऽऽवश्यकीति भावः । विकरणार्थत्वपक्षे शङ्कते भाष्ये—किमुच्यते कृतेत्यादिना । इतर आह—न शक्यमिति । तत्र तदुक्तदूषणे 'कृते'त्ययुक्तम्, 'अभिहिते' इत्येव युक्तमित्याह—पक्षान्तरमिति । यदि चेति । यदि लेनाऽभिधानं स्यान्नेदम्पक्षान्तरं स्यादित्यर्थः । कथमिति । पक्षान्तरत्वाऽसम्भवेऽपि लेनाऽभिधानमाश्रयितुं कथमशक्यमित्यर्थः । तदाश्रयणस्य शक्यत्वमुपपादयति—यदा भवानेवेति । तद्व्याचष्टे—ततो ल इति । अत एव लिङादिषु कर्त्राद्यर्थावगतिरिति बोध्यम् । इतरोऽशक्यत्वमुपपादयति—एवं वक्ष्यामीत्यादिना । 'लः कर्मणि' इति न्यासे गौरवं, सूत्रभेदश्च स्यादत आह—व्याख्यास्यामीति ।

उक्तेऽर्थे भाष्यं योजयति—तत्र कर्मेति । कृते लकारे इति। 'वर्तमाने ल'डि-

१ 'अशक्यं' । २ 'भवानाह' ।

पाश्च ॥ अत्राप्युक्ते कर्तृत्वे लो भविष्यति । यस्मिंस्तर्हि ले विकरणा नैवो-त्पद्यन्ते कथं तत्र भावकर्मकर्तॄनभिधास्यति ॥ क्व च नैवोत्पद्यन्ते ? ॥ लिटि । तस्मा[१]न्नैतदुक्तं वक्तुं 'न लेनाप्यभिधानं भवती'ति । भवति चाभिहिते विकरणाभाव इत्येव ॥ एवं तर्हीदं स्यात्,—यदा भावकर्मणोर्लस्तदा कर्तरि विकरणा, यदा कर्तरि लस्तदा भावकर्मणोर्विकरणा ॥ इदमस्य यद्येव स्वाभाविकमथापि वाचनिकं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति न चास्ति सम्भवो यदेकस्याः प्रकृतेर्द्वयोर्नानार्थयोर्युगपद[३]नुसहार्थीभावः स्यात् । एवं च

प्र ]तर्हीदं ते लकारे भावकर्मणोरिति विषयसप्तम्याश्रयणात् कृत विकरणे च कर्मणि चेत्यनेन भावकर्मकर्त्रभिधायिनो विकरणात्परो लः साधुर्भवतीति व्याख्यानादन्नाय ।

अत्राप्युक्त इति। विकरणव्यवधानेऽपि प्रकृतिरेव तत्र कर्त्राद्यभिधायिनीति प्रतिज्ञान भवतीत्यर्थः । यस्मिंस्तर्हीति । ततश्च विकरणानुपादानादस्याऽसाधुत्वप्रसङ्गो, विधानसामर्थ्याद्वा साधुत्वे भावाद्यर्थगतिर्न स्यात्, 'कर्तरि कृ'दिति वचनात्कर्त्रर्थ एव लकारः स्यादित्यर्थः । भवति चेदिति । ततश्च विकरणार्थपक्षोऽनुपपन्न एवेति भावः ।

एवं तर्हीति। प्रकारान्तरेण विकरणार्थपक्षं समर्थयते। यथा 'ग्रामं गच्छती'ति गमिक्रियायाः कर्तृकर्मणी साधने। तत्र कर्तरि लकारः, कर्मणि द्वितीया । तथाऽत्रा-प्येकस्मिन्नर्थे लकारोऽन्यस्मिन्विकरण भविष्यतीति भावः । इदमस्येति । अय-मर्थः—यत्र पदद्वयं तत्र कर्तृकर्मणी[साधने]तत्र विरोधाऽभावात्[illegible] सार्व

उ ]स्वाभि परत्वादिति भावः । यद्यप्यसावपि 'वर्तमाने ल'डित्यादिभिः सिद्धलकारानुवादेन कर्त्राद्यर्थसमन्वयेन साधुत्वविधायकमेवेदम् । लस्य साधुत्वाऽऽदेशद्वारा [illegible]म् । ननु लिटि तदभावाभावोऽसिद्ध्यादत आह—लोपद्वारेणेति । 'कर्मभी'ति पाठः । कर्त्राद्यर्थभिति पाठे 'आदि'शब्दार्थश्चिन्त्यः । द्यादेशस्येति । लस्य क्वापि प्रयोगाऽभावादयमुक्तम् । विधानेति । लिङ्गोर्विधानसामर्थ्यादित्यर्थः । भाष्ये—तस्मादेवमिति । 'ल कर्मणि' इत्यत आदित्यर्थः । 'तस्मान्नैत'दिति पाठान्तरम् । तत्किम् ?। तत्राह—शक्यं नेति । यदुक्तं 'न लेनाप्यभिधानं भवती'ति तदनु शक्यमित्यर्थः । भवति चेदिति । लेनाऽभिधानं भवति चेद्विकरणार्थत्वपक्षेऽभिहित विकरणानामनापत्तौ तदुत्पत्तिवैयर्थ्यं स्यादित्यर्थः । तत्राह—ततश्चेति । भाष्ये—'एवन्तर्हीत्यादिनोक्त विकरणार्थत्व दूषयति—इदमस्येति । इदम्—'प्रकृती'त्यादि । अस्य—आचार्यस्य । स्वाभाविक—लोकव्युत्पत्तिसिद्ध । वाचनिक—व्याकरणान्तरदृ। प्रत्ययार्थं सहेति। प्रतीयमानार्थं सह । ब्रूत —एकोपस्थितिविषयीकुरुत । लोके तथैव व्युत्पत्तेरिति भावः । नानार्थयोः—भिन्नार्थयोः । सहार्थीभाव —सहान्वयम् ।

१ 'नैव' । २ 'लेनाऽस्याभि' । ३ 'पत्सहार्थी' । ४ 'अहृत' । ५ क्वचित् ।

कृन्वैकपक्षीभूतमेवेद भवति–'सार्वधातुकार्था एवे'ति ॥ ननु चोक्त 'भाव-कर्मकर्तार सार्वधातुकार्थो इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वा'दि-ति ?॥ नैष दोष । ॥*॥ सुपा कर्मादयोऽप्यर्था सङ्ख्या चैव तथा तिङाम् ॥*॥ सुपा तिङा च सङ्ख्या चैवार्थ , कर्मादयश्च ॥*॥ प्रसिद्धो नियमस्तत्र ॥*॥ प्रसिद्धस्तत्र नियम । ॥*॥नियम प्रकृतेषु वा ॥*॥ अथ वा प्रकृतानर्थान-पेक्ष्य नियम ॥ के च प्रकृता ?॥ एकत्वादय । 'एकस्मिन्नेवैकवचन, न द्वयोर्न बहुषु' । 'द्वयोरेव द्विवचन, नैकस्मिन्न बहुषु ।'बहुष्वेव बहुवचन, नैकस्मिन्न द्वयो'रिति॥ ॥*॥ भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसङ्ख्यानम्॥*॥ भावकर्मणो

प्र ]भेदो युक्त । एकस्मिंस्तु पदे विरुद्धार्थयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने साहायकाऽभावात्परस्परानुपकारादप्रयोग एव स्यात्।तथा हि–'पचती'ति क्रियाविशि ष्ट कर्ताऽभिधीयते। 'पच्यते' इति क्रियाविशिष्ट कर्म । न त्वेकेन साधनद्वय क्रिया विशिष्ट प्रतिपादयितु शक्यते । एकपक्षीभूतमिति । एक एव पक्ष –सार्वधातुका र्था कर्मादय इत्यर्थ । पूर्वभेदाऽपेक्षश्च च्विप्रत्ययनिर्देश । प्रसिद्धो नियम इति । अर्थनियम इत्यर्थ । कर्माद्यर्थान्तरनिर्देशात्तै प्रत्ययनियम प्रमाणसिद्ध । तत्रै कत्व एकवचनमेवेत्येवमेकत्वादिरर्थो नियम्यते न तु प्रत्यय इति तस्याऽर्थान्तर मपि कर्मादि न विरुध्यते । अथ वेति । कर्माद्यर्थविधानसामर्थ्यात्तुल्य जातीयसङ्ख्या पेक्ष एव नियम इत्यर्थ । कर्मकर्तरीति । 'कर्मव'दित्यनिर्देशेन स्वाश्रयस्य कार्यस्या-

उ ] अथम्भाव —'पच'तीत्यादौ'प्रत्ययार्थ प्रधान'मित्युत्सर्गरीत्या द्वयोरपि प्रत्य यार्थयो प्राधान्ये एकत्र विशेषणतयाऽन्वितप्रकृतेरपरत्र विशेषणतया सबन्धो व्युत्प त्तिविरुद्ध ,तदर्थाऽनालिङ्गितप्रत्ययार्थभानमप्युक्त व्युत्पत्तिविरुद्धमित्ययपक्षोऽसङ्गत इति भाव । विशिष्टार्थप्रतिपादने साहाय्यकाऽभावादिति । 'प्रकृते'रिति शेष । पर-स्परेति।प्रकृतिप्रत्यययोरित्यर्थ ।पचतीति।आख्याते कारकविशिष्टक्रियाप्राधान्यादिद-चिन्त्यम्।भाष्यन्तु 'पचन्''पच्यमान' इत्याद्यभिप्रायकतया नेयम् । कैयटे 'पचती'-त्याद्यपि 'पच'तीत्यादेरुपलक्षण वा । 'सहायीभाव' इत्यत्र च्विस्तूभयत्र तस्या सहायत्व दुपपन्न । केचित्तु–'क्रियाविशिष्ट'इत्यस्य क्रियासहित इत्यर्थ ।कर्तृविशेष णिका कर्मविशेषणिका चेति यावत् । एकेन चोभयविशेषणिका क्रिया न प्रतिपाद-यितु शक्येति भाष्यार्थमाहु । तच्चिन्त्यम् । न त्वेकेनेति । धातुनेत्यर्थ । अत्र केचित्–सुपामिव तिङामपि कर्मादिद्योतकत्वमेव, भाष्यमत्राऽपि सुयोजमेवेत्याहु । निरूपितश्चैतद्विस्तरेण मञ्जूषायामाख्यातवादे । भाष्ये–प्रसिद्धो नियमस्तत्रेति । तत्र–अर्थविषये । यत सुपा तिङाचाऽर्थद्वय दृश्यतेऽत प्रत्ययनियमाऽसम्भवा-

१ 'यार्थेदेक' । २ श्लोकवार्त्तिकम् । ३ 'शक्तु न' । ४ 'तथा' । ५ 'सह्या' ।

यग्विधाने कर्मकर्तर्युपसङ्ख्यानं कर्तव्यम्। पच्यते ओदनः स्वयमेव। पठ्यते विद्या स्वयमेव॥ किं पुनः कारणं न सिध्यति? ॥*॥ विप्रतिषेधाद्धि शपो बलीयस्त्वम् ॥*॥ विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति। शपोऽवकाशः—पचति पठति। यकोऽवकाशः—पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति। इहोभयं प्राप्नोति—पच्यते ओदनः स्वयमेव, पठ्यते विद्या स्वयमेवेति। परत्वाच्छप्प्राप्नोति॥*॥ योगविभागात्सिद्धम्॥*॥ योगविभागः करिष्यते—'चिण्भावकर्मणोः'। [ततः] 'सार्वधातुके यक्'। सार्वधातुके यग्भवति भावकर्मणोः। ततः 'कर्तरि'। कर्तरि च यग्भवति भावकर्मणोः॥ यद्येवं तर्हि कर्मणि कर्तरि यग्भवत्येवं भावे कर्तरि प्राप्नोति। 'एति जीवन्तमानन्दो नरं वर्षशतादपि'। 'नास्य किं चिद्भवति रोगं' इति॥ द्वितीयो योगविभागः करिष्यते। 'चिण्भावे'। ततः 'कर्मणि'। कर्मणि च चिण्भवतीति। ततः—'सार्वधातुके यक्'। सार्वधातुके यग्भवति भावे च कर्मणि च॥ ततः 'कर्तरि'। कर्तरि च यग्भवति। 'कर्मणी'त्यनुवर्तते, 'भाव' इति निवृत्तम्। ततः—'शप्'। शप् च भवति। 'कर्तरी'त्येव। 'कर्मणी'त्यपि निवृत्तम्। एवमप्युपसङ्ख्यानं कर्तव्यम्। [॥*॥ विप्रतिषेधाद्धि श्यनो बलीयस्त्वम् ॥*]॥ विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति। श्यनोऽवकाशः—दीव्यति सीव्यतीति। यकोऽवकाशः—पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति। इहोभयं प्राप्नोति—दीव्यते स्वयमेव, सीव्यते स्वयमेवेति। परत्वाच्छ्यन्प्राप्नोति॥ ननु चैतदपि योगविभागेनैव सिद्धम्॥ न सिध्यति। अनन्तरा या प्राप्तिः सा योगविभागेन शक्या

---

प्र]ऽवचनात्कर्माश्रयविकरणप्राप्तौ वचनम्। विप्रतिषेधाद्धीति। यत्र शास्त्रातिदेश-पक्षस्तदा शपो बलीयस्त्वम्। कार्यातिदेशे तु यक एव बलीयस्त्वम्। ननु चेति।

---

उ]दिति भावः। नियम इत्यर्थ इति। प्रत्ययनियम इत्यर्थः। ननु कर्मवद्भावादेव यक् सिद्धोऽत आह—कर्मवदिति। स्वाश्रयस्य कार्यस्येति। परत्वेन बाधन इत्यर्थः। अतिदेशस्याभावेऽप्यनेन चरितार्थ इति भावः। बलीयस्त्वमिति। 'कर्मवदिति सूत्रस्य परत्वा'दिति शेषः। वस्तुतः कार्यातिदेशेऽप्यतिदिश्यमान कार्याणामुपस्थितिदेश एव देश इति प्रत्ययलक्षणसूत्रोक्तरीत्या भाष्यं समञ्जसमेव। भाष्ये एवमप्युपसङ्ख्यानं कर्तव्यमिति। कर्मकर्तर्युपसङ्ख्यानमित्यर्थः। [भाष्ये]—

---

१ इदं क्वचिन्न। २ इति क्वचिन्न। ३ 'योगविभागात्सिद्धमेतत्' इत्येवमस्य व्याख्या तुल्यता स्यात्। ४ 'ततः सार्वधातुके यक्' इति क्वचिन्न। ५ 'भावेऽपि'। ६ 'यक्प्राप्नोति'। ७ इदं क्वचिन्न। ८ 'कर्मणीति'। ९ इदं वार्तिकं लुप्तप्रायं। १० इति क्वचिन्न। ११ 'यदेवं'। १२ 'शक्यते निवारयितुं'।

बाधितुम् ॥ कुत एतत् ? ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति ॥ परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति ॥ ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत ॥ नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥ एवं तर्हि श्यादेशाः श्यनादयः करिष्यन्ते, शप् च यस्य बाध्यते।तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यनादयः ? ॥ तत्तर्हि शपो ग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् ॥ प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ?॥ 'कर्तरि शप्'इति ॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥ 'दिवादिभ्य' इत्येषा पञ्चमी 'शप्'इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति–'तस्मादित्युत्तरस्ये'ति॥ प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥ नायं प्रत्ययविधिः, विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ॥

अथ वा–॥*॥ भावकर्मणोरित्यनर्थकं यत्रैव सिद्धं सत्यनुवृत्तिर्यको भावाय॥*॥ इह सार्वधातुके यगित्यन्तरेण भावकर्मणोरित्यनुवृत्तिं सिद्धम्। सोऽयमेवं सिद्धे सति यद्भावकर्मणोरित्यनुवर्तयति तस्यैतत्प्रयोजनं 'कर्मकर्तर्यपि यग्यथा स्या'दिति ॥ ॥ कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधावचनाय ॥*॥ कर्तरीति च योगविभागः कर्तव्यः,–श्यनः पूर्वविप्रतिषेधं मा वोचमिति ॥

अथ वा कर्मवद्भाववचनसामर्थ्याद्यग्भविष्यति॥ अस्त्यन्यत्कर्मवद्भाववचने

---

प्र.]परा प्राप्तिर्योगविभागेन बाधिष्यत इति भावः। परा प्राप्तिरिति। परत्वाद्बलीयस्त्वादित्यर्थः। ननु चेयमिति। योगविभागप्राप्तिः पूर्वविप्रतिषेधेन बाधिका भविष्यतीत्यर्थः। नोत्सहत इति। न्याय्यविप्रतिषेधाश्रयणस्य युक्तत्वाद्दुर्बलो योगविभागप्राप्तिः इत्यर्थः। इहेति। 'सार्वधातुके यग्भकर्ता'ति सामान्योक्तावपि कर्तरि शबादापवादविधानाद्भावकर्मणोरेव यग्भविष्यतीति भावकर्मानुवृत्तिरधिको यत्न इति कर्मकर्तर्यपि यग्भविष्यतीत्यर्थः। अत्रापि व्याख्याने योगविभागः कर्तव्य एवेत्याह–कर्तरीति चेति। अन्यथा भावकर्मानुवृत्तिपक्षाच्छ्य एवानन्तरस्य बाधः स्यान्न तु श्य-

उ.]परत्वाच्छ्य इति। श्यन्यको स्वरे विशेषः। परा प्राप्तिरिति। बाध्यसामान्यचिन्तयेति भावः। भाष्ये–अप्रतिषिद्धेति। अबाधितेत्यर्थः। नोत्सहते प्रतिषिद्धेति। 'अनन्तरस्ये'ति न्यायेन तद्विषयाधीना कृता सती ता बाधितुं नोत्सहत इत्यर्थः। तद्युक्तत्वाद्यत्नि–न्याय्येति। परविप्रतिषेधेत्यर्थः। पूर्वविप्रतिषेधवचने न मानमिति भावः। ननु कर्तर्यपि यक्प्राप्तेः कथं सिद्धमत आह–सार्वधात्विति। भाष्ये–कर्मकर्तर्यपीति। 'पच्यते स्वयमेवे'त्यादौ शबादीन् बाधित्वेति भावः। भाष्ये पूर्वविप्रतिषेधं मा वोचमिति। अनेन पूर्वविप्रतिषेधोऽपूर्ववचनसाध्य इति

---

१ 'श्यन्प्राप्नोति'। २ 'श्यनादयः'। ३ 'अथ'। ४ 'त्यनुवृत्तेरेव'। 'त्यनुवृत्तिं विना'। ५ 'भावकर्मग्रहणमनु'। ६ 'य'गिति क्वचित्। ७ इति क्वचिन्न। ८ 'षेधवचनाया'।

प्रयोजनम् ॥ किम् ?॥ आत्मनेपदं यथा स्यात् ॥ वचनादात्मनेपदं भविष्यति॥ चिण् तर्हि यथा स्यात् ॥ चिणपि वचनाद्भविष्यति ॥ चिण्वद्भावस्तर्हि यथा स्यात्?॥ नैकं प्रयोजनं योगारम्भं प्रयोजयति । तत्र कर्मवद्भाववचनसामर्थ्याद्यग्भविष्यति॥ अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवति कर्मकर्तरि यँगिति,यदयं 'न दुहस्नुनमां यक्चिणा'विति यक्चिणोः प्रतिषेधं शास्ति॥ [सार्वधातुके यक्]।

यसोऽनुपसर्गात् ॥ ३।१।७१ ॥

अनुपसर्गादिति किमर्थम् ?॥ आयस्यति प्रयस्यति ॥ ॥ अनुपसर्गादिति शक्यमकर्तुम् ॥१॥ कथमायस्यति प्रयस्यती[ति] ?॥ 'संयसश्चे'त्येतन्नियमार्थं भविष्यति—'सम्पूर्वादेव यसो नान्यपूर्वा'दिति ॥ [ संयसश्च ] ॥

रुधादिभ्यः श्नम् ॥३।१।७८ ॥

किमर्थं शकारः ?॥॥*॥[शकारः]सार्वधातुकार्थः ॥१॥ शित्सार्वधातुकमिति सार्वधातुकसञ्ज्ञा,'सार्वधातुकमपि'दिति ङित्त्वं, 'ङिती'ति गुणप्रतिषेधो यथा स्यात्—भिनत्ति छिनत्तीति॥ नैतदस्ति प्रयोजनं, सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते। यस्माच्च प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गसञ्ज्ञं भवति । यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यत्र प्रत्यये परतो न तस्मात्प्रत्ययविधिः ॥

इदं तर्हि प्रयोजनम्—'आर्द्धधातुकसञ्ज्ञा मा भू'दिति ॥ किं च स्यात्?॥ वलादिलक्षण इडागमः प्रसज्येत ॥ एतदपि नास्ति प्रयोजनं, वलादेरार्द्धधातुक

---

प्र ]त्यादीनाम्। योगविभागेन तु नाऽपि वा स्यात्। वचनादिति। 'कर्तरि कर्मव्यतिहारे' इत्यत्र 'कर्तरी'ति योगविभागात्।तत्र च कर्मग्रहणानुवर्तनादन्तरेणापि नियमात्मनेपदं भविष्यतीत्यर्थः । चिणपीति । चिण्ग्रहणेऽनुवर्तमाने पुनश्चिण्ग्रहणमधिकविधानार्थमिति कर्मकर्तर्यपि चिण्भविष्यतीत्यर्थः । नैकमिति । अन्यथा 'स्यसिच्सीयुट्' इत्यत्रैव 'कर्मणा तुल्यक्रिये कर्तरी'ति वाच्यं स्यादित्यर्थः । [सार्वधातुके ]

रुधादि । भिनत्तीति । भिदादेरन्त्यस्य सार्वधातुकनिबन्धनो गुणो मा भूदिति ङित्त्वकल्पनमिति भावः । यस्माच्चेति । भिदुशब्दादित्यर्थः । तस्यैव रुधादित्वात्, न तु तद-

---

द ]सूचयति । भाष्य—कर्मवद्भाववचनसामर्थ्यादिति । तत्सामर्थ्यादनन्तरस्येति न्यायो नाऽऽश्रीयते । किन्तु वाक्यसामान्यचिन्तेति भावः । [सार्वधातुके यक् ]।

यसोऽनु । इदं विकल्पेन श्यन्विधायकम् ।'संपूर्वाद्वा यसः' इति सोपसर्गविषयो नियम इति भावः । एतत एव नियम कल्पनं स्यादित्याशयान्नम् । तदाह—नाऽन्यपूर्वा'दिति । [ यसोऽनुपसर्गात् ] ॥

---

१ 'कर्मकर्तरि यगभवन्तीति'। २ इदं भाष्यमेव न वार्त्तिकमित्यन्ये। ३ इदं लुप्तं ग्रन्थे। ४ 'प्रत्यये परतोऽङ्ग'। ५ 'स्माच्च प्रत्यय'।

स्याऽङ्गस्येडुच्यते। यस्माच्च प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गसंज्ञ भवति। यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो, न तस्मात्प्रत्ययविधि ॥

अत उत्तर पठति-॥*॥ श्नमि शित्करण प्वादिह्रस्वार्थम् ॥*॥ श्नमि शित्करण क्रियते। [ किं प्रयोजन ?॥ 'प्वादिह्रस्वार्थम्' ]। प्वादीना शिति ह्रस्वत्व यथा स्यात्-पृणति मृणतीति। ॥*॥ न वा धात्वन्यत्वात् ॥*॥ न वा कर्तव्यम् ॥ किं कारणम् ?॥ 'धात्वन्यत्वात्'। धात्वन्तर पृणिमृणी ॥ यत्तर्हि न धात्वन्तर-यत्र भूम्या वृणसे॥नैष श्नम्। श एतद्ध्रस्वत्वम्॥यदि श्नो ह्रस्वत्व स्वरो न सिध्यति-वृणसे। 'अदुपदेशाल्लसार्वधातुकमनुदात्त भवती'त्येष स्वरो न प्राप्नोति। तस्माच्छ्नमेष ॥ यदि श्नम्, 'श्नसोरल्लोप' इति लोप प्राप्नोति। 'उपधाया' इति वर्ततेऽनुपधात्वान्न भविष्यति ॥

न स शक्य उपधाया इति विज्ञातुम्। इह हि दोष स्यात्-भङ्क्त भञ्जन्तीति। तस्माच्छ एवै[11] ह्रस्वत्वम् ॥ [यद्येव] स्वर कथम् ? ॥ ॥*॥ बहुल पित्सार्वधातुक छन्दसि[12] ॥*॥सार्वधातुकस्य बहुल छन्दसि[12] पित्त्व वक्तव्यम्। पित श्चाऽपित्त्व दृश्यते,-अपितश्च पित्त्वम्। पितस्तावदपित्व,-मातर प्रमिणीमि[14]जनित्रीम्। अपित[15] पित्त्व-शृणोत ग्रावाण ॥तत्तर्हि [श्नो[3]]ह्रस्वत्व वक्तव्यम् ?॥ अवश्य छन्दसि ह्रस्वत्व वक्तव्यम्-'उपगायन्तु मा पत्नयो गर्भिणयो युवतय' इत्येवमर्थम् ॥ विशेषणार्थस्तर्हि ॥ क विशेषणार्थेनार्थ ? ॥

प्र ]त्ययवाद्विशब्दा प्रत्ययविधानम्। पृणतीति। पृ मृ इति क्र्यादिषु पठितौ, ताभ्या व्यत्ययन श्नम्प्रत्यय। धात्वन्तरमिति। तौदादिकावित्यर्थ। वृणस इति। 'वृ वरणे' इति क्र्यादिस्तस्माद्व्यत्ययन श्नम्यासौ। श इति। छान्दसमिति भाव। भङ्क्त इति। 'श्नसोरल्लोप' इत्यस्याऽसिद्धवदत्राभादादित्यसिद्धत्वादकारस्योपधात्वाऽभाव। प्रमिणामीति। मीनो 'मीनातेर्निगम' इति ह्रस्व। मिपोऽपित्त्वादित्त्वे

उ ] रुधादिभ्य श्नम्। भाष्ये-आर्द्धधातुकस्याङ्गस्येति। अङ्गसंज्ञानिमित्तस्यार्द्धधातुकस्येत्यर्थ। पृमृवो क्र्यादित्वात्तयो श्नम् दुर्लभोऽत आह—व्यत्ययेनेति। 'इति क्र्यादि रिति,'क्रैयादिक' इति वा पाठ। ननु भाषाग्रेरे उपधात्व सुम्भमन अह-असिद्धत्वादिति। भाष्ये-पित्त्व वक्तव्यमिति। एवञ्च तनाऽनुदात्तत्व सिद्धनि

१ प्रत्यये परतोऽङ्ग'। २ इद क्वचित्। ३ इद प्राचिकम्'। ४ 'वक्तव्य। ५ 'धात्वन्तरे'। ६'भूम्या'। ७ 'एवैनद्ध्र'। ८ 'लोप प्रसज्यत'। ९ 'न शक्य सुग'। १० इति क्वचित्। ११'एवैतद्ध्रस्व'। १२'छन्दसि बहुल'। १३ श्चैवाऽपित्व। १४ 'जनयित्रीं'। १४ 'अपितश्च पित्त्व'। १६ 'विशेषणार्थं'।

'भ्राच्लोप' इति॥ 'नाल्लोप' इ[तीय]त्युच्यमाने यज्ञाना यज्ञानामित्यत्रापि प्रसज्येत ॥ दीर्घत्वे कृते न भविष्यति ॥ इदमिह सम्प्रधार्यं दीर्घत्वं क्रियतां नलोप इति, किमत्र कर्तव्यम्?॥ परत्वान्नलोपः स्यात्। तस्माद्दाकारः कर्तव्यः।

अथ क्रियमाणे दाकारे इह कस्मान्न भवति विश्नानां प्रश्नानामिति ?॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ [ष्यादिभ्यः श्नम् ]॥

## तनादिकृञ्भ्य उः ॥ ३।१।७९ ॥

अथ किमर्थं करोतेः पृथग्ग्रहणं क्रियते न 'तनादिभ्य' इत्येवोच्येत ?॥ अन्यानि तनोत्यादिकार्याणि मा भूवन्निति ॥ कानि?॥अनुनासिकलोपादीनि ॥ दैतरत्र किमुक्तं ॥ अनुनासिकाऽभावादेवानुनासिकलोपो न भविष्यति ॥ इह तर्हि—तनादिकार्यं मा भूत्तनादिभ्यस्तथासोरिति ॥ ननु च भवत्येवाऽत्र 'ह्रस्वादङ्गा'दिति ॥ तेनैव यथा स्यादनेन मा भूदिति ॥ कश्चाऽत्र विशेषस्तेन वा स्यादनेन वा?॥तेन सति सिज्लोपस्याऽसिद्धत्वाच्चिण्वद्भाव सिद्धो भवति। अनेन पुनः सति चिण्वद्भावो न स्यात् ॥ अनेनाऽपि सति चिण्वद्भावः सिद्धः । कथम् ?॥ विभाषा लुक् । यदा न लुक्तदा तेन लोपः । तत्र सि

प्र ]मनोरमा । परत्वादिति। यत्तु मुपि च ति दीर्घत्व तत् साक्षान्नलक्षणपरिभाषा वशान्न प्रवर्तते । यत्त्वन्यत्रोक्त 'नामि दीर्घापरत्वात् सुपि चेति भविनव्य'मिति तत्सन्निपातपरिभाषाया अनित्यत्वाश्रयेणेति न विरोधः । लक्षणेति । लाक्षणिकस्या ऽनुमीयमानस्यत्वात्प्रतिपदोक्तस्य तु प्रत्यक्षत्वादिति भावः । [ ष्यादिभ्यः श्नम् ]॥

तनादि । विभाषा लुगिति। ननु यत्र नाप्राप्तिन्यायेन लुका 'ह्रस्वादङ्गा'दिति

उ ]द्द्य। अनित्यत्वाश्रयणेनेति । ननु तत्सूत्रविषय तत्परिभाषाया 'कष्टाय'त्या दिनिर्देशेनानित्यत्वादयस्त्वनाऽऽम्विषयेऽपि तत्त्वमाश्रित्य न प्रत्याख्येयइति चेन्न, नलोपविधायकस्याऽवयवश्रुत्न परस्य नस्य लोप इत्यर्थे निमित्तस्याऽन्तरङ्गत्वेन, 'सुपि चे'त्यस्य परनिमित्तत्वया बहिरङ्गत्वेन तस्याऽसिद्धतया नलोपप्राप्तेरित्याश यात् । भाष्ये-परत्वादिति । अन्तरङ्गत्वस्याऽप्युपलक्षणम् । किञ्च 'सुपि चे'त्यतो 'नामी'ति नित्य विलोपाऽभावेऽपि शास्त्रप्राप्ते सत्त्वात् । धनिनश्चेद मायादन' इति सूत्र 'इत्वा सं'त्यत्र च भाष्य इति वदन्ति ॥ [ ष्यादिभ्यः श्नम् ] ॥

तनादिकृञ्भ्य । भाष्ये-अनेन माभूदिति । अन्यथा तस्याऽसिद्धत्वादनेनैव स्यादिति भावः । ननु येन नेति । न च 'ह्रस्वादङ्गा'दित्यस्याऽसिद्धत्वात्कथं तेन

१ नाल्लोप'। २ 'सागऽपि'। ३ 'अर्थे'ति क्वचिन्न । ४ 'करोतेः पृथग्ग्रहणं तनादिकार्यार्थमर्थ'मिति वार्त्तिकं पुस्तकान्तरे भवति। ५ 'क पुनरत्र'। ६ 'सिद्धार्थिण्वद्भाव'। ७ 'तदा सिज्लोप'।

ल्लोपस्याऽसिद्धत्वाच्छिण्वद्भावे सिद्धो भवति ॥

॥*॥ तनादिभ्यस्कृञ सिद्ध सिज्लोपे च न दुष्यति ॥
चिण्वद्भावेऽर्थं दोष स्याल्लोपोऽपि प्रोक्तो विभाषया ॥८॥

धिन्विकृण्व्योर च ॥ ३।१।८० ॥

कायमकार श्रूयते ?॥ न ह श्रूयते, लोपोऽस्य भवत्यतो लोप आर्द्धधातुक इति ॥ यदि न ह श्रूयते किमर्थमन्वमुच्यते न लोप एवो च्येत ॥ नैव शक्य, लोपे हि सति गुण प्रसज्येत । अत्वे पुन. सति अकार-लोपस्य स्थानिवद्भावाद्गुणो न भवति ॥ ननु च लोपेऽपि सति 'न धातु-लोप आर्द्धधातुके' इति प्रतिषेधो भविष्यति ॥ आर्द्धधातुकनिमित्ते लोपे स प्रतिषेधो, न चैष आर्द्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते स योग । तस्मिन्प्रत्याख्यायते गुण स्यादेव । तस्मादत्व वक्तव्यम् ॥

अथ किमर्थं नुमनुषक्तयो[र्धिन्विकृण्व्यो]र्ग्रहणं क्रियते न 'धिविकृव्यो'रित्ये-वोच्येत ?॥ 'धिविकृव्यो'रित्युच्यमानेऽत्वे कृतेऽनिष्टे देशे नुम् प्रसज्येत॥ इद-मिह सम्प्रधार्यमत्वं क्रियतां नुमिति, किमत्र कर्तव्यम् ?॥ परत्वान्नुमागम.॥ अन्तरङ्गमत्वम् ॥ काऽन्तरङ्गता ?॥ प्रत्ययोत्पत्तिसंनियोगेनाऽत्वमुच्यते ।

प्र ]लोपो बाध्यत इति कथ लुगभावपक्षे लोप स्यात् । नैष दोष । यत्र पक्षे लुक् प्रवर्तते तत्राऽसौ लोपस्य बाधको न त्वप्रवर्तमान । [ तनादिकृञ्भ्य उः ]।

धिन्वि । आर्द्धधातुकनिमित्त इति । 'धातुलोपे' इति बहुव्रीह्याश्रयणादिति भाव । न चैष इति । सन्नियोगशिष्टत्वान्निमित्तनिमित्तिभावाऽप्रसङ्ग । अन्ये तु त-

उ.]येननाप्राप्तिन्याय',तनादिपाठस्तु विकरणार्थ स्यात् विकल्पोऽपि तनादौ चरितार्थ इति वाच्यम्, असिद्धत्वेऽपि यदीद न स्यात्तदा स्यादेव 'ह्रस्वादङ्गादिलस्य प्राप्ति'-रित्याशयात् । यद्वुत्सर्गप्रवृत्तौ विकल्पवैयर्थ्यं स उत्सर्गोऽपवादाऽभावपक्षेऽपि न प्रवर्तत एवेत्युत्तराशय । भाष्ये–सोऽपि प्रोक्त इति । लुक्, चिण्वद्भावश्चेत्यर्थ । एवञ्च सूत्रे कृञ्ग्रहणम्प्रत्याख्यातम् । एतेन कृञ्ग्रहण गणकार्योऽनित्यत्वज्ञापनार्थम्, तेन 'न विश्वसे दित्यादिसिद्धिरित्यपास्तम् । 'न विश्वसे'दित्याद्यसाध्वेन ॥

धिन्विकृण्व्यो।भाष्ये–ननु च लोपे सति न धात्वित। ननुभचनिपरे एतगत-मित्याद्यन्तस्याऽपरसनभिन्यासुतार्थोऽर्थानन्त्यप्रसङ्गेनेत्युभवयमिदन्तरा 'द्विर्वचनेऽची'ति च तद्भावभाविनामात्रेणाऽऽर्द्धधातुकनिमित्तो लोप । तद्भावभाविना च समकाले-

१ 'वो वा भविष्यति' । २ 'भावे न दो' । ३ 'भविष्यतो' । ४ 'मय-मुच्य' । ५ 'इत्येवो'। ६ 'भविष्यति' । ७ 'तावपि स योग ' । ८ 'पक्षयोर्ग्रहण' । ९ इदं क्वचित्र । १० 'रितीयतु' । ११ 'नुमेवमनामत्वमिति' । १२ 'भावाऽभाव.'।

शा स्थानिवद्भावान्ङित स्यु । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नेमे ङितो भवन्ति ॥*॥ तस्य दोषो मिप आदेशे पिद्भाव ॥*॥ तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभाव। अचिनवम् असुनवम्, अकरवम् । पितोऽयमादेशः स्थानिवद्भावात्पिद्भवति, सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाय पित्स्यात्॥अन्यत्पमिदमुच्यते 'मिप आदेश' इति। ॥*॥तितसिम्मिपामादेशा इति वक्तव्यम्'॥*॥। घेद वेत्थ॥*॥ विदेर्वसो शित्वम् ॥*॥ विदेरुत्तरस्य वसो शित्व वक्तव्यम् । शितोऽयमादेश. स्थानिवद्भावाच्छिद्भवति । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाऽस्य शित्स्यात् ॥

॥*॥ङित्करणाद्वा॥*॥[ङित्करणाद्वा सिद्धम्]॥ अथ वाऽवश्यमत्र सामान्यग्रहणाऽविघातार्थं ङकारोऽनुबन्धः कर्तव्य ॥ क सामान्यग्रहणाविघातार्थेनाऽर्थ ?॥'वसो. सम्प्रसारण'मिति । तेनैव यत्नेन गुणो न भविष्यति॥ अस्य ज्ञापकस्य सन्ति दोषा सन्ति च प्रयोजनानि । समा दोषा भूयासो वा । तस्मात्तार्थोऽनेन ज्ञापकेन॥कथ यानि प्रयोजनानि?॥क्रियेन्ते न्यास एव॥एवमपि भवेत्पित्करणसामर्थ्यात्पित्कृत स्यान्ङित्करणसामर्थ्यान्ङित्कृतम् , यत्तु खलु पिति ङित्कृत प्राप्नोति ङिति च पित्कृतं केन तत्र स्यात् ? ॥ तस्माद्वक्तव्यं– 'पिच्च ङिद्भवतो'ति,'ङिच्च न पिद्भवती'ति ॥ न वक्तव्यम् ।एवं वक्ष्यामि ['सा-

प्र.]तिङा टितामादेशा विधीयन्ते ते तवादय ।एवमपीति। पित्वनिमित्तमनुदात्तत्वं, भवतु सूत्राद्रवानीनीडागमश्च। ङित्वनिमित्तश्च गुणवृद्धिप्रतिषेध इत्यर्थ । पिच्चेति । अपिदिति प्रसज्यप्रतिषेध आश्रीयते । पिद्भवन् ङिन्न भवतीत्यर्थ । योगविभागाद्या च यावती सार्वधातुकस्य ङित्वप्राप्तिस्सर्वाऽसौ निषिध्यते।अप्रयोगादिति ।अत्र ङिदपिदिति वर्तते।नेन ङिद्भवन् पिन्न भवतीति तानङ स्थानिवद्भावप्राप्त पित्वं निषिध्यते।

उ ]पित्व नेति । अपिद्ग्रहण न कार्यमित्यर्थ । शङ्कते–पितोऽयमिति। उत्तरयति–सार्वधातुकादेश इति। तबादिषु च ङित्व न प्रतिषेध्यमिति भाष्ये। ङित्वप्रतिषेधाय पित्व न कार्यमिति भाव । तबादिष्विति निर्धारणे सप्तमी । न च स्थानिवत्वप्रयुक्तङित्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात् 'सार्वधातुकमपि'दिति ङित्वप्रतिषेधाय पित्त्वमावश्यकमिति वाच्यम्, एतदाशयेनैव 'क्रियन्ते न्यास एवे'ति वक्ष्यत इत्यदोषात् । हेरपित्वमनुदात्तत्वे स्थाने आन्तरतम्यात्प्राप्तस्यानुदात्तहेर्वारणार्थमावश्यकमिति तानङोऽपि ङित्त्वमन्त्यादेशार्थमावश्यकमिति च तद्भाव। [भाष्ये–]अवश्यमत्रेति । उदार इत्सञ्ज्ञकत्वेऽपि

१ 'भविष्यन्ति'।२ इद क्वचिन्न ।'सिद्ध'मिति वार्त्तिकेऽपि पठन्ति। ३'तानि क्रियन्ते'। ४'पिन्न भवतीति'। इति क्वचिन्न । इदं वार्त्तिकं वा । ५ अयं पाठे युक्त स्यात् ।

र्वधातुकमपित्']। सार्वधातुकं ङिद्भवति पिच्च ॥ एवं तावदपितो ङित्त्वं प्रति षिद्धम्। तत्र –[ 'असंयोगाल्लिट् कित्' ] । असंयोगाल्लिट् किद्भवति, ङिच्च पिन्न भवति। एवं ङित्त्वं पित्त्वं प्रतिषिद्धम् ॥ [ हल श्नः शानज्झौ ]।

छन्दसि शायजपि ॥ ३।१।८४ ॥

॥*॥ शायच् छन्दसि सर्वत्र ॥*॥ शायच् छन्दसि सर्वत्रेति वक्तव्यम्॥ क्व सर्वत्र ?॥ हौ चाऽहौ च ॥ किं प्रयोजनम् ?॥*॥ [प्रयोजनं] मही अस्कभायद्यो अस्कभायदुद्गृभायत उन्मथायतेत्येवम् ॥ ८४ ॥ [ छन्दसि शायजपि ]।

व्यत्ययो बहुलम् ॥ ३।१।८५ ॥

॥*॥ योगविभागः कर्तव्यः ॥*॥ ['व्यत्ययः']। व्यत्ययो भवति स्यादीनामिति। आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते। स च न मरति। म्रियत इति प्राप्ते। ततो 'बहुलम्'। बहुलं छन्दसि विषये सर्वे विधयो भवन्तीति। सुपां व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिङ्गव्यत्ययः, कालव्यत्ययः, पुरुषव्यत्ययः, आत्मनेपदव्यत्ययः परस्मैपदव्यत्यय इति। सुपां व्यत्ययः – युक्ता माताऽऽसीद्धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते ॥ तिङां व्यत्ययः –चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते ॥ वर्णव्यत्ययः –त्रिष्टुभौजः शुभितमुग्रवीरम्। सुहितमिति प्राप्ते। लिङ्गव्यत्ययः –मधोर्गृह्णाति। मधोस्तृप्ता

प्र ] छन्दसि। अस्कभायदिति।स्कम्भु सौत्रो धातुः।तस्मिँल्लिटि श्नः शायच् अडागमः।

उ ]सामान्यग्रहणाद्वा तदनुबन्धकपरिभाषाप्रवृत्त्या वति सन्देहः स्यादिति।तस्मा च्चार्योऽनेनेति। न च वक्ष्यमाणेति दायादित्येवमादौ तत्र पित्त्वादिति वाच्य मन्याभिधाने तत्राऽऽचादिपाठस्य सिद्धे। एतेन इदं पित्त्वं क्वचित्स्थानिवत्त्वेनाऽनुन्न स्यकार्याऽभावस्य ज्ञापकमित्यपास्तम्। भाष्ये-एवमपीत्यस्य तत्र तत्र स्या'दित्यनेनान्वयः। पिति ङित्त्वमिति। 'अव'दिन्नादौ लसार्वधातुके पित्वादनुदात्तत्वमस्तु स्थानिवद्भावेन पित्त्वाद्गुणनिषेधश्च प्राप्नोतीत्यर्थः। आदेशानिर्दिष्टे विशिष्टस्याऽननु बादस्थिरत्वादनिर्देशेऽनन्विधावित्ति नियमाऽप्रवृत्त । 'ङिति पि त्वम्'मित्यस्योदाहर णमाह–नूनादिति। एतेनाऽनुदात्तत्व,'नुव ई'डितीत्यागमश्चायातौ ॥

छन्दसि शाय। अडागम इति। 'उद्गृभ्णाति'॥ [ छन्दसिशा ] ॥

व्यत्ययो ब। भाष्ये-स्यादीनामिति। स्यतासिप्रभृतीनामित्यर्थः। सम्भुन इति प्राप्ते इति। असन्नक्षीराऽन्यतरवाचिनि तनपुंसकाभिधानमिदम्। उपग्रह स्यदेशस्य सार्थकत्वादि। इह तप्रतीतिनिमित्त परस्मैपदात्मनेपदे उपग्रहशब्देन

१ इदं क्वचिन्न। २ 'भनत्ति'। ३ 'मद्दीरस्क' ।'यो अस्क'। ४ 'लेखन'। ५ इदं भाष्यमित्यन्ये। ६ 'पुरुषव्यत्यय कालव्यत्यय' ।७ 'सुहित' ।८ 'शुभित' 'शुमित'।

इवासते । मधुन इति प्राप्ते । कालव्यत्यय --श्वोऽग्नीनाधास्यमानेन।श्वः सोमेन यक्ष्यमाणेन । आधाता यष्टेत्येवंप्राप्ते । पुरुषव्यत्यय --अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । आत्मनेपदव्यत्यय --ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते। परस्मैपदव्यत्यय --प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते ।

॥१॥ सुप्तिङुपग्रहलिङ्गनराणां कालहल्च्स्वरकर्तृयङां च ।

व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥२॥

## लिङ्याशिष्यङ् ॥ ३।१।८६ ॥

अथमाशिष्यङ्विधीयते तस्य किं प्रयोजनम् ? ॥१॥ आशिष्यङ्प्रयोजनं स्थागागमिवचिविदः ॥१॥ [आशिष्यङः प्रयोजनं स्थागागमिवचिविदः ] ॥ स्था--उपस्थेयं वृषभ तुग्रियाणाम् । स्था ॥ गा--अञ्जसा सत्यमुपगेयम् । गा ॥ गमि--यज्ञेन प्रतिष्ठा गमेयम् । गमि॥ वचि--मन्त्र वोचेमाग्नये । वचि॥विदि--विदेयमेनां मनसि प्रविष्टाम् । [वि दि] ॥२॥ शकिरुहोश्च ॥३॥ शकिरुहोश्चेति वक्तव्यम् । शकेम त्वा समिधं [साधया धियं] । अस्ववन्तीमारुहेमा स्वस्तये ॥३॥ दृशेरक् पितरं च दृशेयं मातरं च [दृशेयम्]॥४॥ दृशेरग्वक्तव्यः । [किं प्रयोजनम्?]॥ पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम्।इह उपस्थेयास्मेत्याद्यर्थेऽपि वक्तव्यो न ह्यङैव सिध्यति॥न वक्तव्यः॥ सार्वधातुकत्वात्तिङि सलोप आर्द्धधातुकत्वादेत्वम् । तत्रोभयं लिङ्गात्सिद्धम् ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

## कर्मवत्कर्मणा तुल्यक्रियः ॥ ३।१।८७ ॥

वत्करणं किमर्थम् ? ॥ स्वाश्रयमपि यथा स्यात्--भिद्यते कुसूलेनेति ।

---

प्र.] लिङ्याशि । दृशेरगिति । अङि गुण स्यात् । उपस्थेयास्मेति । स्था, लिङ्, मस्, यासुट्, सुट्, आकारलोप, सलोपश्च।'अतो येय' इति इय् । मस्याऽऽगमः पाक्षोऽन्यथा सलोपे सति उपस्थेमेति स्यात् ॥ इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

कर्मवत्कर्मणा । वत्करणमिति । नियादि वतिना परार्थे शब्दप्रयोगात्तदर्थ-

---

उ] लक्षणयोन्येने ॥ [ व्यत्ययो बहुलम् ] ॥

लिङ्याशिष्यङ् । गाम्धोरत्रभावे 'आतो येय' इति न स्यात् । अङि गुण इति। 'ऋदृशो ङि' इत्यनेनेति भाव । भाष्ये--आङ्ग्येति। 'मस्ये'ति शेष । आकारलोप इति।अत्माधिय'आतो लोप इटि चे'त्यालोप । भाष्ये आर्द्धधातुकत्वादेत्वमिति ।

---

१ इद क्वचित । २ इद व्याख्यामाध्य त्रुटित स्यात् । ३ 'रोश्च'। इद वार्तिक प्रायो लुप्तम् । ४ 'मेत्याद्यपि' । ५ 'सलात्सलोप' । ६ 'भयलिङ्गत्वा' ।

अकर्मकाणां भावे लो भवतीति भावे यथा लो स्यात्॥कर्मणेति किमर्थम् ?॥ करणाधिकरणाभ्यां तुल्यक्रियः कर्ता च स कर्मवन्मा भूत्, साध्वसिश्छिनत्ति

प्र ]गम इति भावः। स्वाश्रयमपीति। असति वचने कर्तुः कर्मसंज्ञा विज्ञानेन। ततश्चाऽकर्मकव्यपदेशाऽभावाद्भावे लो न स्यात्। वचने तु सति कर्मकार्याणि कर्तुरतिदिश्यन्ते न तु स्वाश्रयं कार्यं निवार्यते इति भावे लस्सिद्धो भवतीति लादेशेन कर्तुरनभिधानात्तृतीया भवति,-भिद्यते कुसूलेनेति। न चाऽसत्यपि वचने एतस्य कृतेति वक्ष्यमाणेन भावे लस्सिध्यति। यस्माद्भावे लविधिर्लान्तस्य कार्यमिति स्वाश्रयनिवारणं स्यादेव। कर्मणेति किमिति। धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता, तत्र कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न सम्भवतीति कर्मस्थैव क्रियाऽऽश्रयिष्यत इति भावः। साध्वसिश्छिनत्तीति। ननु करणादिव्यापारो धातुना नाऽभिधीयते, यदा त्वभिधीयते तदा तथा कर्तृत्वमेव,न तु करणादिरूपता। न च कर्तृकर्मव्यतिरेकेण कारकान्तरगतस्य क्रियया उपपद्यते। नैष दोषः।

उ ]'वाऽन्यस्य संयोगादे'रित्यनेन। एत्वाभावोऽपि छान्दसत्वादिति बोध्यम्। उभयलिङ्गत्वादिति। 'छन्दस्युभयथे'त्यनेनोभयसंज्ञत्वादित्यर्थः ॥

इति श्रीनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्य प्रथमे चतुर्थमाह्निकम्॥

कर्मवत्क॰ ॥ 'तत्र तुल्य'मिति वतिः, उपमेये प्रत्ययादर्शनात्। कर्मणेति परिभाषितस्य कर्मणो ग्रहणं, कृत्रिमत्वात्, सामर्थ्याच्च 'तुल्यक्रिय' इत्यनेनार्थान्तर क्रियया तुल्यत्वस्य लाभात्। न ह्यक्रियया क्रिया तुल्या भवति। ननु वत्यर्थलाभे स्वाश्रयमपि भविष्यतीत्यत आह-असत्यपीति। तदभावे तत्र लभ एव न भवतीति भावः। सञ्ज्ञेति। 'अधिकी'त्यनिवृत्तेरिति भावः। अकर्मकव्यपदेशाऽभावादिति। एतच्छास्त्रीयकर्मसत्त्वाऽन्यनिबन्धनमेव सकर्मकत्वमिति भावः। ननु भावे ले कर्तरि वा ल को विशेषोऽत आह-लादेशेनेति। तृतीया भवतीति। कर्तरि लादेशे तु सा दुर्लभेति भावः। न चाऽसत्यपीति। लान्तस्य कर्ता कर्मवदित्यर्थं मत्वा शङ्का। ततश्च यावत्कर्तरि न लस्तावत्कर्मवत्त्वाऽभावादकर्मकत्वेन भावे लोऽपि सिध्यतीत्यर्थः। 'लान्तस्य कार्ये कर्तव्ये कर्ता कर्मव'दित्यर्थं मत्वोत्तरयति-यस्मादिति। ततश्च भावे लेऽपि कर्तव्ये कर्ता कर्मवत्स्यात्। ततश्चाऽकर्मकत्वाऽभावाद्भावे लो न स्यादिति भावः। 'ल कर्मणी'ति विधेर्विध्युत्तरत्या शास्त्राऽऽरोपकल्पनान्तरकार्यं बोध्यम्। वस्तुतो ल्याप्यस्यैव कर्तुः कर्मवत्त्वेन नेदं वचने प्रयोजनम्। 'नमते दण्ड' इत्यादौ णिसिद्ध्यर्थं मुख्यं प्रयोजनं वक्ष्यति। धातुवाच्येति। प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वस्य ग्रहणमिति भावः। प्रत्यासत्ति-

१ इदं क्वचिन्न। २ 'एकारः'। ३ 'क्रियैव'।

साधु स्थाली पचतीति ॥ 'तुल्यक्रियः' इति किमर्थम् ? ॥ पचत्योदनं देवदत्तः ॥ 'तुल्यक्रियः' इत्यप्युच्यमानेऽत्र प्राप्नोति । अत्रापि हि कर्मणा तुल्यक्रियः कर्ता ।

---

प्र ]यद्यपि करणादिव्यापारो धातुवाच्यो न भवति तथापि स्वव्यापारं कुर्वन्ति करणादीनि प्रधानक्रियां साधयन्ति । तत्राऽवश्यं तुल्यक्रियत्वं कर्तुराश्रयितुमवस्थान्तरमपेक्षणीयम्–'अवस्थाऽन्तरयुक्तक्रियया तुल्यक्रियः कर्ते'ति। ततश्च कर्मावस्थावत्करणाद्यवस्था अप्याश्रीयेरन्। प्रधानव्यापारश्च कर्तृकर्मणोरेव स्थितो न त्वन्तरव्यापारोऽपि, तस्य सर्वस्यैव कारके व्यवस्थानात्। यद्यपि स्वव्यापारे कर्तृत्वं तस्य तथापि प्रधानक्रियापक्षलब्धकरणादिव्यपदेशवस्तुव्यवस्थितक्रियातुल्यत्वग्रहणनिवारणाय 'कर्मणे'ति कर्तव्यमेव । यद्यपि करणादिव्यापारस्य धातुवाच्यत्वं नास्ति, तथापीह सूत्रे धातुवाच्यत्वस्य शब्देनाऽनाश्रयणाद्वस्तुसद्भावाश्रयेण प्रसङ्गः स्यादेव। साधु स्थाली पचतीति । स्थाल्या अधिकरणत्वे यादृशी धारणसम्भवनादिरूपा क्रिया तादृश्येव कर्तृत्वेऽपीति स्यात्कर्मवत्त्वम् । तुल्यक्रिय इति किमर्थमिति । कर्मणेति तृतीया तुल्यशब्दाध्याहारेण व्याख्यास्यते । तुल्यक्रियत्वाच्च कर्तुस्तुल्यत्वमिति प्रश्नः । अथवा क्रियमाणेऽपि तुल्यक्रियग्रहणेऽतिप्रसङ्ग इति प्रश्नः । पचत्योदनमिति । सहार्थेऽपि तृतीया विज्ञायेत, तेन कर्मणा सह यः कर्ता प्रतिपाद्यत इति भावः । अकर्मकनिवृत्त्यर्था कर्मश्रुतिः स्यादास्ते शेत इति । अत्रापीति । तुल्यशब्दस्य साधा-

---

उ ]रणमाश्रित्य शङ्कते–नन्विति। कारकान्तराश्रयं कमिति। कारकान्तरस्याश्रयत्वेनाश्रयणमित्यर्थः । व्याप्तिन्यायाश्रयेणोत्तरयति–नैष दोष इति । स्वव्यापारमिति । स्वव्यापारावेशं विना क्रियासाधकत्वाऽयोगादिति भावः । तत्राऽवश्यमिति । एकाऽवस्थायां भेदनिरूपकतुल्यत्वाऽसम्भवादिति भावः । करणाद्यवस्था अपीति । व्याप्तिन्यायादिति भावः । प्रधानव्यापारः–धात्वर्थव्यापारः । कर्तृत्वमिति । आश्रयतामात्रमित्यर्थः । तन्निरूपितकरणत्वाऽभावप्रतिपादनपरञ्चैतत् । प्रधानक्रियापेक्षो लब्धः करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया तत्तुल्यत्वग्रहणनिवारणायेत्यर्थः । यदि तु लक्ष्याऽनुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते, प्रत्यासत्तिस्तु यस्य धातोर्यत्कर्म तत्तुल्यक्रियया तस्यैव धातोः कर्ता यदि तुल्यक्रिय इति वक्ष्यमाणफललाभार्थमादरणीया, तदा नेदम्प्रयोजनम् । अतो 'यत्र कर्मणि क्रियाकृतविशेषस्तदर्थ'मिति प्रयोजनान्तरं वक्ष्यति । ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात्कथं तुल्यत्वमत आह–तुल्यक्रियत्वाच्चेति । अतिप्रसङ्ग इति प्रश्न इति । इति व्युत्पादयितुं प्रश्न इत्यर्थः । साधारणेति । यथा 'एतौ तुल्यधना'वित्यत्रेत्यर्थः । कर्तृकर्मसाध्यत्वाच्चेति । 'जन्यत्वेनोभयोः साधारणी क्रिये'-

---

१ । 'पचतीति' । २ 'कर्मवद्भाव' । ३ 'श्रयण' ।

न तुल्यक्रियग्रहणेन समानक्रियत्वमभिधीयते॥ किं तर्हि?॥ यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते, यथा कर्मणि, स कर्मणा तुल्यक्रियः कर्ता कर्मवद्भवतीति ॥*॥ कर्मवदकर्मकस्य कर्ता ॥*॥ अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ सकर्मकस्य कर्ता कर्मवन्मा भूदिति। भिद्यमानः कुसूलः पात्राणि भिनत्तीति। तथा—॥*॥ कर्म दृष्टश्चेत्समान-

प्र ]रणवचनत्वात् कर्तृकर्मसाध्यत्वाच्च क्रियाया इति भावः। समानक्रियमिति। साधारणक्रियमित्यर्थः। एतच्च तुल्यक्रियग्रहणादेव लभ्यते। अन्यथा 'कर्मवत्कर्मणे'त्येव ब्रूयात्। यस्मिन्निति। सादृश्यवाची तुल्यशब्द आश्रीयत इत्यर्थः। कर्तृभूत इति। स्वविवक्षयैव विधानादनाश्रितमभाव। कर्तरि सप्तम्येत्यर्थः। अथ वा 'भू प्राप्ता'वित्यस्मात्स्वार्थेऽपि णिचो विकल्पनाद्भूतमेतत्। तेन कर्तृत्वं प्राप्त इत्यर्थः। उत्पत्तिविषये कर्तृशब्दः कर्तृत्वं वर्तते। कर्तृकर्मत्वस्याभेदाच्च एकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपद्यते। कर्मणेति। कर्मस्थया क्रियेत्यर्थः। साध्यसाधनयो-रत्यन्तभेदात्तुल्यत्वाऽसम्भवात् कर्मस्था क्रिया कर्मशब्देनोच्यते। भवति हि ताच्छब्द्यं यथा 'मञ्चाः क्रोशन्ती'ति। तत्र पचत्योदनमित्यत्र कर्तृकर्मत्वाश्रययोर-त्यन्तभेदात्सादृश्याऽभावात्कर्मवद्भावाभावः। 'लुनाति केदारं स्वयमेवे'त्यत्र केदारस्य तु द्विधाभवनलक्षणा कर्मावस्थायां यादृशी क्रिया तादृश्येव कर्तृत्वस्थायामपीति भवति कर्मवद्भावः। भिद्यमान इति। पात्राण्यपि द्विधा भवत कुसूलस्यापीति प्राप्नोति कर्मवद्भावः। कर्म दृष्ट इति। समाने एकस्मिन् धातौ कर्ता कर्मत्वेन यदि दृष्टो

उ ]ऽत्यर्थः। समानशब्दे सदृशवाचकत्वस्याऽपि सत्त्वादाह—साधारणेति। एतच्चेति। 'किन्तर्ही'त्यादि चेत्यर्थः। सादृश्यवचनतुल्यशब्दस्य प्रसिद्धतरत्वाच्चापि बोध्यम्।

तुल्येनेति। सहार्थयुक्ततृतीयया एकक्रियान्वयस्यात्मलाभेन लक्षुक्तार्थ लाभादिति भावः। क्विप्प्रत्यये कर्तृशब्दे रीङ् स्यादत आह—च्वेरिति। ननु च्वेरभावेऽकर्तरि कर्तरि भूते इत्येवोचितम्प्रकृतिविकृतिभावप्रतीतेरत आह—अथ वेति। भाष्ये—यथा कर्मणीति पूर्वान्वयि। ननु विक्लित्तिद्विधाभवनरूपाया क्रियाया एकत्वात्कथम्भेदनिबन्धनसादृश्योपपत्तिरत आह—कर्तृकर्मेति। तत्तन्नाना लक्षणरूपाऽवस्थाभेदादाश्रयस्य भेदाऽवगमात् तन्मूलक क्रियाया भेदाऽवगमाय इति सादृश्योपपत्तिरिति भावः। लक्षणाया हेतुमाह—साध्येति। साध्या—क्रिया। साधन-कारकम्। व्यापारयोरिति। व्यापारशब्देन धात्वर्थ उच्यते। तद्धात्वर्थत्वस्य सादृश्य न विवक्षितम्। किन्तु सामर्थ्यादवान्तरसादृश्यमेव विवक्षितमिति तात्पर्यम्।

भाष्ये-कर्त्ता कर्मवदिति। 'कर्तरि श'विन्त्यतोऽनुवृत्तस्य कर्तरीत्यस्य प्रथमया

१ 'मभिसम्बध्यते'। २ इति क्वचित्। ३ 'इत्यत्र तु केदारस्य'। ४ 'धात्वर्थानु'।

धातौ ॥ ७॥ इमं दृष्टान्तसमानधाताविति वक्तव्यम् । इह मा भूत्-पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेति । तथा-॥ ८॥ कर्मस्थभावकानां कर्मस्थक्रियाणां च ॥ ॥ [ तथा ] कर्मस्थभावकानां कर्मस्थक्रियाणां वा कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति । [कर्मस्थभावकानाम्—आसयति देवदत्तं, शाययति देवदत्तं, स्थापयति देवदत्तम् ॥ कर्मस्थक्रियाणां—ग्राममवगच्छति, करोति कटम् । कर्तृस्थभावकानां—चिन्तयति, मन्त्रयते । कर्तृस्थक्रियाणां—गच्छति धावति हसति ] ॥ यत्तावदुच्यते-अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यमिति

प्र ] भवति यदा कर्मवद्भावो, यदा त्वन्यस्मिन्धातौ कर्मोऽन्यस्मिंश्च कर्ता तदा मा भूत्कर्मवद्भाव इत्यर्थः । पचत्योदनमिति । ओदनस्य कर्मत्वे यादृशी क्रिया विक्लित्तिलक्षणा तादृश्येव कर्तृत्वेऽपि । राध्यतेर्विक्लित्तिवचनत्वात् । न चानयोर्वाक्ययोर्द्वयस्य युगपत्प्रयोगः । कर्मस्थक्रियातुल्यत्वप्रतिपादनाय तु वाक्यद्वयोपन्यासः । अन्यथा सन्नन्तधातावपि व्याख्यातृभिः कथं तुल्यक्रियत्वं प्रदर्श्यते । यथैव लुनातौ केदारस्य कर्मत्वमिति लावयते केदारः स्वयमेवेति कर्मवद्भावो न स्यात् । अत्र केचिदाहुः-'लुनातिरेव णिचि लावि सम्पन्न इत्यस्ति समानधातुत्वम्' । अन्ये त्वाहुः-'लावयतावेव केदारस्य कर्तृत्वं कर्मत्वं चेति दोषाऽभावः' । कर्मस्थभावकानामिति । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः । सपरिस्पन्दनसाधनसाध्यस्तु क्रिया । यत्र च क्रियाकृतविशेषदर्शनं तत्स्था क्रियोच्यते । ततश्च 'पश्यति राजा स्वयमेव' 'आरोहति हस्ती स्वयमेवे'ति

उ ]विपरिणाम इति भावः । पात्राणामपीति । एवञ्च भिदेः कर्मसु पात्रेषु या क्रिया सा तत्कर्तरि कुसूलेऽपीति भावः । समानशब्दः साधारणपर्याय एकस्मिन्नर्थे पर्यवस्यतीत्याह-एकस्मिन्निति । ननु युगपत्स्वातन्त्र्यपारतन्त्र्ययोर्विरुद्धत्वात्कथमाप्येऽनयोर्वाक्ययोर्युगपत्प्रयोगोऽत आह-न चाऽस्येति । प्रतिपादनायेति । तत्प्रयोगे या कर्मस्था साऽत्र प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः । लुनातावपीति । 'लुनाति केदारं देवदत्त' इति प्रयोग इत्यर्थः । लावयते केदार इति । 'णिश्रन्थी'ति यक्चिणोः प्रतिषेधः । कर्मवद्भावफलन्त्वात्मनेपदमेव । 'णिचश्चे'त्यनेन तु न सिद्धिः, क्रियोद्देश्यफलस्य कर्तृगामित्वाऽभावात् । अन्ये त्वाहुरिति । अत्राऽरुचिस्तु ण्यन्तस्य धात्वन्तरत्वम् । लावयतावेति । निवृत्तप्रेषणपक्ष इति भावः । अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह-अपरिस्पन्दनेति । इदञ्च प्रकृताऽभिप्रायेण । 'भावे घ'ञित्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम् । यत्र चेति । यथा दृशिरादौ कर्मणि क्रियाकृतविशेषदर्शनात्तत्स्था सा । 'पश्यती'त्यादौ राजादिदर्शनं

१ इदं क्वचिन्न । २ केचित्तु वार्तिकपाठं तथेत्याहुः । ३ इति क्वचिन्न ।

न वक्तव्यम्। वक्ष्यत्येतत्[1] 'सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत' इति। यदप्युच्यते—'कर्म दृष्टश्चेत्समानधातावि'ति वक्तव्यमिति। न वक्तव्यम्। धातोरिति वर्तते। धातोः कर्मणः कर्तुश्च कर्मवद्भावोऽतिदिश्यते। तत्र सम्बन्धादेतद्गन्तव्यं 'यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्या'दिति। तद्यथा—धातोः कर्मण्यण् भवतीति, तत्र सम्बन्धादेतद्गम्यते—यस्य धातोर्यत्कर्मेति। इह मा भूत्—'आहर कुम्भं' 'करोति कुम्भ'मिति। यदप्युच्यते—

---

प्र ] कर्मवद्भावाऽभावः सकर्मकाणामिति। अन्योन्यमाश्लिष्यत इत्युदाहरणमात्रमेतत्तु व्यतीहारविशिष्टक्रियाविषयकर्मवद्भावप्रतिषेधप्रतिपादनार्थमित्यर्थः। धातोः कर्मण इति। कर्मणः सतः कर्तुरित्यर्थः। कर्मणेति चोपादानादयमर्थो लभ्यते,—'यस्य धातोर्यत्कर्म तत्स्थया क्रियया तुल्यक्रियः कर्ता तस्यैव धातोर्यदि भवति तदा कर्म वद्भवति'। आहर कुम्भमिति। समर्थपरिभाषोपस्थानमन्तरेणापि भवत्येवेष्टमिदं

---

उ ] कर्त्रन्यत्र दृष्टादिरूपविशेषदर्शनात्तल्लभ्यत इति भावः। न चैवं पच्यादिकर्त्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्, सिद्धे पश्यत्यादीनां कर्तृस्थभावकत्वेऽनापत्तिः, कर्त्तरि क्रियाकृतविशेषाऽभावादिति वाच्यम्, येन धातुना कर्तृकर्मसाधारणफलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः। यथा 'पश्यति','गच्छती'त्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्। संयोगश्चोभयनिष्ठः। एवं ह्रासोऽपि। यत्र तु कर्त्रवृत्तिधर्मरूपफलं स कर्मस्थभावकादिः। यथा भिदादिरित्यत्र तात्पर्यात्। भाष्ये—वक्ष्यत्येतत् सकर्मकाणामिति। अयं भावः—वाक्यादिभिरकर्मकाऽऽसादनानामन्य आऽकर्मकप्रदर्शन सहृदयदर्शनादत्राऽपि तथात्वापत्तौ 'भासम्पचत्योदनः स्वयमेवे'त्यादौ कर्मवदकर्मकस्येति वचनेन कर्मवत्त्वं प्राप्नोतीति 'सकर्मकाणां प्रतिषेध' इत्यावश्यकमिति। अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात्। न त्विति। उदाहरणं वक्तव्यस्य विषय एव प्रतिषेध इति न भ्रमितव्यमिति भावः। अन्ये त्विदमुदाहरणचिन्त्यम्, आश्लेषः—संयोगविशेषाऽनुकूलव्यापारः। तत्र संयोगाश्रयत्वेन तयोः कर्मत्वं, व्यापाराश्रयत्वेन कर्तृत्वम्। तत्र संयोगाऽनुकूलक्रियायां कर्तृत्वोपयोगित्वेऽपि व्यक्तिभेदोऽवश्यमङ्गीकार्यः। अन्यथोभयोरपि कर्तृत्वमेव स्यात्। 'इमावाश्लिष्यत' इति यथा। भेदे त्वन्यनिष्ठाश्रयान्यस्य कर्मत्वमुपपद्यते। एवञ्च कर्मत्वोपयोगिक्रियया तुल्यक्रियस्य तदीयकर्तुरभावात् कर्मवत्त्वाऽप्राप्तेरित्याहुः। तत्त्वमग्रे वक्ष्यते। ननु 'कर्मणः' 'कर्तु'रिति षष्ठ्यन्तद्वयमसङ्गतमत आह—सत इति। कर्मणेति चोपादानादिति। प्रत्यासत्त्येति भावः। समर्थपरिभाषयैवेदं सिद्धमत आह—समर्थेति। एतच्च दृष्टान्त एकदेशयुक्तिरिति ध्वनितम्। क्रियया कर्तुरुपमा

---

१ 'कर्मणः सतः'। २ 'द्वाव उच्यते'। ३ 'नुपपत्ति'।

'कर्मस्थभावकानां कर्मस्थक्रियाणां यो कर्ता कर्मवद्भवतीति वक्तव्यं । कर्तृस्थभावकानां कर्तृस्थक्रियाणां यो कर्ता कर्मवन्मा भू'दिति ॥ न वक्तव्यम् । कर्मस्थया क्रिययाऽस्य कर्तारमुपमिमीते, न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियाया प्रवृत्तिरस्ति ॥

किं पुनः कर्मकर्तरि कर्माश्रयमेव भवत्याहो स्विल्कर्त्राश्रयमपि ?॥ किं चातः ॥ यदि कर्माश्रयमेव,–चङ्शाप्कृद्धिधयो न सिध्यन्ति॥ चङ्–अचीकरत कट स्वयमेव [ इति ]। चङ्[2] ॥ शप्–नमते दण्ड स्वयमेव । शप्[3] ॥ कृद्विधि –भिदुर काष्ठ स्वयमेव॥ अथ कर्त्राश्रयमपि सिद्धमेतद्भवति। किं तर्हीति। ॥*॥ आत्मनेपदशबादिविधिप्रतिषेधौ ॥*॥ आत्मनेपदं विधेय, शबादीनां च प्रतिषेधो वक्तव्य ॥ उभय क्रियते न्यास एव ॥

प्र ]रिति प्रदर्शनार्थोपन्यास । कर्तारमिति। कर्तृस्था क्रियामित्यर्थ । किं पुनरिति । विमनिर्देशेन स्वाश्रय निवर्त्यते आहो स्विन्नेति प्रश्न । यद्यपि स्वाश्रयमपि यथा स्यादित्यत्र निर्णय कृतस्तथापि दोषान्तरोद्भावनाय पुनर्विचार्यते । अचीकरतेति । यक्चिणो प्रतिषेधेऽपि स्वाश्रयौ चङ्शपौ न प्राप्नुत । भिदुरमिति । कर्तरि कुरच्न प्राप्नोति । 'लक्ष्यस्य कर्ता कर्मव'दिति न तावत्स्थापितमिति कृद्विधेरसिद्धिरुक्ता । उभयमिति। कर्तैव य कर्ता तत्र परस्मैपदमिति परस्मैपदाभावादात्मनेपद भवति । कर्तरि शबित्यत्र कर्तरीति योगविभागेन शबादीनां यका बाधन भवति । कार्यातिदे]शासम्भवादाह–कर्तृस्थामिति।भाष्ये–न च कर्तृस्थेति । तेषां धातूनां वाच्याया फलरूपक्रियाया कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थ । करणादित्युल्यातिव्येऽनिव्याप्तिवारणस्य प्रत्यासत्त्यैव सिद्ध्या 'कर्मणे'त्युपादानसामर्थ्यात्कर्ममात्रनिष्ठफलरूपकर्मस्थक्रिया लक्ष्यत इति भाव । यथाश्रुतप्राग्युक्तकैयटरीत्या व्याख्याने तु जानात्यादिकर्तर्यपि क्रियाकृतविशेषाऽनुपलम्भेन 'चिन्तयती'त्याद्युपक्रमेणैतदुक्त्यसङ्गति । एतेन क्रियाया क्रियाकृतविशेषाणामित्यर्थ इत्यपास्तम् । तदुक्त हरिणा–'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥' इति । अन्येषामिति । 'मते' इति शेष । इदमेव मत युक्तम्, उपयुक्ते ।

दोषान्तरेति । तदुद्भावनपूर्वक मुख्यफलप्रदर्शनार्थेत्यर्थ । प्रतिषेधेपीति । 'न दुहे'ति 'णिश्री'ति च। शपाविति। नमतिविषयकमिद । कर्तैवेति। 'शेषा'दिति सूत्रे 'कर्तरि कर्मव्यतिहार' इत्यत कर्तरीति पदानुवृत्त्याऽयमर्थो लब्ध इति भाव । योगविभागेनेति । इदञ्च यग्विधायके निरूपितम् । कार्यातिदेशो वाऽयमिति । एवञ्च परत्वादात्मनेपदविधि शब्बाधश्च सिद्ध इत्यर्थ । नन्वेव स्वाश्रयनिवृत्तिरेव

१ 'च' । २ इद क्वचिन्न । ३ 'कृद्विधि' । ४ 'प्रतिषेध' ।

किमर्थं पुनरिदमुच्यते ? ॥*॥ कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् ॥*॥ कर्मकर्तरि कर्तृत्वमस्ति ॥ कुत ?॥ स्वातन्त्र्यस्य विवक्षितत्वात्[1] । स्वातन्त्र्येणैवाऽत्र कर्ता विवक्षित ॥ किं पुन सत स्वातन्त्र्यस्य विवक्षा, आहोस्विद्विवक्षामात्रम् ?॥ 'सत' इत्याह॥ कथ ज्ञायते?॥ इह भिद्यते कुसूलेनेति,-न चान्य कर्ता दृश्यते क्रिया चोपलभ्यते ॥ किं च भो विग्रहवतैव क्रियाया कर्त्रा भवितव्य, न पुनर्वातातपकाला अपि कर्तार स्यु ॥ भवेत्सिद्धं यदि वातातपकालानामन्यतम कर्ता स्यात् । यस्तु खलु निवाते निरभिवर्षेऽचिरकालकृत कुसूल स्वयमेव भिद्यते तस्य नाऽन्य कर्ता भवत्यन्यदत कुसूलात् ॥ यद्यपि तावदत्रैतच्छक्यते वक्तु यत्रान्य कर्ता नास्ति इह तु कथं न स्यात्-लूयते केदार स्वयमेवेति, यत्रासौ देवदत्तो दात्रहस्त समन्ततो विपरिपतन्दृश्यते ? ॥ अत्रापि याऽसौ सुकरता नाम तस्या नान्य कर्ता भवत्यन्यदत केदारात् ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥*॥ तत्रै स्वन्तस्ये कर्म-

प्र ]दिशो वाऽयमाश्रीयते। यद्वाऽविरुद्धमतिदेशेन स्वाश्रय तद्भवति न तु विरुद्धमिति शबादिपरस्मैपदाभाव । स्वातन्त्र्यस्येति । पच्यते ओदन स्वयमेवे'ति विक्लित्तिमात्रवाची पचि । तत्र चौदनस्य कर्तृत्वमेव । 'लूयते केदार' इति द्विधाभवनवाची लुनातिस्तथा च केदारस्य कर्तृत्वम्। क्रिया चेति । विदारणक्रियेत्यर्थ । किञ्च भो-इति। कारणाऽभावे विदारणस्यकार्याभावादवश्य केन चिद्वातादिना कारणेन भाव्यमिति भाव । अन्यदत इति । कुसूलस्यैव विदारणक्रियाया कारणत्वोपपत्तावदृश्यमानकारणान्तरकल्पनाया अयुक्तत्वादिति भाव । सुकरतेति । द्विधाभवनलक्षणक्रियेत्यर्थ । अन्यथा पवनमपि देवदत्तो कुर्यादिति भाव । स्वन्तस्य कर्तेति ।

उ ]पर्यवमस्यन्त आह-यद्वेति। अतिदेशेन-तदाश्रयकार्येण। एवञ्च 'नमते दण्डोऽधोकरते'त्यादौ यक्चिणोरभावे चल्कार्यौ भवतोऽन्यत्र च न भवत इति भाव । भाष्ये-किमर्थं पुनरिदमुच्यत इति । कर्मण कर्तृत्वाऽसम्भवात् सूत्र व्यर्थमिति प्रश्न । तत्सम्भवम्प्रदर्शयति-कर्मकर्तरीति । स्वातन्त्र्यञ्च प्रधानधात्वर्थाश्रयत्वम् । तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे सम्भवतीत्याह-पच्यत इति । कुसूले क्रियाऽदर्शनादाह-विदारणेति । भाष्ये-विग्रहवतैवेति। सशरीरेण चेतनेनैवेत्यर्थ । निरभिवर्षे इति । अनावृष्टे इत्यर्थ । ननु सुकरता यदि प्रयोजकव्यापारस्तर्हि तस्य देवदत्त कर्तेति, 'नाऽन्य' इति भाष्यमनुपपन्न स्यादत आह-द्विधेति । सुकरताविषयक्रिया सुकरताशब्देनोच्यत इत्यर्थ । कर्मगतसौकर्यं निरीक्ष्यैव देवदत्तादे कर्तृत्वम् , नाऽन्यथेत्याह-अन्यथेति । एवञ्च सौकर्यातिशयविवक्षया विद्यमानोऽपि

१ इद क्वचिन्न । २ 'कथ स्यात्' । ३ इद वार्तिकद्वहिरित्यन्ये ।

वदनुदेश ॥*॥ तत्र ल्यान्तस्य कर्मवदनुदेश. कर्तव्य । 'ल्यान्तस्य कर्ता-कर्मवद्भवती'ति वक्तव्यम् ॥*॥ इतरथा हि कृत्यक्तखलर्थेषु प्रतिषेधः ॥*॥ अक्रियमाणे हि ल्यग्रहणे कृत्यक्तखलर्थेषु प्रतिषेधो वक्तव्यः स्यात् । कृत्य–भेत्तव्य कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षित-स्तदाऽस्य कर्मवद्भाव· स्यात् । तस्य प्रतिषेधो वक्तव्यस्तस्मिन् प्रति-षिद्धेऽकर्मकाणा भावे कृत्या भवन्तीति भावे यथा स्यात् । [ भेत्तव्य कुसू-लस्य ] भेत्तव्य कुसूलेनेति । कृत्य ॥ क्त–भिन्न. कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भाव· स्यात्तस्य प्रतिषेधो वक्तव्य, तस्मिन् प्रतिषिद्धेऽकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्यात्–भिन्न कुसूलेनेति । क्त ॥ खलर्थ—ईषद्भेदः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भाव. स्यात्, तस्य प्रतिषेधो वक्तव्य.। तस्मिन्प्रतिषिद्धेऽकर्मकाणां भावे खल्भवतीति भावे खल्यथा स्यात्,–

प्र ]ल्यान्तवाच्यो य कर्ता स ल्यान्तकार्य एव कर्मवद्भवतीत्यर्थ ।तेन कर्मणि विधीय-माना. कृत्यादयोऽनिर्देशात्कर्मकर्तरि न भवन्तीति भाव एवोत्पद्यन्ते । ततश्चैते कर्तु-रनभिहितत्वात्कर्तृविभक्ती षष्ठीतृतीये भवत –भेत्तव्यं कुसूलस्य भेत्तव्यं,भेत्तव्यं कुसूले-नेति।'भिद्यते कुसूल'इत्यत्र च द्वितीया न भवति। ल्यग्रहणस्याऽन्य प्रयोजन न दृश्यते।

उ.]कर्तृव्यापारो न विवक्ष्यते । किन्त्वनेकार्थत्वाद्धातूनां कर्मनिष्ठव्यापारमात्रपरता तदा कर्मण· कर्तृत्व । 'कर्मणा तुल्यक्रिय' इत्यत्राऽवस्थान्तरीयकर्मणा तुल्यक्रियत्व-मित्येवार्थो विवक्षित इति दिक् । 'ल्यान्तस्ये'ति षष्ठी वाच्यवाचकसम्बन्धे, निमित्त-निमित्तिभावे चेत्याह–ल्यान्तेति । 'ल्यान्तवाच्य' इत्यर्थस्य फलमाह–तेनेति । षष्ठीतृतीये इति । 'कृत्यानां कर्तरि वे'ति वचनादिति भाव· । यद्यपि स्वाश्रयाऽ-निवृत्तेर्भावे सिध्यन्त्येते तव्यादयस्तथापि 'भेत्तव्य कुसूल स्वयमेवे'त्यपि स्यादिति दोष । भाष्यस्यापि–'भेत्तव्यं कुसूलेने'ति भाव एव कृत्यो यथा स्यादित्यर्थो बोध्य· । ल्यान्तकार्य एवेत्यस्य फलमाह–भिद्यते कुसूल इति । कर्तरि लेऽपि कर्मवद्भा-वेन द्वितीया स्यादिति भाव । ननु भङ्गविरुद्धमेतत्, कर्मत्वेनाऽनभिहितत्वेन च । तत्राऽतिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेति चेत्, कार्यातिदेशोऽनेनैव द्वितीया विधीयते।तत्र चाऽनभिहिताऽधिकाराऽभाव इत्यभिमानात्।वस्तुत 'कर्मव'-दित्युक्ते कर्मणि यत्कार्यं येनोपाधिना यथा भवति तथा कर्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाल्ल्यन्तस्य कार्ये इति चिन्त्यफलम्।अत्र–'भिन्न कुसू-

१ 'अनिदेश.' । २ 'अन्यथा' । ३ नास्तीदं क्वचित् ।
४ 'भावे कृत्यो' । ५ 'क्षितस्तदाऽस्य' । ६ 'कुसूल' ।

इत्यत्रेद कुसूलेनेति ॥ तर्हि लग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । क्रियते न्यास एव । द्विर्लोपिष्यदिति द्विलकारको निर्देशः ॥*॥ सिद्धं तु प्राकृत-कर्मत्वात् ॥२॥ सिद्धमेतत् ॥ कथम् ? ॥ 'प्राकृतकर्मत्वात् । प्राकृतमेवैतत् कर्म । यथा—कटं करोति, शकटं करोतीति ॥ कथं पुनर्ज्ञायते—'प्राकृतमेवै-तत्कर्मे'ति ? ॥*॥ आत्मसंयोगेऽकर्मकर्तुं कर्मदर्शनात् ॥*॥ आत्मसंयोगेऽकर्मकं कर्तृ कर्म दृश्यते ॥ क्व ? ॥ हन्त्यात्मानं, हन्यत आत्मेति ॥ विषम उप

प्र ]गवा दुग्धं पयः इत्यत्र 'इत्यत उदाहृ ।तथा 'सकर्मकत्वादकर्मकेति वचनात् कर्तरि भवितव्यमेव तेन,—भिन्नं कुसूलं स्वयमेवेति । तथा च मिनोतेर्ग्रासकर्म-कर्तृकत्वाति वक्तव्यमिति मिनो ग्रामं स्वयमेवेति च कर्तुरुदाहरिष्यते । सिद्ध-मिति । प्राकृतं स्वाभाविकमेवैतत्कर्म न त्वातिदेशिकमित्यर्थः । आत्मसंयोग इति । एकस्यैव वस्तुनो भेदेनात्मा कर्मत्वेन कर्तृत्वेन च विवक्षित इत्यर्थः । तदु-क्तम् 'एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते । कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते' । इति । कर्म दृश्यत इति । कर्मत्वं दृश्यत इत्यर्थः । विषम उप-न्यास इति । अयं भावः—आत्मन्यात्मभेदस्य शब्देन प्रतिपादितत्वाद्युक्तं कर्म-त्वम् । इह तु 'लूयते केदारः' 'पच्यते ओदनः' इत्यादौ यदा 'स्वय'मिति शब्दो न प्रयुज्यते, तदात्मभेदाविवक्षाया कर्मत्वाऽभावात्कर्तृत्वमेव क्रियाभवनादौ केदारा-दीनामिति कर्मवदतिदेशः कर्तव्य एव । 'नमते दण्ड' इत्यादौ च प्राकृतकर्मत्वे

उ.]त्येत्यत्र । अत्र कर्मवत्त्वाऽभावेऽपि अकर्मकत्वनिबन्धनकर्तृत्वमादाय 'भिन्नः कुसूल' इत्यस्य दुर्वारत्वेन तदग्रहणप्रयत्नयोर्न फलमिति भावः । तद्दर्शयति—यथा इत्यादिना। गवा दुग्धमिति। अत्र गोः कर्मत्वे 'अप्रधाने दुहादीना'मिति वचना त्तस्मिन्नेव कर्मणि क्तः स्यात् । तदभावे तु कर्मान्तराऽभावादप्यस्यैव कर्मणि क्ते 'गवा दुग्धं पय' इति भवतीत्यर्थः । वस्तुतस्तु कर्मसद्भावेन कर्मणि क्ते 'परशुभिन्नः कुसूल' इत्यादौ तृतीयान्तं पूर्वपदं कर्मवाचकक्तान्ते उत्तरपदे प्रकृतिस्वरमित्यर्थक 'तृतीया कर्मणी'त्यनेन पूर्वपदप्रकृतिस्वरं प्राप्नोति, कर्तरि तु नेति फलं विशेषस्य स्पष्टतया चिन्त्योऽयं कैयटः । कर्मणि प्रत्ययेनैव प्रयोगाणां सिद्धेः सूत्रं व्यर्थमित्या-शङ्कते भाष्ये—सिद्धन्त्विति । आत्मसंयोग इति । आत्मवाचकपदसमभिव्याहारे इत्यर्थः । अकर्मकर्तुरिति । कर्मभिन्नस्य कर्तुरात्मन सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा 'भिद्यते कुसूल' इत्यादावपि आत्मनः कर्तृत्वात्कर्मण्येव लकारेण सिद्धम् । अत एव "आत्मने'त्यर्थकं 'स्वयमेवे'ति कर्मकर्तृदाहरणेषु प्रयुज्यत इति नारम्भम् । समाधत्ते—विषम इति । तत्र हन्त्य वैषम्यं दर्शयति—दृष्टान्त इति ।

१ 'लिप्सा' । २ 'कर्मकर्तुः' । ३ 'हन्यत आत्मनेति' 'आत्मना हन्यते इति' ।

न्यास । 'हन्त्यात्मान'मिति कर्म दृश्यते कर्ता न दृश्यते । आत्मना हन्यत इति च कर्ता दृश्यते कर्म न दृश्यते ॥*॥ पदलोपश्च ॥*॥ पदलोपश्चात्र द्रष्टव्य । हन्त्यात्मानमात्मा । आत्मना हन्यत आत्मेति ॥ क पुनरात्मान हन्ति को वाऽऽत्मना हन्यते ? ॥ द्वावात्मानौ, अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति । ॥*॥ सकर्मकाणा प्रति

प्र ]यक्चिणो प्रतिषेधे शब्दौ न स्याताम् । 'भिद्यते कुसूलेने'ति च सकर्मकत्वा द्धातोर्भावे ले न स्यात्। कर्म दृश्यतइति । 'आत्मान'मिति द्वितीयान्तवाच्य कर्म । कर्ता न दृश्यत इति । 'हन्ती'ति कर्तरि लकारोत्पत्तावपि कर्तृविशेषानुपादाना दिति भाव । कर्ता दृश्यत इति । तमन्तरेण क्रियाया अभावादात्मनेत्येनद्वाच्य इति भाव । कर्म न दृश्यत इति । कर्तृविशेषव्यतिरेकेणाऽन्यस्याऽत्र कर्मणो दुरुपपादत्वादिति भाव । पदलोपश्चेति । गम्यमानार्थत्वादप्रयोग पदस्येत्यर्थ । यत्तु लूयते केदार स्वयमेवे'ति वृत्तिकारैरुदाहियते तत्र कर्त्रन्तराऽभावप्रतिपादनेन केदारस्यैव कर्तृत्वप्रतिपादनाय स्वयशब्द प्रयुज्यते, नत्वेनत्कर्मवद्भावस्योदाहरण, स्वयशब्दस्यात्मनेति तृतीयान्तार्थे वर्तनादात्मन कर्तृत्वे केदारस्य प्रकृतकर्मत्व सद्भावात् । द्वावात्मानाविति,–करणाविव्यत्र व्याख्यातमिति तत एवावधार्यम् । आक्षिप्यत इति । क्रियाफलस्य सयोगस्य कर्मणि दर्शनात्कर्मस्थक्रियत्वमत्र द्रष्ट-

उ ]भावे ल इति। इदमुपलक्षण तव्यादीनाम्। एतेन 'भिद्यते कुसूलेनात्मे'ति कर्मण्येवाऽयम्प्रयोग इत्यपास्त, भेत्तव्यमापद्वेदमित्यायसिद्ध्यापत्ते । न च तत्राऽपि कर्मणि, नियमेन नपुसकप्रयोगाऽनापत्ते । इत्थमुक्त वैषम्य विघटयति भाष्ये–हन्त्यात्मानमित्यादिना । एवञ्च शब्देन प्रतिपादनाऽभावेऽपि यथा कर्मत्व तथा प्रकृतेऽपि भविष्यतीति भाव । वैषम्यमुपपादयति–पदलोपश्चेति । तद्व्याचष्ट–गम्यमानेति । एवञ्च इत्यध्याहारसम्भवादात्मैव देहान्यायेन बोधसम्भवाद्वा तत्राऽऽत्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भाव । ननु कर्मवद्भावविषयेऽपि 'स्वय'मित्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राऽप्यस्त्येव भेदस्य शब्देन प्रतिपादनमत आह–यत्त्विति । न त्वेतदिति । 'आत्मने'त्यर्थे 'स्वय'पदघटित विवक्षितात्मकर्तृकमित्यर्थ । नन्वेकस्यैव वस्तुन कथ शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते भाष्ये–क पुनरिति । आत्मान हन्ति य आत्मा स क इत्यर्थ । औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशय । सयोगस्य कर्मणीति । अन्योन्यसयोगकृतहर्षादिकरणस्येत्यर्थ । ननु सयोगस्य तत्कृत

१ 'इद क्वचित्' । २ 'आत्मना' । ३ 'शरीरात्मा अन्तरात्मा च' ।

यथाऽन्योन्यमाश्लिष्यन्त इति ॥*॥ सकर्मकाणां प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् [1] ॥ [ 'अन्योन्यमाश्लिष्यत इति' ] [1] ॥ अन्योन्यमाश्लिष्यत अन्योन्यं संगृह्णीत अन्योन्यं गृह्णीते इति ॥*॥ तपेस्तु सकर्मकस्य वचनं नियमार्थम् ॥*॥ तपेस्त्वं सकर्मकस्य वचनं नियमार्थं भविष्यति– तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्येति ॥ तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति–उत्तपति सुवर्णं सुवर्णकारः । उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति ॥ ॥*॥ तस्य च तपः कर्मकस्यैव ॥*॥ तस्य च तपः कर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्येति ॥

---

प्र ]ष्यम्। तपेर्वेति।तप इति योगविभागेन नियमः क्रियत इति भावः । ननु तप्यते तपस्तापस' इत्यत्र कर्मस्थक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति, उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्तापसस्य तु कर्तृत्वेऽर्जनार्थत्वात् । नैष दोषः । शरीरसन्तापलक्षणायाः क्रियायाः तुल्यत्वादवस्थाद्वयेऽपि शरीरसन्तापलक्षणमेवार्जनं तापसस्य यतो

---

उ ]र्यादिश्च कर्तर्यपि सत्त्वेनोक्तरीत्या कथं कर्मस्थत्वमिति चेन्न हर्षरूपविशेषस्य धात्वर्थकर्मत्वकृतत्वेन कर्मस्थत्वमवधारयात् । यथायुक्तरीत्या नेदमुदाहरणं तथाप्ययमत्र भाष्यार्थः, कर्मपदेन तत्स्थक्रिया लक्ष्यते 'मञ्चाः क्रोशन्ती'तिवत् । अन्यतरक्रियाप्रति कर्मण्यन्यतरस्मिन् या संयोगानुकूलक्रिया तादृश्येवाऽपरस्मिन् कर्तरीति स्यादेव प्रसङ्गः । यद्यपि 'देवदत्तादयः पचन्ती'त्यादाविव धातुना भेदस्याऽप्रतीतिस्तथाप्यर्थभेदकृतं वास्तवं भेदमादाय तुल्यत्वाऽक्षतिः । 'कर्मत्वोपयोगिकर्मस्थक्रियया कर्तृत्वोपयोगिक्रिया तुल्या यस्य कर्तुरित्यर्थे तु न मानमिति बोध्यम् । एकयोगे नियमद्वयाऽलाभादाह–योगविभागेनेति । भाष्ये–किमिदं तपः इति । सूत्रे 'तपः कर्मकस्ये'त्यत्र 'तपः' पदेन किमुच्यत इति प्रश्नः । 'धात्वर्थः सन्तापः' इत्युत्तरम् । दुःखार्थत्वादिति । 'तापसं तपस्तपती'त्यत्र तु तपतीत्यर्थावगमात् । अर्जनार्थत्वादिति । 'तापसस्तपस्तप्यते' इत्यतोऽर्जयतीत्यर्थावगमादिति भावः ।

शरीरेति । शरीरसन्तापलक्षणायाः क्रियायाः अवस्थाद्वयेऽपि तुल्यत्वात् , यतः शरीरसन्तापलक्षणमर्जनमेव तापसस्य व्यापारो नाऽन्य इत्यन्वयः । अयं भावः 'तपति तापसं तपः' इत्यस्य सन्तापविशेषस्तापसं तपतीत्यर्थः । तपतिरत्राऽन्तर्भावितण्यर्थः । तापसगतिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः । तदनुकूलो व्यापारश्च सन्तापविशेषः स्वव्याप्यावस्थान्तरस्य एव । तापसं शरीरसन्तापसामान्यानुकूलव्यापारश्च सन्तापविशेषस्वीकार एव । एवं च स्वार्थत्याग तापसस्य कर्तृत्वम् । 'तापसस्तपः सन्तप्यते' इत्यत्र सन्तापविशेषाऽभिन्नशरीरसन्तापाऽनुकूलव्यापारस्तापसकर्तृक इति बोधः । कैयटे शरीरसन्तापपदेन

---

१ इदं लुप्तं स्यात् । २ 'संगृह्णीत' । ३ पुनः सकर्म' । ४ इति क्वचिन्न ।

किमिद तप इति [१] ॥ तपेरयमौणादिकोऽस्कारो भावसाधन ॥ क प्रकृत्यर्थ क प्रत्ययार्थ ? ॥ स एव सन्ताप ॥ कथ पुन स एव नाम प्रकृत्यर्थ स्यात्स एव च प्रत्ययार्थ ॥ सामान्यतपेरवयवतपि कर्म भवति । तद्यथा स एतान्पोपानपुपैत् [२],–गोपोषमश्वपोष रैपोषमिति सामान्यपुपेरवयवपुपि कर्म भवति । एवमिहापि सामान्यतपेरवयवतपि कर्म भवति । ॥*॥ दुहिपच्योर्बहुल सकर्मकयो ॥*॥ दुहिपच्यो सकर्मकयो कर्ता बहुल कर्म वद्भवतीति [३] वक्तव्यम्। दुग्धे गौ पय [स्वयमेव [४]]। तस्मादुदुम्बर स लोहित फल पच्यते ॥ बहुलवचन किमर्थम् ? ॥ 'परस्मैपदार्थम्' [५] ॥ यद्येव नार्थो

प ]व्यापार । क प्रत्ययार्थ इति । तापसेन तपस्तप्यत इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्यैव क्रियारूपस्य प्रत्ययार्थत्व दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावाद्भेदेन भाव्यम् । इह तु भेदाऽभावात् प्रकृतिप्रत्ययार्थानुपपत्ति । अथ वा 'तप कर्मकस्ये'ति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रित, तच्च विरुद्धमिति भाव । अव यवतपिरिति । विशेषतपिर्ज्ञानलक्षण तप इत्यर्थ । दुग्धे गौरिति । गौर्मुञ्चति पय इत्यर्थ । दुहर्द्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेऽपि सकर्मकत्वादप्राप्ते वच नम् । 'फल पच्यत' इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम् । अन्ये

उ ]स व्यापार एव। तदेव चाऽर्जनमिति बोध्यम्।तत्र क्रियाविशेषणत्वात्'स्तोकमेधते' इत्यादाविव तपस कर्मत्वमिति । भाष्ये–तपेरयमौणादिकोऽस्कारो भावसाधन इति । इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम् । अव्युत्पन्नत्वमिति पाणिनिसम्मते पक्षे तु 'तप 'शब्दस्य सन्तापोऽर्थ इति बोध्यम् । एतदेव परसम्मताऽन्वाख्याने न दर्शितम् । ननु प्रकृतिप्रत्ययोरप्रकृतत्वात्प्रश्नाऽनुपपत्तिरत आह–तापसेनेति।प्रकृत्यर्थस्यैवेति । सन्तापस्येत्यर्थ । तस्यैव तप पदार्थत्वादिति भाव । प्रत्ययार्थत्वम्। तिङ्प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसाहचर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात्, तथाऽपि भाष्यप्रामाण्यात्सा मान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव । अत एव 'स्तोक'मित्यादे क्रियाविशेषणस्यैकत्वनपुंसकत्वे अपि । 'एतान् पोषानपुष'दित्यादौ पुंस्त्वबहुवचने इति बोध्यम् । ज्ञानलक्षण तप इति । ज्ञानजनकोपवासादिरूप मित्यर्थ । स एव सन्ताप इति भाष्यस्य–स एव सन्तापविशेष इत्यर्थ । विशेषेऽ पि सामान्यसत्त्वात् 'स एव'त्यस्य नाऽनुपपत्ति । भाष्ये 'एतान् पोषा'नित्यस्य विशेषसमर्पकाणि 'गोपोष'मित्यादीनि घञन्तानि बोध्यानि । अत्यन्तमप्राप्त इति ।

१ 'प्रत्ययार्थ स्यात्स एव प्रकृत्यर्थ' । २ 'अपुष्यत्' । ३ 'कर्मवद्बहुल भवतीति' ।
४ इदं क्वचित्र । ५ अत्र–'बहुलवचन परस्मैपदार्थम्' इति वार्त्तिकमासीदित्यन्ये ।

बहुलवचनेन । न हि परस्मैपदमिष्यते ॥ ॥-॥ सृजियुज्योः श्यस्तु ॥-॥ सृजियुज्योरकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। श्यस्तु भवति। सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यश्चिणात्मनेपदार्थः । सृज्यते मालाम्, असर्जि मालाम्। युजेस्तु न्याय्ये कर्मकर्तरि —यकोऽभावाय।

---

प्र ]त्याह —पचिरत्र विषये द्विकर्मको वृक्षस्य पाकमन्तरेण फलपाकाऽसम्भवाद्वृक्षो ऽकथितं कर्म, तस्यैव च यदा कर्तृत्वविवक्षा तदाऽस्य कर्मवद्भावः । एतद्विषय एव च विषये कर्मवद्भाव इष्यते न पुनरोदनं पचतीत्यादौ । श्रद्धोपपन्न इति । श्रद्धायुक्ते कर्तरीत्यर्थः । चिणात्मनेपदार्थ इति। यकः स्वेनैव बाध्यते न तु चिणित्यर्थः। श्यनि तु प्रत्ययस्याद्युदात्तत्व(भवति), यकि तु सार्वधातुकानुदात्तत्वे यक एवोदात्तत्वमिति श्यन्यकोरत्र स्वरे विशेषः । सृज्यते मालामिति । श्रद्धया मालां निष्पादयतीत्यर्थः । असर्जि मालामिति । मालां निष्पादितवानित्यर्थः । यकोऽभावायेति । अकार-

---

उ ]तुल्यक्रियत्वस्याप्यभावादिति भावः । सकर्मकाणामप्रतिषेधे गोत्तरमस्योक्तत्वात् दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताऽऽत्मनेपदेनास्य क्रियार्थत्वोचितेति ध्वनयन्नाह–अन्ये त्वाहुरिति । वृक्षस्य पाकमिति । वृक्षनिष्ठपाकानुकूलव्यापारं विनेत्यर्थः । तदा च फलस्य कर्तृत्वं बोध्यम्। एतच्च पचेः फलपाकानुकूलव्यापाराऽनुकूलव्यापारोऽर्थः । तत्र फलपाकानुकूलव्यापाराऽऽश्रयत्वात् 'कर्तुरीप्सिततम'मिति वृक्षः कर्म। तस्य कर्तृत्वविवक्षायां भाष्योदाहरणमाश्रयणात्।'अकथितं च' इत्यत्र अकथितपदमविवक्षितपरम्। कर्मत्वेनाऽविवक्षितमित्यर्थः। किं तेन तर्हि विवक्षितमत आह–तस्यैव चेति। न तु तत्सूत्रविषयता अस्य, दुहादिषु भाष्येऽपाठात्। 'गौर्दुग्धे' इत्यपि 'कर्तुरीप्सिततम'मिति कर्मत्वे एवोदाहरणं बोध्यम्। निर्गमानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तं, तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वाऽनुपपत्त्यादित्याहुः । यद्यपि फलस्य कर्तृत्वविवक्षायां कर्मणि लकारेऽपीदं सिध्यति तथाऽप्युदुम्बरस्य कर्तृत्वविवक्षायामुदुम्बरः फलं पचतीत्येतद्व्यावृत्त्यै इदम् । न पुनरोदनमिति। कर्मस्थक्रियया तुल्यक्रियत्वाऽभावादिति भावः । श्रद्धायुक्ते कर्तरीति । मुख्ये कर्तरीत्यर्थः । श्रद्धा–आदरः । तेन युक्तो मुख्य एव, तस्यैव क्रियायामादरादिति बोध्यम्। तेनाऽत्यन्ताऽप्राप्तौ विध्यर्थोऽयमतः । श्यन्यकोर्विशेषमाह–श्यनि त्विति । मुख्यकर्तृत्वं निदर्शयति–श्रद्धयेति । तत्र सूत्र कर्तरि श्यन्सिद्धः । चिणात्मने पदे एव कर्मवद्भावप्रयोजने । श्यनस्तु कर्मवद्भावप्रयुक्तयका बाधा माभूदिति प्रतिप्रसवमात्रम् । 'दैवादिकः सृजिरकर्मक एव'ति तदश्रद्धेयमेवेति केचित् । न्याय्ये इति । न्याय्यः —उत्सर्गसूत्रं 'कर्मवत्कर्मणे'ति । तदनपेक्षे । तत्प्रवृत्तियोग्ये इति यावत् । सकर्मकत्वात्तदप्राप्तौ विधिः । श्यनस्तु अप्राप्त एव विधीयत यक[illegible]नेति

युज्यते ब्रह्मचारी योगम् ॥*॥ करणेन तुल्यक्रियः कर्ता बहुलम् ॥*॥ करणेन तुल्यक्रियः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। परिवारयन्ति कण्टकैर्वृक्षम्। परिवारयन्ते कण्टका वृक्षमिति ॥*॥ स्रवत्यादीनां प्रतिषेधः ॥*॥ स्रवत्यादीनां प्रतिषेधो वक्तव्यः। स्रवति कुण्डिकोदकं, स्रवति कुण्डिकाया उदकम्। स्रवन्ति वल्मीकान्युदकं, स्रवति वल्मीकेभ्य उदकमिति ॥ स तर्हि प्रतिषेधो वक्तव्यः?॥ न वक्तव्यः। 'तुल्यक्रियः' इत्युच्यते। क्रियान्तरं चाऽत्र गम्यते। इह तावत्स्रवति कुण्डिकोदकमिति,—विसृजतीति गम्यते।'स्रवति कुण्डिकाया उदक'मिति,–निष्क्रामतीति गम्यते। 'स्रवन्ति वल्मीकान्युदक'मिति,–विसृजन्तीति गम्यते।स्रवति वल्मीकेभ्य उदकमिति,–पततीति गम्यते ॥*॥ भूषा कर्मकिरादिसनां चाऽन्यत्रात्मनेपदात् ॥*॥ भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्प्रतिषेधो वक्तव्यः। भूषयते कन्या स्वयमेव। अबुभूषत कन्या स्वयमेव।

प्र ]प्रक्षेपाद्युपसाधनायेत्यर्थः। युज्यत इति। योगो ब्रह्मचारिणं युनक्ति, सम्बध्नातीत्यर्थः। ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां 'युज्यते ब्रह्मचारी योग'मिति भवति। करणेनेति। बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति। स्रवति कुण्डिकेति। निष्क्रामदुदकं निष्क्रामयतीत्यस्मिन्नर्थे तुल्यक्रियत्वात् प्राप्तः कर्मवद्भावो निषिध्यते। विसृजतीति गम्यत इति।तथा च लोके कथ्यते 'कृपणोऽसौ न किञ्चित् स्रवती'ति। विसर्गश्च दानमुच्यते इति तुल्यक्रियत्वाऽभावः। भूषाकर्मेति। कर्मशब्दः क्रियावाची। भूषाफलं च शोभाख्यं कर्मणि दृश्यते इति कर्मस्था भूषा। अण्यन्तार्थं च भूषाग्रहणं,ण्यन्तानां च वक्ष्यमाणेन यक्चिणो प्रतिषेधस्य सिद्धत्वात्। तेन अलं-

उ.]विशेष। यक्णोऽभावायेत्यस्य 'इयस्वि'त्यादि। योगो ब्रह्मचारिणमिति–पूर्वकक्षेयम्। 'सम्बध्नाती'त्यस्य सम्बन्धानुकूलव्यापारवान् भवतीत्यर्थः। तत इति। प्रतियोगित्वावच्छिन्नः सम्बन्धो युजेरर्थः।प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम्। यत्तु 'योग'मिति प्रतियोगे द्वितीया। एवञ्चाऽकर्मकत्वात्कर्मवद्भावे सिद्धे यगाद्यभावाय इयमानविधानार्थमिदमिति, तन्न, 'सृजियुज्यो'रिति वार्तिके 'सकर्मकयो'रिति भाष्यविरोधापत्तेः। भाष्ये परिवारयन्ते कण्टका इति। न च 'णिचश्चे'त्यनेनैवात्मनेपदं सिद्धम्, यक्चिणौ तु 'णिश्रन्थिग्रन्थी'ति प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यं, कर्तृगामित्वाऽभावेऽप्यात्मनेपदार्थं चिण्वद्भावार्थं च वार्तिकस्याऽवश्यकत्वात्। स्रवति कुण्डिका उदकमित्यस्य निष्क्रामयतीत्यर्थः। स्रवति कुण्डिकाया इत्यस्य निष्क्रामतीत्यर्थः। तदाह–निष्क्रामदिति। ननु विसर्गोऽपि विभागाऽनुकूलव्यापारो निष्क्रमणादनतिरिक्तोऽत आह–विसर्गश्च दानमिति। मुख्यदानपदार्थस्याऽत्राऽऽ-

१ 'यति'। 'वृक्ष'। २ इदं क्वचिन्न।

मण्डयते कन्या स्वयमेव। अममण्डत कन्या स्वयमेव। किरादि–अवकिरते हस्ती स्वयमेव। अवाकीर्ष्ट हस्ती स्वयमेव। [गिरते ग्रामः स्वयमेव। अगीर्ष्ट ग्रामः स्वयमेव]। सन्– चिकीर्षते कटः स्वयमेव। अचिकीर्षिष्ट कटः स्वयमेव॥

न दुहस्नुनमां यक्चिणौ ॥ ३।१।८९ ॥

॥*॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानम्॥*॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानं कर्तव्यम्। णि–कारयते कटः स्वयमेव। अचीकरत कटः स्वयमेव। णि॥ श्रि–उच्छ्रयते दण्डः स्वयमेव। उदशिश्रियत दण्डः स्वयमेव। श्रि॥ ब्रूञ्–ब्रूते कथा स्वयमेव। अवोचत कथा स्वयमेव॥ भारद्वाजीयाः पठन्ति ॥*॥ 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानम्' ॥*॥ इति ॥ [न दुहस्नुनमां] ॥

प्र ]कुरुते स्वयमेव कन्या, अलङ्कृता स्वयमेव कन्येति भवति। अवकिरत इति। हस्तिनं धर्मिणमास्थायादिनाऽवकिरति, तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते। चिकीर्षत इति। करोतिक्रियापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्थैव, अर्थाच्च करोतेः प्राधान्यं, तदर्थत्वादिच्छायाः। [कर्मवत्कर्मणा तुल्यक्रियः] ॥

न दुहस्नु। यक्चिणोरिति। आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदा न्तर्भावितण्यर्थाः सकर्मका भवन्ति तदा कर्मवद्भावात् प्राप्तौ यक्चिणौ प्रतिषिध्येते। यथा 'विकुर्वते सैन्धवाः'। वल्गन्तीत्यर्थः। तान्यदा अन्यो वल्गयति तदा तेषां कर्म

उ ] येष इति भावः। सिद्धत्वादिति। वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि स्वतन्त्रविषये चिण्वद्भावाऽभावार्थ ण्यन्तेऽपि एतत्प्रवृत्तिरावश्यका, 'अन्यत्रात्मनेपदा'दित्यनेन तस्याऽप्यत्र निषेधात्। 'णिश्रन्थी'त्यनेन तु न सिद्धिः, न हि चिण्निषेधेन चिण्वद्भावनिषेधो लभ्यत इति चिन्त्यमेतत्। कर्तृत्वेन हस्तीति। अवकिरते–व्याप्तो भवतीत्यर्थ इति भावः। आत्मस्थाया विक्षेपणेन व्याप्त करोतीत्यर्थः। भाष्ये–अवाकीर्ष्टेति। 'अन्यत्राऽऽत्मनेपदा'दित्युक्तेश्चिण्वद्भावोऽपि नेति भावः। अत एवेदं वार्तिकं 'न दुहे'त्यत्र न पठितम्। चिकीर्षेरिच्छावाचकत्वात्कर्मस्थक्रियत्वाऽभावमाशङ्क्याह–करोतिक्रियापेक्षमिति। ननु सनः परत्वाच्चस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह–अर्थाच्चेति। [कर्मवत्कर्मणा] ॥

न दुहस्नुनमा। अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियकर्त्रभावात्कर्मवत्त्वाऽप्राप्तौ निषेधो व्यर्थोऽत आह—आत्मनेपदेति। सकर्मका भवन्तीति। 'तनो व्यापारनिवृत्तौ यदा कर्मकर्तृत्व'मिति शेषः। व्यक्तपतेति। अत्र 'चिण्वद्भावोऽपि ने'ति वैयग्रायमाहु केचित्। 'कृत' इत्यनुवर्तमाने 'वे शब्दकर्मणः' 'अकर्मकाच्चे'त्यत्राऽयं निर्दिष्टः। परे तु पक्षे चिण्वद्भावे 'व्यवारिषते'त्यपि

कुषिरजो प्राचां श्यन्परस्मैपदं च ॥ ३।१।९० ॥

॥*॥ कुषिरजो श्यन्विधाने सार्वधातुकवचनम् ॥*॥ कुषिरजो श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम् ॥*॥ अवचने हि लिङ्लिटो प्रतिषेधः ॥*॥ अक्रियमाणे हि सार्वधातुकग्रहणे लिङ्लिटो प्रतिषेधो वक्तव्यः स्यात्। चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। क्रियमाणे चापि सार्वधातुकग्रहणे-कैतीह कुष्णाना पादो इत्यत्रापि प्राप्नोति। श्यना च स्यादीनां बाधनं प्राप्नोति। कोषिष्यते पादः स्वयमेव। कोषिता पादः स्वयमेव। अकोषि पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अरञ्जि वस्त्रं स्वयमेव॥ रङ्क्ता वस्त्रं स्वयमेव।

प्र ]वम्।पुनः सौरुर्यानिमयात्कर्तृत्वविवक्षया-'विकुर्वते सैन्धवाः स्वयमेव' 'व्यकुर्वत सैन्धवाः स्वयमेवे'ति यक्चिणौ न भवतः। 'उत्पुच्छयते गौ'रित्यत्राप्यन्तर्भावितण्यर्थं वाक्कर्मवद्भावाद्यक्चिणौ प्राप्तिः। मृते कथेति। वचनं शब्दप्रयागन फलवात्कर्मत्वम्। [ न दुहस्नुनमां यक्चिणौ ] ॥

कुषिरजो। यकि प्राप्ते श्यन्विधीयते, तेन श्यनि 'ञ्नित्यादि'रित्याद्युदात्तं पदं भवति। 'शप्श्यनोर्नित्य'मिति नित्यश्च नुमागमः,-कुष्यन्ती जङ्घेति। सार्वधातुकवचनमिति। सार्वधातुके विषयभूते श्यन्परस्मैपदे भवत इत्यर्थः। कुष्णाना इति। 'ताच्छील्यवयोवचने'ति चानश्। तत्र श्यन् प्राप्नोति, परस्मैपदं चान्वाचयशिष्टं मन्यते। श्यना चेति। विशेषविहितत्वादिति भावः। यक्प्रतिषेधस

उ ] बोध्यम्। यदि चिण्प्रतिषेधे चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्तर्हि 'भूषाकर्मे'ति पूर्ववार्तिकमध्यत्रैव कुर्यात्। एतद्वा तत्रैव कुर्यात्। विभेदेन करणाच्च चिण्वद्भावस्य प्रतिषेधोऽनेन नेति ध्वनयति। चिण उदाहरणमेकवचने बोध्यमित्याहुः। भारद्वाजीयाना 'हेतुम'त्पदत्यागे बीजमाह-उत्पुच्छयतेति। अत्र यगादिकं न। मृते कथेति। 'अत्रे'ति शेषः। प्रधानफलकं वचनं सूत्रोऽर्थः, प्रधानस्य कर्मनान्तरनिष्टत्वाच्छब्दे प्रधानत्वविशेषदर्शनाच्च कर्मस्थत्वं बोध्यम् ॥ [ न दुहस्नु ]।

कुषिरजो। यश्श्यनोर्विशेषं दर्शयति-ञ्नित्यादिरित्यादिना। परस्मैपदस्य सार्वधातुके विधानासम्भवादाह-विषयेति। लिङ्लिटो प्रतिषेध इति। तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः। ननु 'कुष्णाना' इत्यत्र परस्मैपदाऽप्राप्तेस्तत्सहचरितः श्यनपि नेत्यत आह-परस्मैपदञ्चेति। विशेषविहितत्वादिति। लङ्लुङ्लृङ्व्यतिरिक्ते श्यनचारिताच्र्यादिदचिन्त्यम्। 'परत्वाच्चा' इत्युचितमिति कश्चित्।

१च क्वचिन्न।२'इहापि प्राप्नोति कतीह कुष्णाना पादा इति'।३'इह क्वचिन्न'।४इतः परं 'रङ्क्ष्यते' इत्याद्युदाहरणं क्वचित्। ५ इतः परम्-'अरञ्जी'त्याद्युदाहरणं क्वचित्।

यत्तावदुच्यते "सार्वधातुकग्रहणं कर्तव्य"मिति। न कर्तव्यम्। प्रकृतमनुवर्तते ॥ क्व प्रकृतम्? ॥ 'सार्वधातुके यक्'इति ॥ यदि तदनुवर्तते पूर्वस्मिन्योगे किं समुच्चयो–ले च सार्वधातुके चेति, आहोस्विल्लग्रहणं सार्वधातुकविशेषणम्? ॥ किं चातः? ॥ यदि समुच्चयः 'कर्तीह भिन्दानाः कुसूलाः' इत्यत्रापि प्राप्नोति। अथ लग्रहणं सार्वधातुकविशेषणम्,–लिङ्ग्रहणेन सिध्यति–बिभिदे कुसूलः स्वयमेव, भित्सीष्ट कुसूलः स्वयमेवेति ॥ अस्तु लग्रहणं सार्वधातुकविशेषणम् ॥ ननु चोक्तं 'लिङ्ग्रहणेन सिध्यती'ति ॥ लिङ्ग्रहणमपि प्रकृतमनुवर्तते॥ क्व प्रकृतम्?॥ 'कास्प्रत्ययादाममन्त्रे लिटि' 'लिङ्याशिष्य'ङिति च। एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं–'कर्तीह कुर्वाणाः पादाः' इत्यत्रापि प्राप्नोतीति। अत्रापि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते ॥ यदप्युच्यते–' श्यना च स्यादीनां बाधनं प्राप्नोती'ति। यक्प्रतिषेधसम्बन्धेन श्यनं वक्ष्यामि। 'न दुहस्नुनमां यक्चिणौ'। ततः 'कुषिरजोः प्राचाम्'। कुषिरजोः प्राचां यक्चिणौ न भवतः। ततः 'श्यन्परस्मैपदं चे'ति ॥ यद्येवं तर्हि यको विषये श्यन्भवत्येव चिणोऽपि विषये प्राप्नोति–अकोषि पादः स्वयमेव, अरञ्जि वस्त्रं स्वयमेव ॥ एवं तर्हि द्वितीयो योगविभागः करिष्यते [नदुहस्नुनमाम्]। न दुहस्नुनमां चिण्भवति। ततो 'यक्'। 'यक् न भवति दुहस्नुनमाम्। ततः 'कुषिरजोः प्राचाम्'। [कुषिरजोः प्राचाम्] यक् न भवति। ततः 'श्यन्परस्मैपदं चे'ति। अथ वाऽनुवृत्तिः करिष्यते–'स्यतासी लृलुटोः' च्लि लुङि च्लेः सिज्भवतीति। 'कर्तरि शप्'। स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवतीति। 'दिवादिभ्यः श्यन्'। स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवतीति। 'कुषिरजोः प्राचां श्यन्परस्मैपदं च'। स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवतीति ॥ अथ वाऽन्तरङ्गाः स्यादयः ॥ कान्तरङ्गता?॥ लकारावस्थायामेव स्यादयः। सार्वधातुके श्यन् ॥ [ कुषिरजोः प्राचां श्यन् ] ॥

]न्धेनेति। ननु यत्र यक् प्राप्तस्य प्रतिषेधस्तत्र श्यन्परस्मैपदे भवतो नान्यत्रेति स्यादि श्यन् न भवति। लकारावस्थायामेवेति। अकृतेष्वेव लादेशेषु विशेषविहिताः स्यादयो

द ]भाष्ये–पूर्वस्मिन्योग इति। 'कर्मवत्कर्मणा' तत्र। ले च सार्वधातुके चेति। स्सार्वधातुकयोर्वान्यत्वेन स्थितः कर्मवदित्यर्थः। भिन्दाना इति। चनत्। ह्यापि लेति। 'कुषिरजो' इत्यत्रापि। लादेशसार्वधातुकविषय इत्यर्थ इति भावः। प्रकृतेष्वेव लादेशेष्विति। निरवकाशत्वाऽभावेऽपि विशेषविहितत्वाच्च पूर्वप्रवृत्ति

१ 'कुसूल'। २ च क्वचिन्न। ३ 'इति प्राप्नोति'। ४ 'इत्यापि'।
५ इदं क्वचिन्न। ६ इति क्वचिन्न। ७ 'व्यवस्थया'।

व्यम् ॥ तर्त्तहि वक्तव्यम् ?॥ न वक्तव्यम् । गत्यर्थाना क्त कर्त्तरि विधीयते, तेन योगादजर्यं कर्त्तरि भविष्यति ॥ गत्यर्थानां वै क्त कर्मण्यपि विधीयते, तेन योगादजर्यं कर्मण्यपि प्राप्नोति॥ जीर्यतिरकर्मक ॥ भावे तर्हि प्राप्नोति ॥ सङ्गतग्रहणमिदानीं किमर्थं स्यात् ? ॥ कर्तृविशेषण सङ्गतग्रहणम् । सङ्गत कर्तृ चेद्भवतीति । तद्यथा-'हृषैर्लोमसु' इति लोमानि चेत्कर्तॄणि भवन्तीति॥

## वद. सुपि क्यप् च ॥ ३।१।१०६ ॥

॥-॥वद सुप्यनुपसर्गग्रहणम्॥*॥ वद सुप्यनुपसर्गग्रहण कर्तव्यम्। इह मा भूत्-प्रवाद्यम्,अपवाद्यमिति ॥तर्त्तहि कर्तव्यम्?॥न कर्तव्यम्।'अनुपसर्गे'

प्र ]त्युदाहरणे प्रदर्शनीय इति भाव। गत्यर्थानामिति। यद्यपि सङ्गमन सङ्गतमिति भावे इह क्तो विहितस्तथापि गत्यर्थाना क्त प्रत्यय कर्त्तरि दृष्टो-गतो ग्राम देवदत्त इति । ततो गत्यर्थधातुसाहचर्यादजर्यमिति कर्त्तरि निपातनमिति मन्यते । जीर्यतिरकर्मक इति । सोपसर्गस्य सकर्मकत्वेपीहानुपसर्गस्य निपातनादकर्मकत्व बोद्धव्यम । द्रव्यकर्माभावाश्रयेण चाऽकर्मकत्वमुक्तम् । कालादिना तु सर्वस्यैव सकर्मकत्वम्। सङ्गतग्रहणमिति।नहि गमेर्भावस्य जीर्यतेर्भावेन सामानाधिकरण्यमुपपद्यत इति प्रश्न । कर्तृविशेषणमिति । वैयधिकरण्यमनयो पदयो स्यादिति भाव । लोमानि चेदिति । तथा च हृष्ट लोमभिर्हृषित लोमभिरिति वैयधिकरण्येऽपाद्विकल्पो भवति । तस्मात्कर्त्तरीति वक्तव्यम् । अथ वा सामानाधिकरण्यत्यागेन वैयधिकरण्याश्रयणस्याऽयुक्तत्वान्निपातनाद्वा कर्त्तर्येव प्रत्ययो भवतीति स्थितम् ॥

उ ]मिति मैत्रीपर्यायस्य भावक्तान्तस्यैवाऽत्र ग्रहात्। अतस्तत्तात्पर्यमाह-तथापीति। तेन योगादिति भाष्यस्य,-तेन साहचर्यादित्यर्थ । सोपसर्गस्येति । अर्थान्तर स्यैति भाव । ननु कालादिकर्मसद्भावात्कथमकर्मकत्वन्तत्राह-द्रव्येति । एतच्च 'गतिबुद्धी'ति सूत्रे 'कालाध्वनो'रिति सूत्रे च निरूपितम् । 'कर्त्तरी'ति वार्तिकारम्भवाद्याह भाष्ये-भावे तर्हीति। गत्यर्थेभ्यो विशिष्य विधानेन भावेऽपि 'क्त'दर्शनादिति भाव । प्रत्याख्यानवाद्याह-सङ्गतग्रहणमिति । तथा च तत्सामर्थ्यात्कर्त्तर्येव भविष्यति नाऽर्थो वार्तिकेनेत्यर्थ । वार्तिकारम्भवाद्याह-कर्तृविशेषणमिति । कर्तृपदाऽध्याहारेणेति भाव । तद्व्याचष्टे-वैयधिकरण्यमिति । 'अजर्यं सङ्गतेने'त्युदाहरणमिति भाव । एवञ्च तत्सामर्थ्याऽभावेन भावे प्रत्ययव्यावृत्त्यर्थं-कर्त्तरीति वाच्यं, निपातनसामर्थ्याद्वा कर्त्तरीति भाव । वैयधिकरण्येऽपीदिति । कर्त्तरि निष्ठाया सामानाधिकरण्येऽपि तद्विकल्प इति भाव ॥[अजर्यं सङ्गतम्] ॥

१ सङ्गतं चेत्कर्तृ भवतीति' । २ इति क्वचिन्न ।
३ 'सवाद्य' । ४'वक्तव्य' ।

इति वर्तते ॥ एव तर्ह्यन्वाचष्टे—'अनुपसर्ग'इति वर्तते' इति ॥ नैतदन्वाख्येयम्—'अधिकारा अनुवर्तन्ते' इति । एष एव च न्यायो यदुत 'अधिकारा अनुवर्तेर'न्निति ॥ [ वद सुपि क्यप्च ] ॥

## भुवो भावे ॥ ३।१।१०७ ॥

भावग्रहण किमर्थम् ? ॥ कर्मणि मा भूदिति ॥ नैतदस्ति प्रयोजनम् । भवतिरयमकर्मक । अकर्मका अपि वै धातव सोपसर्गा सकर्मका भवन्ति [इति]नेनाऽनुभव्यमामन्त्रणमित्यत्रापि प्राप्नोति॥ एतदपि नास्ति प्रयोजनम् । 'अनुपसर्ग' इति वर्तते । [ ॥-॥ भावग्रहणमुत्तरार्थम ] ॥*॥ उत्तरार्थं तर्हि भावग्रहण कर्तव्यम् । 'हनस्त च'। भावे यथा स्यात्—ब्रह्मत्या वर्तते॥ क मा भून्—'श्वघात्यो वृषल' इति ॥ [ भुवो भावे ] ॥

## हनस्त च ॥ ३।१।१०८ ॥

॥*॥ हनस्तश्चिन्स्त्रिया छन्दसि ॥*॥ 'हनस्त चे'त्यत्र 'चिन्स्त्रिया छन्दसि वक्तव्य । 'ता भ्रूणहत्या निगृह्यानुचरणम्'। 'अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृहाण॥स्त्रियामिति किमर्थम् ?॥आग्ने ते दस्युहत्याय॥ छन्दसीति किमर्थम् ?॥ दस्युहत्या, ब्रह्मत्या वर्तते ॥

## एतिस्तुशास्वृदृजुष क्यप् ॥ ३।१।१०९ ॥

'क्य ब्विति' वर्तमाने पुन क्यब्ग्रहणं किमर्थम्?॥ क्यबेव यथा स्याद्

---

प्र ] वद· सुपि।नैनदिति।यत्राधिकारस्य विच्छेदोऽवच्छपरिज्ञान वा सिंहावलोकितन्यायाश्रयण वा तत्रावश्यवक्तव्यो विशेष ।एवमादौ तु प्रयोजनाभावादवक्तव्यमर्थ ।

भुवो भावे । भवतिरकर्मक इति । ननु प्राप्त्यर्थ सकर्मकोऽस्ति । नैव दोष । प्राप्त्यास्मिन्नार्थस्यैनद्ग्रहणात् । ननु काव्यादिरर्थे प्राप्नोति । अनभिधानात्कास्यादिकर्मणि न भविष्यतीति मन्यते । [ भुवो भावे ] ।

हनस्त च। दस्युहत्यायेति।छन्दस्येव नपुंसक,भाषायान्तु स्त्रीलिङ्गमेव।

---

उ ] वद सुपि । यत्राऽधिकारस्येति । यथा सम्बन्धमनुवर्तिष्यते'त्यत्रा'मि त्यादौ । अवधीति । यथा'ऽलुगुत्तरपदे' इति । सिंहेति । यथा 'प्रत्यय'इत्यत्र 'गर्वत्रे'ति ॥ [ वद सुपि क्यप्च ] ।

भुवो । प्राप्यस्यादिति । धातुपाठे इति भाव । प्रसिद्धत्वाच्चेत्यपि बोध्यम ॥

हनस्त च । भाषायान्त्विति। शब्दशक्तिस्वभावादेतद्विहितस्य स्तस्य क्लीब मित्यर्थं ॥ [ हनस्त च ] ॥

---

१ 'इत्येव' । २ 'रकर्मक' । ३ 'भाष्य' । ४ इद लुप्त स्यात्' । ५ 'इह मा भूत्' । ६ 'छन्दसीति वक्तव्य' । ७ 'त्वा' । ८ 'गृहाणे' ।

दन्यत्प्राप्नोति तन्मा भूदिति ॥ किं चान्यत्प्राप्नोति ?॥ ण्यत् ॥ 'ओरावश्यके ण्यत स्तौते क्यप्पूर्वविप्रतिषिद्ध'मिति वक्ष्यति, स पूर्वविप्रतिषेधो न पठितव्यो भवति । अथवा हनस्तश्चिस्त्रिया छन्दसि चोदित, स न वक्तव्यो भवति ॥*॥ क्यब्विधौ वृ ग्रहणम् ॥*॥ क्यब्विधौ वृन्ग्रहण कर्तव्यम् । इह मा भूत्-'वार्या ऋत्विज ' इति ॥*॥ अन्जेश्चोपसङ्ख्यान सञ्ज्ञायाम् ॥*॥ सञ्ज्ञायामन्जेश्चोपसङ्ख्यान कर्तव्यम् । आज्यम् । यदि क्यप्-वृद्धिर्न प्राप्नोति । तस्माण्ण्यदेष । यदि ण्यत्,-उपधालोपो न प्राप्नोति । तस्मा क्यबेवेष । ननु चोक्तम्-'वृद्धिर्न प्राप्नोती ति ?॥ आङ्पूर्वस्यैष प्रयोगो भविष्यति ॥ यद्येवमवग्रह प्राप्नोति ॥ न लक्षणेन पदकारा अनुवर्त्या, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षण पद कर्तव्यम् ॥ [ एनिस्तुशास्वृदृजुष ] ॥

## ई च खन ॥ ३।१।१११ ॥

दीर्घोच्चारण किमर्थं न 'इ च खन ' इत्येवोच्येत ?॥ का रूपसिद्धि -

प्र ] एतिस्तु । अथवेति । पूर्वस्मात् क्यपोऽस्य वैलक्षण्यप्रदर्शनाय पृथग्ग्रहण कृतम् । तेन पूर्व क्यप्छन्दसि क्रिया चिद्भवति । क्यब्विधाविति । 'ईडवन्दवृ शंसदुहा ण्यत इति' वार्यशब्दस्याद्युदात्तविधानादेतज्ज्ञायते।नन ह्रीङिवन्दिभ्यामा त्मनेपदिभ्या साहचर्याद्वृशब्देन वृणातिर्गृह्यते । तस्माण्ण्यदेष इति । ननु स्वर भेदो भवति, क्यपि सत्याद्युदात्त पदं, ण्यति सत्यन्तस्वरितम् । नैष दोष । 'नञ्वि षयस्यानिसन्तस्ये'त्याद्युदात्तविधानात् । न लक्षणेनेति । संहिताया एव नित्यत्वम् । पदविच्छेदस्य तु पौरुषेयत्वम् । तथा च यत्रार्थनिश्चयाभावस्तत्राऽवग्रहो न क्रियते। तदुक्तम्-'हरिद्रूरनवगृह्यते' इति । हरिद्रूरित्यत्र किं हरिशब्द इकारान्त, अथ हरिच्छब्दस्तकारान्त इति सन्देहात् ॥ [ एतिस्तुशास्वृदृजुष ] ।

ई च खन । दीर्घोच्चारणे भाष्यकारेण प्रत्याख्याते चेचेत् प्रश्लेषनिर्देशान द्वितीय इकारो 'ये विभाषे'त्यात्वस्य पक्षे परत्वात्प्राप्तस्य बाधनार्थ इत्याहु ।

उ ] एतिस्तु। आत्मनेपदिभ्यामिति। अकारवद्विकरणाभ्यामित्यपि बोध्यम्। एत दपि उत्तरसाहचर्यसप्यनुग्राहकम् । वृणातिरिति। 'वृञ् सम्भक्तौ'वित्ययम् । एवञ्च क्यप् वृञ एवेति भाव । वस्तुतो व्याख्यानादत्र वृञो ग्रहणमित्येव तत्त्वम् । संहिताया एव नित्यत्वमिति । अविच्छिन्नपारम्पर्यत्वमेवाऽत्र नित्यत्वम् । अर्थ निश्चयाऽभाव इति । अन्यशब्दस्य रूढत्वादाद्यर्थोऽस्मिन्न इति निश्चयाऽभाव इत्यर्थ । 'समासे संहिता नित्य'त्यवग्रहस्य साधुत्वाऽभावात्सम्प्रदायमात्रशरणस्य तस्य लक्षणाऽविषयते'त्यर्थं मन्ये ॥ [ एतिस्तुशास्वृद ] ।

१ 'अभेश्चोपसङ्ख्यान सञ्ज्ञायां' । २ 'स्पवर' । ३ इद क्वचिन्न ।

स्येयम्? ॥ आद्गुणेन सिद्धम् ॥ न सिध्यति । 'षत्वतुकोरसिद्धः' 'एकादेश' इत्येकादेशस्याऽसिद्धत्वात्तुगागम्येत ॥ नैतदस्ति । पदान्तपदाद्योरेकादेशोऽसिद्धो, नैष पदान्तपदाद्योरेकादेशः । तस्मात् 'ई च खनः' इत्येव वक्तव्यम् ॥

## भृञोऽसंज्ञायाम् ॥ ३।१।११२ ॥

असंज्ञायामिति किमर्थम्? ॥ भार्या ॥ भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात् ॥*॥ भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ किं कारणम्? ॥ 'अन्येन विहितत्वात्' । अन्येन लक्षणेन स्त्रियां क्यब्विधीयते,—'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति ॥ प्रतिषेधः इदानीं किमर्थं स्यात्? ॥*॥ प्रतिषेधः किमर्थ इति चेत्पुंसि संज्ञाप्रतिषेधार्थः ॥*॥ प्रतिषेधः किमर्थ इति चेत्पुंसि संज्ञाऽ-

---

प्र ] तदुक्तम् । क्यप्सन्नियोगेन विधीयमानस्यैत्वस्यान्तरङ्गत्वात् । आत्वस्य तु यकारादावुपदेशे विधीयमानस्याऽऽत्वस्य बहिरङ्गत्वाद्विप्रतिषेधाऽभावात्प्राप्त्यभावात् ॥

भृञोऽस । असंज्ञायामिति किमर्थमिति । क्रियमाणेऽपि प्रतिषेधे इष्टं न सिध्यतीति प्रश्नः ॥ भार्येति । गृहिण्या इह संज्ञेति क्यबभावे ण्यत्प्रत्ययः ॥ अनर्थक इति । भृञ इति प्राप्तस्य प्रतिषेधः आनन्तर्यात्, नतु लक्षणान्तरप्राप्ते, व्यवधानादिति भावः । प्रतिषेध इदानीमिति । प्रतिषेधविधानसामर्थ्याल्लक्षणान्तरेण प्राप्तस्यापि क्यपः प्रतिषेधो भविष्यतीति भावः । अर्थस्संज्ञेति । संज्ञायत इति संज्ञेति । कर्म

---

उ ] ई च खनः । क्यप्सन्नियोगेनेति । नन्वन्तरङ्गे इत्वे कृते एकदेशविकृतन्यायेन प्राप्तस्याऽऽत्वस्य वारणार्थं तदावश्यकम् । इत्वन्तु परे चरितार्थम् । किञ्च 'अच कर्तृयकी'ति सूत्रे भाष्ये 'य विभाषे'त्यत्र 'यि' इत्यस्य विषयसप्तम्यन्ततया उक्ततया परत्वेन क्यपः पूर्वमेवात्र तत्र परत्वात्सवर्णदीर्घे एकदेशविकृतन्यायेन 'ई च खनः' इत्यस्य प्रवृत्तौ 'खेय'मिति स्यात्तद्वारणार्थं दीर्घनिर्देश इति कथञ्चिदाशय इति चिन्त्यमेतदिति केचित् । भाष्याशयस्तु व्यवस्थितविभाषयाऽनाऽऽत्वाऽप्रवृत्तिरिति । इत्वं तत्राऽप्यावश्यकम् अन्यथा आकारस्य दीर्घकारेऽपि 'खीय'मिति स्यात्, तु खेयमिति । न च सवर्णदीर्घस्याऽनुनासिकाकारः स्यात्तस्यैकादेशोऽपि कदाचित्तादृश एव स्यात्, तद्वारणाय इकारस्य एकार इत्यर्थं दीर्घनिर्देश इति वाच्यम्, स्थानेऽन्तरतमे निरनुनासिके एव चकारेऽनुनासिकोच्चारणात् । स्पष्टञ्चेदं 'पथिमथि' 'अष्टन आ' इत्यत्र भाष्यकैयटयोरित्याहुः ॥ [ ई च खनः ] ।

भृञोऽस । स्त्रियामप्रतिषेध इति भाष्यम् । स्त्रियां विधानात्तद्विषयेऽनर्थकोऽप्रतिषेध इति प्रतिषेध इत्यर्थः । अर्थशब्दस्य भावशब्देन समानाधिकरण्यमसामञ्ज

---

१ अत्र क्वचित् । २ 'सङ्' । ३ 'दीर्घो' । ४ 'तस्मादुत्वेऽपि' ।

स्ति तदर्थं प्रतिषेधः स्यात्-भार्या नाम क्षत्रिया ॥-॥ सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात् ॥-॥ सिद्धमेतत्॥कथम् ?॥[स्त्रियां सञ्ज्ञाप्रतिषेधात्'] । स्त्रियां संज्ञाप्रतिषेधो वक्तव्यः । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः'। ततो 'न स्त्रियां भृञः'इति॥सिध्यति । सूत्रं तर्हि भिद्यते॥यथान्यासमेवास्तु॥ ननु चोक्तम्—भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वादिति । नैष दोषः । भावे इति नत्रानुवर्तते, कर्मसाधनार्थम् । अथ वा य एते संज्ञायां विधीयन्ते तेषु नैव विज्ञायते—'संज्ञायामभिधेयायामिति ॥ किं तर्हि ?॥ 'प्रत्ययान्तेन चेत्संज्ञा गम्यत इति ॥ अपर आह–॥-॥ संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ॥-॥ संज्ञायां पुंसि दृष्टत्वात्तव भार्याशब्दो न सिध्यति । ॥५॥ स्त्रियां भावाऽधिकारोऽस्ति तेन भार्या प्रसिध्यति॥॥ [ स्त्रियां भावाऽधि

प्र ]साधनोऽत्र संज्ञाशब्द ॥ ततो न स्त्रियामिति । स्त्रीशब्देनाऽत्र स्तनकेशवती गृह्यते । अन्यथा विधिप्रतिषेधयोर्विषयविभागो न स्यात् । तस्माद्वरणं भवति विधेर्विषयः । लौकिकी तु स्त्री प्रतिषेधस्य । भाव इति तत्रेति । 'अजब्यनोर्भावे क्य बित्यत । संज्ञायामिति संज्ञाशब्दः कर्मसाधनो न गृह्यते, किं तर्हि ?, भावसाधनः । तेन प्रत्ययान्तेन यदि रूढिर्गम्यते तत्र प्रत्ययः । न च भल्लशब्देन हि गृहिण्यभिधीयत इति क्यपोऽप्रसङ्गः । संज्ञायामिति । 'भार्या नाम क्षत्रिया' इत्यत्राऽसंज्ञायामिति प्रतिषेधस्य चरितार्थत्वात्सूत्रान्तरेण स्त्रियां संज्ञायां क्यपः प्रसङ्गात्कार्याशब्दो न सिध्यतीति चोद्यम् । स्त्रीप्रकरणे भावग्रहणानुवर्तना कर्मणि क्यब-

उ ]भिप्रत्य तत्सिद्धये कर्मणि संज्ञाशब्दं व्युत्पादयति—संज्ञायत इति। अभ्रौ रूढ्या बोध्या यस्याऽस्तीत्यर्थः । अन्यथेति । 'संज्ञायां समज' निषद्यवन्तानां 'समज्ये' त्यादीनां स्त्रीलिङ्गत्वादिति भावः । लौकिकी त्विति । न च विपरीतं किन्न स्यादिति वाच्यं 'स्त्रियां क्ति' त्रित्यत्र शास्त्रीयस्यैव ग्रहेणऽस्याऽपि तत्रैव प्रवृत्तेरिति भावः । भाष्ये—यथान्यासमिति । 'संज्ञायां समे'ति सूत्रे यदधिरं 'न स्त्रियां नि त्यादि सूत्रं तत्र कार्यमित्यर्थः। भाव इति तत्र वर्तते इति । ननु समज्यानिषद्यानिपत्यानामधिकरण, मन्याविद्ययो करणं तत्र सिद्धरूढीकारणक्यप 'भावे इत्यस्य तत्र सम्बन्ध इति चेन्न तद्विषये भाव इति वर्तते इत्यर्थः । एवञ्च मन्त्रो भव एवष्यत इति भाव । एतमग्रं भावाऽधिकारोऽस्तीत्यपि व्याख्येयम् । संज्ञाशब्द इति । संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयत । तत्राऽनिर्धव प्रत्ययार्थे तर्हि भृत्याशब्देन स्यादेव गृहिण्यभिधानमिति भाव । भावसाधनेन धातूनामनेकार्थत्वाद्विरुच्यते तदाह—रूढिरिति । तद्विषयोऽर्थ इत्यर्थ । तेन रूढ्या गम्यत

१ मन्ये इदं त्रुटं स्यात् । २ श्लोकवार्तिकम् ।

कारोऽस्मि तेन भार्या प्रसिध्यति]। भाव इति तत्र वर्तते, कर्मसाधनश्चायम्।
॥*॥ अथ वा बहुल कृत्या सञ्ज्ञायामिति तस्मृतम् ॥*॥ अथ वा 'कृत्यल्युटो बहुल'मितियेवमत्रापि ण्यद्भविष्यति ॥*॥ यथा यैत्य यथा जन्य यथा भित्तिस्तथैव सा ॥*॥ [ यथा यैत्य यथा जन्य यथा भित्तिस्तथैव सा ]।
॥*॥ मृमश्च बहुलम् ॥*॥ मृमश्च बहुलमुपसङ्ख्यानं कर्तव्यम्। सभृया एव सभार्या। सभाया एव सभारा। [ भूतोऽस्मनाथाम् ]।

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ॥ ३।१।११४ ॥

॥*॥ सूर्यरुच्याव्यथ्याः कर्तरि॥*॥ सूर्यरुच्याव्यथ्याः इत्येते कर्तरि निपात्यन्ते ॥ किं निपात्यते ?॥ सूर्ये—॥*॥ सूसर्तिभ्यां सैरुत्वं सुवतेर्वा रुनागमः ॥*॥ सरणाद्वा, सुवति वा कर्मणीति सूर्यः ॥ सूर्य ॥ रुच्य—रोचतेऽसौ रुच्यः। [रुच्य]॥ न व्यथत इत्यव्यथ्यः॥ ॥ ॥ कुप्य सञ्ज्ञायाम् ॥ ॥ 'कुप्य सञ्ज्ञाया मिति वक्तव्यम्। गोप्यमन्यत्॥*॥ कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च ॥*॥ कृष्टपच्यस्यान्तोदात्तत्वं च [ वक्तव्य, सञ्ज्ञायाम् ] कर्मकर्तरि चेति वक्तव्यम्। कृष्टे पच्यन्ते स्वयमेव। 'कृष्टपच्याश्च मे'। अकृष्टपच्याश्च मे। यो हि कृष्टे पक्तव्यः कृष्टपाक्यः स भवति॥ [ राजसूयसूर्ये ]।

प्रत्यपिभ्यां ग्रहेः ॥ ३।१।११८ ॥

॥*॥प्रत्यपिभ्यां ग्रहश्छन्दसि॥*॥ प्रत्यपिभ्यां ग्रहश्छन्दसीति वक्तव्यम्। 'मत्तस्य न प्रतिगृह्यम्'। 'अनृतं हि मत्तो वदति तस्मान्नापिगृह्यम्'।

प्र ]भावग्रहणमेव भवतीत्युत्तरम्। यथेति। अनन्तादिश्रीयमानो यथया हलन्तात् बहुलवचनात्, यथा च भित्तिरित्यत्रापि तिन्भवति, एवं भावाद्यप्यप्रमत्ते ण्यद्भवतीत्यर्थः। [ भूतोऽस्मनाथाम् ]॥

उ ]स्यर्थ।नामयवाची सञ्ज्ञाशब्दस्तु करणव्युत्पत्त इति बोध्यम्। अपर आहुरिति भाष्ये। 'सिद्धन्तु क्रियां समाप्रनिपेवा'दित्यादिवरणेन पक्षान्तरत्वम्। कर्मणि क्यपमावादिति। 'भज' इति शप। जन्य स्वरार्थं यदवाचने, स वाहुल्कात्व सिद्ध इति यदि जनेरितुत्स्तुमुपसङ्ख्यान न कार्यमिति बोध्यम्।भाष्ये-सम्भाया एव सम्भारा इति।सम्भरा इति पाठे 'मृ'इति दीर्घान्तात् क्यादे 'ऋदार'मिति बोध्यम्।
राजसूयसूर्ये। सूसर्तिभ्यामिति भाष्यस्य-क्यब्निपात्यत' इति शेष। कुप्य गुपेरादे कत्वम्। सुवर्णरजतभिन्नं धनं कुप्यम्। [ राजसूयसूर्ये ]।
प्रत्यपिभ्यां ग्रहे। 'अपिगृह्य'शब्देन बल्वकारप्रायमुन्नत इति कश्चित्॥

१ नेदं दृश्यते क्वचित्। २ 'राव। ३ 'इति कर्तरि'। ४ इदं भाष्यमित्यन्य।
५ 'सुवति कर्मणीति वा'। ६ इदं क्वचित्। ७'स कृष्टपाक्यो भवति'।'८रब्वोध्य।

प्रतिग्राह्यम्, अपिग्राह्यमित्येवाऽन्यत्र॥ [ प्रत्यपिभ्याम् ]।

अमावस्यदन्यतरस्याम् ॥ ३।१।१२२ ॥

कस्याऽयमनुबन्ध [1]॥ प्रधानस्य॥ यदि प्रधानस्य,—अमावस्या इत्येवं स्वरः प्रसज्येत। अमावस्या इति चेष्यते। तथा—अमावास्याग्रहणेनाऽमावस्याग्रहणं न प्राप्नोति ॥ एवं तर्हि निपातनस्य॥ यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति 'श्रोत्रियश्छन्दोऽधीते' इति । थ्यपवर्गाभावात्तित्वाद्युदात्तत्वं न प्राप्नोति ॥ एवं तर्हि—

॥ * ॥ अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ॥

तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ * ॥ [अमावस्यद] ।

प्र ] अमावस्यत्। प्रधानस्येति। विधीयमानत्वात्प्रत्ययस्य प्राधान्यमिति यत्प्रत्ययो निपात्यत इत्युक्तं भवति। एवं स्वर इति। 'यतोऽनाव' इति उत्तरपदमाद्युदात्तं स्यात्। अन्तस्वरितं चेष्यते। अमावास्याग्रहणेनेति। शब्दान्तरत्वात्। अमावास्याशब्दस्य ण्यदन्तत्वादमावस्याशब्दस्य यदन्तत्वादिति भावः। एवं तर्हीति। यत्प्रत्ययान्तत्वं न निपात्यत इत्यर्थः। ननु तितीति प्रत्ययग्रहणं चोदयिष्यते, निरस्तविभागे च निपातन आश्रीयमाणे स्वरितत्वं न सिध्यतीति मत्वाह—यदि तर्हीति। एवंजातीयकानीति। निरस्तावयवविभागानीत्यर्थः। अमावसोरिति। वृद्धिभावाभावकृतभेदाश्रयो द्विवचननिर्देशः। निपातयामीति। 'एकतरस्येति' शेषः। एकवृत्तितेति। एवं तद्धितवृत्तिरुभयोः सिध्यति, एकदेशविकृतस्याऽनन्यत्वात्। तथा हि ण्यत्यमावास्याशब्दस्य न्याय्यत्वादाकारस्य प्रकृतित्वमकारस्य तु विकारत्वम् ॥

उ.] अमाव। यत्प्रत्यय इति। सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थः। अन्तस्वरितमिति। 'अमे'ति लुप्तसप्तमीकमित्युपपदत्वान्निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणेति भावः। यत्प्रत्येति। निरस्ताऽवयवविभागः समुदाय एव निपात्यते। तस्य च तकारोऽन्त इत्यन्तस्वरितत्वं सिध्यतीति भावः। 'अमावस्या'-शब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनाऽस्य ग्रहणमपि सिद्धमिति तात्पर्यम्। भाष्ये त्तितीत्याद्युदात्तत्वं न प्राप्नोतीति। त्तितीति परसप्तमीत्यभिप्रायेणेदम्। प्रकृते स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम्। तत्सूत्रे प्रत्ययग्रहणस्य प्रत्याख्यास्यमानत्वात्तदीत्येदम्भाष्यमित्यन्ये। एकतरस्येतीति। वस्धातुभ्यां ण्यतो कृतयोरन्यतरस्येत्यर्थः। वसोरिति पञ्चम्यर्थे षष्ठीद्विवचनम्। ण्यदमाशब्दे उपपदे निपात्यते इति बोध्यम्। अन्यथोपपदत्वाऽभावे समासे उत्तरपदप्रकृतिस्वरश्च न स्यादिति बोध्यम्। वार्तिके 'अवृद्धिता' शब्देन ह्रस्वो लक्ष्यते। तद्ध्वनयन्नाह—एकदेशेति।

1 'एव स्वर'।

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्य-
खन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्य-
भाव्यस्ताव्योपचाय्यपृडानि ॥ ३।१।१२३ ॥

'निष्टर्क्य' इति किं निपात्यते ?॥ ॥*॥ निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृत्तार्थं ॥*॥ यथा कृतेस्तर्कः, कसे सिकता, हिंसे सिंह ॥ अपर आह–

॥*॥ निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् ।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥*॥

निष्टर्क्यं चिन्वीत पशुकामः ॥

॥*॥ ण्यदेकस्माच्चतुर्भ्यः क्यप्चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतु ॥*॥

'ण्यदेकस्मात्'–निष्टर्क्यं । 'चतुर्भ्यः क्यप्'–देवहूय, प्रणीय, उन्नीय, उच्छिष्य । 'चतुर्भ्यश्च यतो विधिः',–मर्यं, स्तर्या, ध्वर्यं, खन्य । 'ण्यदेकस्मात्',–खान्य । 'यशब्दश्च',–देवयज्या । 'द्वौ क्यपौ',–आपृच्छ्य प्रतिषीव्य । 'ण्यद्विधि

प्र ] छन्दसि । कृत्तार्थं इति । कृतशब्दस्य धातोरादि ककारस्तस्य प्रयोगस्त । आदरन्तत्वम्, अन्तस्य चादित्वं यथा स्यादित्यर्थः । आद्यन्तयोः परस्परस्थापत्तिर्न

उ ]भाष्ये–ष्यरश्च मे इति । निःप्रत्ययप्रयुक्तः स्वरित इत्यर्थः ।[अमावस्यदन्य]॥ छन्दसि निष्टर्क्ये । 'कृतेराद्यन्तविपर्ययं कृत्तार्थं' इत्यसङ्गतं मत्वाऽऽह–कृत शब्दस्येति । न प्रयोजनं स्वस्थाऽन्यस्थाने तदुत्पत्तिप्रयोजनमन्यस्थानेऽन्तोत्पत्तिप्रयोजनश्चेत्यर्थः । तद्ध्वनयन्नाह—परस्परेति । अन्यथाऽऽद्यन्तयोः स्थाने तृतीयवर्णकरणमप्याद्यन्तविपर्ययः स्यादिति भावः । 'निरःसः कृतेराद्यन्तविपर्ययश्छन्दसि कृत्तार्थं' इत्येव भाष्यपाठ इति कैयटस्वारस्यम् । साम्प्रतिकपुस्तकेषु तु 'निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृत्तार्थः' 'यथा कृतेस्तर्कः' इत्यादि दृश्यते। तत्र 'निष्टर्क्ये कृतश्छन्दसि' इत्यन्वयः । 'निपात्यते' इति शेषः । प्रत्ययप्रकरणाच्च निपात्य, पत्वं च निपात्यमित्यर्थः । अन्यथा ऋदुपधत्वात्क्यबेव स्यादिति भावः । 'आद्यन्तविपर्ययं कृत्तार्थं' इत्यस्य कृत्तार्थं आद्यन्तविपर्ययः आवश्यकत्वेनाऽत्राऽपि सिद्धे तदर्थं न निपातनमित्यर्थः । 'कृत्तार्थं' इत्यादिशब्दार्थमेव दर्शयति–कृतेस्तर्क इत्यादिना । अपर आह निष्टर्क्ये व्यत्ययमिति । वर्णव्यत्ययं, प्रत्ययव्यत्ययश्चेत्यर्थः । 'व्यत्ययो बहुल'मिति सूत्रेणेति भावः । एतच्च पत्वमात्रफलकं निपातनमित्याह— निसः षत्वमिति । भाष्ये–ण्यद्विधिश्चतुरिति । सुपन्तमेतत् । चतुरो वारा नित्यर्थः । चतुर्थ इति यावत् । उपपूर्वाच्चिनोतेरिति । पृडे उत्तरपदे इति

१ व्यास्था हसा स्यात् । २ 'तर्कु' । ३ 'दिवौ निपा' । ४ इदं क्वचिन्न । ५ 'सत्त्वौ' ।

श्तु.',–महावाद्य', भाव्यः, स्ताव्य', उपचाय्यपृडम्। उपपूर्वाच्चिनोतेराया-देशो[ऽपि] निपात्यते। नहि ण्यतैव सिध्यति। ॥*॥ हिरण्य इति च ॥*॥ हिरण्य इति च वक्तव्यम्। उपचेयपृडमित्येवान्यत्र। [ छन्दसि निष्टर्क्ये ]॥

ऋहलोर्ण्यत् ॥ ३।१।१२४ ॥

॥*॥ पाणौ सृजेर्ण्यद्विधिः ॥*॥ पाणौ सृजेर्ण्यद्विधेयः। पाणिसर्ग्या रज्जुः। ॥*॥ समवपूर्वाच्च ॥*॥ समवपूर्वाच्चेति वक्तव्यम्। समवसर्ग्यः ॥*॥ लपि-दभिभ्यां च ॥*॥ लपिदभिभ्यां चेति वक्तव्यम्। अपलाप्यम्। अवदाभ्यम्॥

ओरावश्यके ॥ ३।१।१२५ ॥

कथमिदं विज्ञायते–आवश्यके उपपदे, आहोस्विदावश्यके द्योत्य इति? कश्चात्र विशेषः?। ॥*॥ आवश्यक उपपद इति चेद्द्योत्य उपसङ्ख्यानम् ॥*॥ आवश्यके उपपदे इति चेद्द्योत्येऽपसङ्ख्यानं कर्तव्यम्। पाव्यं लाव्यम्। अस्तु तर्हि द्योत्ये। ॥*॥ द्योत्य इति चेत्स्वरसमासानुपपत्तिः ॥*॥ द्योत्य इति चेत्स्वरसमासानुपपत्तिः [प्राप्नोति]। अवश्यलाव्यम्। अवश्यपाव्यम्॥ नैष दोषः। मयूरव्यंसकादित्वात्समासः। विस्पष्टादिवत्स्वरो भविष्यति। ॥*॥ ओ-रावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्धम् ॥*॥ ओरावश्यके ण्यतः स्तौतेः क्यब्भवति पूर्वविप्रतिषेधेन। ओरावश्यके ण्यद्भवतीत्यस्यावकाशः–अवश्य-लाव्यम्। अवश्यपाव्यम्। क्यपोऽवकाशः–स्तुत्यः। इहोभयं प्राप्नोति–अव-श्यस्तुत्यः। क्यब्भवति पूर्वविप्रतिषेधेन॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः?॥

प्र ]तु वर्णान्तररूपापत्तिरिति प्रदर्शनाय 'कृतार्थं' इत्युक्तं भवति॥ [छन्दसिनिष्ट]॥

ओरावश्यके। कथमिति। किमावश्यकार्थवाचिन्युपपदे प्रत्ययः,उत प्रत्ययेन आवश्यके द्योत्य इति प्रश्नः। अवश्यलाव्यमिति। 'द्वावपूपा'वित्यादौ गतार्थस्यापि क्वचित् प्रयोगो लोके दृश्यते लाघवं प्रत्यनादरादिति मन्यते। विस्पष्टादिवदिति। यथा 'विस्पष्टकटुक'मित्यत्र मयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरो भवति,

उ ] यावत्। पृडेरिगुपधलक्षणः कः॥ [ छन्दसि निष्टर्क्ये ]।

ऋहलोर्ण्यत्। पाणौ सृजे'र्ऋदुपधा'दिति क्यपोऽपवादो ण्यत्। 'लपिदभि-भ्यां 'पोरदुपधा'दिति॥ [ ऋहलोर्ण्यत् ]।

ओरावश्यके। ननूक्तार्थत्वादवश्यशब्दप्रयोग एव न स्यात्, ण्यदेव वा न स्यादिति कुतो नोक्तमत आह–द्वावपूपाविति। 'द्योत्य' इत्युक्तेर्योतकसमुच्चय इव एवेति लभ्यते। उपपदत्वाऽभावात्स्वरसमासयोरनुपपत्तिरिति भावः। ननु 'विस्प-ष्टादीनि गुणवचनेषु' इत्यनेन पूर्वपदप्रकृतिस्वरविधानादत्र चोत्तरपदप्रकृतिस्वरस्येष्ट-त्वेन 'विस्पष्टादिव'दित्ययुक्तमिति मत्वाऽऽह–यथेति।एवञ्च मयूरव्यंसकादिषु निपा-

न वक्तव्य । उक्त तत्र क्यबिति वर्तमाने पुन क्यग्रहणस्य प्रयोजनम्,- 'क्यबेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । [ ओरावश्यके ]।

आनाय्योऽनित्ये ॥३।१।१२७ ॥

॥*॥ दक्षिणाग्नौ ॥ ॥ दक्षिणाग्नाविति वक्तव्यम् । आनेयोऽन्य ॥

॥*॥ आनाय्योऽनित्य इति चद्दक्षिणाग्नौ कृत भवेत् ॥

एकयोनौ तु न प्राप्नोति यथाऽन्यथा भवेत् ॥*॥

## प्रणाय्योऽसंमतौ ॥ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ।३।१।१२९

पाय्यनिकाय्ययो किं निपात्यते ? ॥ ॥ पाय्यनिकाय्ययोरादिपत्वकत्व निपातनम् ॥ ॥ पाय्यनिकाय्ययोरादिपत्वमादिकत्व च निपात्यते । मेय निचेयमित्यन्यत्र । [ पाय्यसान्नाय्य ] ॥

## क्रतौ कुण्डपाय्यसंचाय्यौ ॥ ३।१।१३० ॥

॥*॥ कुण्डपाय्य यद्विधि ॥*॥ कुण्डपाय्ये यद्विधेय । कुण्डपाय्य क्रतु ॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ ३।१।१३१ ॥

॥*॥ समूह्य इत्यनर्थक वचन सामान्यकृतत्वात् ॥*॥ समूह्य इत्यनर्थक वचन ॥ कि कारण ?॥ 'सामान्यकृतत्वात् । सामान्येनैवाऽत्र ण्यत्सिद्धि भविष्यति- ऋहलोर्ण्यदिति ॥ वह्यर्थं तर्हि निपातन कर्तव्यम् । वहेर्ण्यद्यथा स्यात् । ॥*॥ वह्यर्थमिति चेदुक्तमेदर्थत्वादिदम् ॥ ॥ वह्यर्थमिति चेदुक्तमेतदर्थ

प्र ]णमवश्यं गत्यभिमतावपि मयूरव्यंसकादौ निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थ ॥ [ ओरावश्यके ] ॥

आनाय्यो । आनाय्योऽनित्य इति चद्दिति। घगादिष्वपि प्रसङ्ग इति शेष । भवदिति । यभावने ण्यत् । निपातनोद्दि स्वरितार्थीयत । एकयोनाविति । या गार्हपत्यादानीयत आहवनायतन गार्हपत्याविदैव गणभिन्नत्वेनेत्यर्थ । यस्तु वैश्यकुलेभ्य नीयते तत्राऽऽनाय्यशब्दो न भवति । [ आनाय्योऽनित्ये ] ॥

अग्नौ च । ऊहिविग्रहादिति । वह्निगमनार्थेनाहिना ब्राह्मण समूह्यशब्दस्य निर्वचन कृतमित्यर्थ । [ अग्नौ परिचाय्यो ] ॥

उ ]तनादेव सिद्ध 'णिश्यादीनां'ति सूत्रमपि न कार्यमिति भाव ॥[ओरावश्यके]।

आनाय्यो।मम्भावने ण्यदिति।दक्षिणाग्नौ युक्त्व सम्भाव्यन निपातनादित्यर्थ ।

पाय्य। भाष्ये-पाय्यनिकाय्ययोरिति। धायादेशोऽपि निपात्यत इति बोध्यम् ।

क्रतौ कुण्ड । यद्विधेय इति । तेन 'यताऽनाव' इत्याद्युदात्त , इदुत्तरपद प्रकृतिस्वरेण तन्मत्ता च । युक्त निपात्यत इत्यपि वाच्यम्। [ क्रतौ कुण्डपाय्य ]॥

१ 'सामान्येन' । २ 'दुदे' । ३ हि क्वचित । ४ 'त्वदेरानीयते ।

त्यात्सिद्धम् ॥ ऊहिरपि वह्यर्थे वर्तते ॥ कथ पुनरन्यो नामान्यस्यार्थे वर्तते, कथमूहिर्वह्यर्थे वर्तते ? ॥ बह्वर्था अपि धातवो भवन्तीति ॥ अस्ति पुन क्व चिन्यत्रापि ऊहिर्वह्यर्थे वर्तते ॥ 'अस्ती'त्याह ॥

॥*॥ ऊहिविग्रहाच्च ब्राह्मणे सिद्धम् ॥*॥ ऊहिविग्रहाच्च ब्राह्मणे सिद्ध मतत्। समूह्य चिन्वीत पशुकाम । पशवो वै पुरीष पशूनेवास्मै त्तसमूहति ।

## चित्याग्निचित्ये च ॥ ३।१।१३२ ॥

॥ ॥ अग्निचित्या भावेऽन्तोदात्त ॥*॥ अग्निचियेतिभावेऽन्ते दात्तो भवति । अग्निचयनमेवाग्निचित्या ॥ [ चित्याग्निचित्ये च ]।

## ण्वुल्तृचौ ॥ ३।१।१३३ ॥

किमर्थश्चकार ? ॥ ॥ चकार स्वरार्थ ॥ ॥ चितोऽन्त उदात्तो भवती त्यन्तोदात्तत्व यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । एकाऽच्य तत्र नार्थ स्वरार्थेन चकारेणाऽनुबन्धेन, प्रत्ययस्वरेणैव सिद्धम् ॥ विशेषणार्थस्तर्हि ॥ क्व विशेषणार्थेनार्थ ?॥'असन्तृ जिति । 'तृ' इत्युच्यमाने मातरौ मातर. पितरौ पितर ,-अत्रापि प्राप्नोति ॥ स्वसृनप्तृग्रहण नियमार्थ भविष्यति,-'एतयोरेव योनिसम्बन्धयोर्नान्येषा योनिसम्बन्धाना'मिति ॥ सामान्यग्रहणाविघातार्थ स्तर्हि ॥ क्व सामान्यग्रहणाविघातार्थनार्थ ?॥ अत्रैव ॥ यदेतत्तृन्तृचोर्ग्रहण मेत'त्तृ' इति वक्ष्यामि ॥ यदि 'तृ' इत्युच्यते मातरौ मातर [पितरौ पितर ]

प्र ] ण्वुल्तृचौ । मातराविति । उणादिषु तृप्रत्ययान्ता मातादयो निपातिता इति

उ ] अग्नौ परि। भाष्ये–वहेर्य्यदिति । 'समूह्यशब्दे' इति शेष ।तत्र कृते सम्प्रसारण–दीर्घत्वे निपातनादित्यर्थ । [भाष्ये 'वहर्ण्यदिति यथा स्या'दिति पाठ ]। वहिस मानार्थेनेति । सवाद्यग्नित्यमौ तु न, अनभिधानादिति भाव । ऊहिविग्रहादिति । ब्राह्मणे ऊहिना विग्रहदर्शनादूहेर्वह्यर्थत्व सिद्धमित्यर्थ ॥[अग्नौ परिचाय्योपचाय्य]॥

ण्वुल्तृचौ।भा'ष्ये यदि तृ' इत्युच्यते मातरौ मातर अत्रापि प्राप्नोतीति। न च निरनुबन्धकत्वादस्यैव ग्रहण स्यादिति वाच्यम्, स्याऽनुरोधेन ज्ञापकसिद्ध तयाऽनित्यत्वेन च तस्या इहाऽप्रवृत्तेरिति भाव । तृप्रत्ययान्ता इति । निरनुबन्ध क तृ'प्रत्ययान्ता इत्यर्थ । अस्यापि तृन्वे यथान्यामेऽप्यापत्ते सत्त्वेन 'यदि तृ इत्यु च्यमाने' इत्यस्याऽसङ्गत्यापत्ते । भाष्ये–तृ इति वक्ष्यामीति । एवञ्च तृनो ग्रहण सिध्यर्थ चकार इति भाव । यदि तृ इ'त्युच्यमाने इति । चकारकरणसामर्थ्यात्सानु बन्धग्रहणेऽपि निरनुबन्धकग्रहण दुर्वारमेवेति भाव । अन्यत्राऽपि तदर्थत्व दर्श

१अयपाठ क्वचिन्न। २'इत्यत्रापि'। ३"प्राप्नोतीति द्वितीयप्रतीके।अत्रैव प्राप्नोतीत्यर्थ। निरनुबन्धकत्वादस्यैव ग्रहण स्यादिति भाव । तृप्रत्ययान्ता इति।" ४'त्युच्यते'।

अत्रापि प्रसज्येत ॥ स्वसृनप्तृग्रहणं नियमार्थं भविष्यति-'एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धाना'मिति । [तुरछन्दसि' 'तुरिष्ठेमेय स्त्वि'ति चाभयोर्ग्रहणं यथा स्यात् ] ॥-॥ ण्वुलि सकर्मकग्रहणम् ॥*॥ ण्वुलि सकर्मकग्रहणं कर्तव्यम् । इह मा भूत्-आसिता शयितेति ॥-॥ न वा धातुमात्राद्दर्शनाण्ण्वुलः ॥-॥ न वा वक्तव्य ॥ किं कारणम् ? ॥ 'धातुमात्राद्दर्शनाण्ण्वुल' । धातुमात्राण्ण्वुल्दृश्यते । इमेऽस्य आसकाः । इमेऽस्य शायकाः । उषिता आसका वैश्रवणस्येति । ॥*॥ तृजादिषु वर्तमानकालोपादानमध्यायेऽध्वदाद्यानाद्यर्थम् ॥*॥ तृजादिषु वर्तमानकालोपादानं कर्तव्यम् ॥ किं कारणम् ? ॥ 'अध्यायकवेदाध्यायाद्यर्थम्' । अध्यायक वेदाध्याय । अधीतवत्यध्यष्यमाण वा मा भूदिति ॥-॥ नवा कालमात्रे दर्शनादन्येषाम् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'कालमात्रे दर्शनादन्येषाम्' । कालमात्रेऽन्येऽपि प्रत्यया दृश्यन्ते । वचांपार दामनीपार गर्मेनीपार ॥ [ण्वुल्तृचौ] ।

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३।१।१३४ ॥

॥*॥ अजपि सर्वधातुभ्य ॥*॥ अजपि सर्वधातुभ्यो वक्तव्य । इहापि यथा स्यात्-भव सव इति ॥ न तर्हिदानीमिदं पचाद्यनुक्रमणं कर्तव्यम् ? ॥ कर्तव्य च ॥ किं प्रयोजनम् ? ॥*॥ पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थं च ॥*॥ अनुबन्धासञ्जनार्थं तावत् । नदट्-नदी । चोरट्-चोरी । अप

प्र ]भात । स्वसृनप्तग्रहणमिति । नप्तग्रहणं नियमार्थं । स्वसृशब्दस्तु स्वतन्त्रेऽयोनित्वादिन्नर्थ एव । सामान्यग्रहणऽविघातार्थं च तस्यास्य स्थितम् । तुश्छन्दसि तुरिष्ठमय स्त्विन्यत्रापेन प्रयोजनमदृष्टात् । [ ण्वुल्तृचौ ] ॥

नन्दि । श्वपचेति । स्वर्मध्यव्याप्यते । न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्ते

द ]र्यात-इति चोभयोर्ग्रहणमिति । ऋदमुणादयो व्युत्पन्ना इति शाकटायनादिमत । अव्युत्पन्नानीत्यादिमते तु प्रतिरेव न । 'मातर्नी'त्यादौ तृ'स्वेपवारणायाऽऽऽव्युत्पन्न र एवाऽऽसस्यन्न ननि यचि र ऋत इति सूत्रे कैयट । किं कारणमिति । कस्मादेनादिरित्यर्थ । हेतुमाह-धातुमात्रादित्यादिना । अन्येषामिति । ण्वुन्न्यनिरेकानामित्यर्थ । एवञ्च 'वर्तमान' इति सूत्रे दोष । ण्वुन्तृचोरन्यत्र कालेऽनभिधान स्वीकार्यमिति भाव ॥ [ ण्वुल्तृचौ ] ॥

नन्दिग्रहि । 'भव सव' इति भाष्ये पाठ ॥ [ नन्दिग्रहि ] ॥

१ अय पाठ क्वाचित्क । २ 'धातुमात्रे' । ३ 'ध्यापक' । ४ 'ध्यापक' । ५ 'भूतामिति' । ६ 'अन्ये प्रत्यया' । ७ 'शर्व' 'शव' 'सर्व' । ८ अस्य व्याख्या दुर्लभैव । ९ 'कृप्रयत्न' ।

वादबाधनार्थम्—जारभरा, श्वपचेति । [ नन्दिग्रहि ] ॥

इगुपधज्ञाप्रीकिरः कः ॥ ३।१।१३५ ॥

॥ * ॥ इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः ॥ * ॥ इगुपधेभ्य उपसर्गे को विधेयः ॥ किं प्रयोजनम् ? ॥ 'मेषाद्यर्थः' । मेषः देवः सेवः ॥ * ॥ न वा बुधादीनां दर्शनादनुपसर्गेऽपि ॥ * ॥ न वा को विधेयः ॥ किं कारणम् ? ॥ [बुधादीनां दर्शनादनुपसर्गेऽपि] । बुधादीनामनुपसर्गेऽपि को दृश्यते । बुधः भिदः युधः सिर्व इति ॥ कथं मेषः देवः सेव इति ? ॥ पचादिषु पाठः करिष्यते ॥

पाघ्राध्माधेट्दृशः शः ॥ ३।१।१३७ ॥

॥ * ॥ जिघ्रः संज्ञायां प्रतिषेधः ॥ * ॥ जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः । व्याजिघ्रतीति व्याघ्रः । इह केचिच्छस्यैव प्रतिषेधमाहुः, केचिज्जिघ्रभावस्य किं पुनरत्र न्याय्यम् ? ॥ शस्यैव प्रतिषेधो न्याय्यः । जिघ्रभावे हि प्रतिषिद्धे केन शे आकारलोपः स्यात् ॥ [ पाघ्राध्माधेट्दृश शः ] ॥

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥

॥ * ॥ अनुपसर्गाल्लिम्पे ॥ * ॥ अनुपसर्गाल्लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवाः ॥ * ॥ गवि च विन्देः संज्ञायामुपसंख्यानम् ॥ * ॥ गवि चोपपदे विन्देः संज्ञायामुपसंख्यानं कर्तव्यम् । गोविन्द इति ॥ अन्यत्पमिदमुच्यते—'गवी'ति ॥ * ॥ गवादिष्विति वक्तव्यम् ॥ * ॥ गोविन्दः । अरविन्द ॥

ज्वलितिकसन्तेभ्यो णः ॥ ३।१।१४० ॥

॥ * ॥ तनोतेर्ण उपसंख्यानम् ॥ * ॥

तनोतेर्ण उपसंख्यानं कर्तव्यम् । अवतनोतीत्यवतानः ॥

शिल्पिनि ष्वुन् ॥ ३।१।१४५ ॥

॥ * ॥ नृतिखनिरञ्जिभ्य ॥ * ॥

नृतिखनिरञ्जिभ्य इति वक्तव्यम् । इह मा भूत् । ह्वायक इति ॥

प्र.]गोपि भवति॥इत्यु॰भाष्यप्रदीपे तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम्॥पादश्च॥

उ ] पाघ्राध्मा । केचिदिति भाष्ये । 'जिघ्रः संज्ञाया'मित्यादेशोऽकार उच्चारणार्थ इति जिघ्र इति पञ्चमीति भाव ।केजिज्जिघ्रभावस्येति । वार्तिके 'जिघ्र' इति षष्ठ्यन्तं मन्यन्ते । केन शे आकारलोप इति। आतो लोप इत्यनार्द्धधातुक इत्यधिकारादिति भाव । 'श्नाऽभ्यस्तयो' इत्यस्य प्राप्तिरेव न ॥ [ पाघ्राध्माधेट् ] ॥

अनुपसर्गा । अरविन्दोऽर्द्धचादि ॥ [ अनुपसर्गात् ] ॥

१ 'मेषाद्यर्थम्' । २ 'न वा वक्तव्य' । ३ अयं क्वचिन्न ।
४ अयमंश क्वचिन्न । ५ 'वायक' । ६ 'मन्यते' ।

## प्रुसृल्वः समभिहारे वुन् ॥ ३।१।१४९ ॥

॥ ॥ प्रुसृल्व साधुकारिणि वुन्विधानम् ॥१॥ प्रुसृल्वः साधुकारिणि वुन्विधेय । सकृदपि यः सुष्ठु करोति तत्र यथा स्याद्बहुशोऽपि यो दुष्टु करोति तत्र मा भूदिति॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥३।१।६॥

## कर्मण्यण् ॥ ३।२।१ ॥

॥१॥ कर्मणि निर्वर्त्यमानविक्रियमाणे च ॥१॥ कर्मणि निर्वर्त्यमाने विक्रियमाणे चेति वक्तव्यम्।इह मा भूत् आदित्यं पश्यति, हिमवन्तं शृणोति ग्रामं गच्छतीति ॥२॥ कर्मणि निर्वर्त्यमानविक्रियमाण [इति] चेद्वेदाध्यायादीनामुपसंख्यानम् ॥ ॥ कर्मणि निर्वर्त्यमानविक्रियमाण इति चेद्वेदाध्यायादीनामुपसंख्यानं कर्तव्यम् । वेदाध्यायः चर्चापारः शमनीपारः ॥३॥ यत्न च नियुक्त

प्र ] कर्मण्यण् । निर्वर्त्यमानेति । हरिणा निर्वर्त्यादीनां विभागो दर्शितः । 'सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते'॥यस्योपादानकारणं नास्ति तन्निर्वर्त्यं,यथा–'संयोगं करोती'ति।यस्यापि सदनुत्पन्नकारणं न विनश्यन् तन्निर्वर्त्यं, यथा–'घटं करोती'ति।यदा तूपादानकारणमेव परिणमितं विवक्ष्यत–'मृदं घटं करोती'ति तदा विकार्यं कर्म। भेदविवक्षायां तु 'मृदा घटं करोती'ति निर्वर्त्यमेव कर्म । विकार्यमपि द्विविधम् । 'प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्'॥ इति॥ प्राप्यमपि–'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा

उ ] प्रुसृल्व । साधुकारिणीति । समभिहारग्रहणस्यात्र कार्यमित्यर्थः ॥ इति भाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम्॥पादश्चायं समाप्तः ॥

कर्मण्यण् । यस्य सती परिणामिनी प्रकृतिर्नोपादीयते यस्य चाऽविद्यमाना तन्निर्वर्त्यमित्युच्यत इत्यर्थः । तद्व्याचष्टे–यस्येति । कार्यमाणानामिवाय्यत्वेन प्रतीयमानमित्यर्थः । यथा 'मृदं घटं करोती'ति । विवक्ष्यत इति । 'कार्यऽभेदेने'त्यर्थः । तदा विकार्यं कर्मेति । अवस्थाद्वयाऽनुगमने पूर्वाऽऽकारपरित्यागेनाऽऽकारान्तरप्राप्त्यवगमादिति भावः । भेदविवक्षायामिति । कर्मणः सकाशादुपादानस्य भेदविवक्षायामित्यर्थः । मृदा घटमिति । करणत्वविवक्षया तृतीया । नो चेत्सम्बन्धसामान्यविवक्षया 'मृदो घट'मिति षष्ठीति बोध्यम् । विकार्यमपीति । पूर्वरूपस्य सर्वात्मना परित्यागतदभावाभ्यामित्यर्थः । दर्शनादिति । प्रत्यक्षादित्यर्थः । निर्वर्त्ये स्वरूपलाभ एव क्रियाकृतो विशेषो, विकार्ये विकारलाभ एव स । घटं करोति,

१लुप्तमिदम् ।२ निर्वर्त्यमानविक्रियमाण इति वक्त'।३इद क्वचिन्न ।४ 'मृदो'।५'वा'।

॥४॥ यत्र च नियुक्तस्तत्र चोपसङ्ख्यानं कर्तव्यम्। छत्रधारः द्वारपालः। ॥ ५॥हृग्रहिनीवहिभ्यश्च॥ ६॥हृग्रहिनीवहिभ्यश्चेति वक्तव्यम्। हृ–भारहार [हृ]। ग्रहि–कमण्डलुग्राह । [ग्रहि]॥ नी—उष्ट्रप्रणाय ॥[ नी ] वहि–भारवाहः। ॥ ७॥ कर्तरिगणन वा ॥ ८॥न वाऽर्थः परिगणनेन ॥ कस्मान्न भवति–आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीति ?॥॥ ९॥ अनभिधानात् ॥ ९॥ अनभिधानादेव न भविष्यति ॥ ॥ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥ २॥ अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाशः-पचतीति पचः । कर्मोपपदस्याऽवकाशः कुम्भकारः-नगरकारः । ओदनपाच उभयंप्राप्नोति। कर्मोपपदो भवति विप्रतिषेधेन।अनुपपदस्यावकाशः –विक्षिप विलिख. । कर्मोपपदस्य स एव । काष्ठभेद उभयं प्राप्नोति । कर्मोपपदो

प्र ]तत्प्राप्यमिति कथ्यते'॥इति॥ तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्तिनित्यता प्राप्यमाणत्वात्।अवान्तरविवक्षया तु त्रैविध्यमुच्यते। वेदाध्याय इति।नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाऽभाव । छत्रधार इति । वेदाध्यायादिग्रहणेन च्छत्रधारादीना ग्रहणं नास्ति,प्रकारार्थेनाऽऽदिशब्देन सदृशानां वाग्भाष्यायादीनामेव शब्दाना ग्रहणात् । तत्प्राप्यमेव न विकार्यम् । नहि धारणपूर्वं छत्रस्य कश्चित् निरवगतो विशेष प्रत्यक्षानुमानपरिच्छेद्योऽस्ति । अनभिधानादिति । नित्याना शब्दानामिदमन्वाख्यानमात्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नाऽनुशास्यन्त इत्यर्थ । कर्मोपपदस्येति । यदा गणपठितधातुविषय एवाऽण्प्रत्ययस्तदायं विप्रतिषेधोयदा तु सर्वधातुविषयोऽण्प्रत्ययस्तदा येन नाप्राप्तिन्यायादण्प्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोनुपपन्न । तथा च करोतेरच्प्रत्यय कृत 'शिवशमरिष्टस्य करे' इति । ततश्च कुम्भकारादिरपि नाऽणोऽवकाश, तत्राप्यच्प्रसङ्गप्रसङ्गात् । अत एव भाष्यकार

उ.]सुवर्णं कुण्डलं करोति,काष्ठं भस्म करोति। अनुमानाद्यथा–पुत्र सुखं करोतीति । अत्र सुखस्योपलम्भो मुखप्रसादाऽनुमेय । नित्यः। तत्तत्कल्पेऽविच्छिन्नपारम्पर्य इत्यर्थ । ननु 'वेदाऽध्यायादी'नामित्यादिनैव सर्वसङ्ग्रहे सिद्धे 'यत्र च नियुक्त' इत्यादेर्वैयर्थ्यमत आह–वेदाऽध्यायादीनामिति । वस्तुत प्रपञ्चार्थमेव तानीति बोध्यम् । शास्त्रेणाऽपि–'कर्मण्य'णिति सामान्यशास्त्रेणापि। ननु सर्वधातुभ्योऽण्विधानेन 'कुम्भकार' इति कथमणोऽवकाश इत्यत आह–यदेति । सर्वधातुविषयश्चाऽच्प्रत्यय आवश्यक इत्याह–तथा चेति । उदाहरणान्तराणि–काऽस्यपर्याणि ॥

१ अयं पाठ क्वचित् । २ 'परि' । ३ 'दश' 'देवान'। ४ 'इत्योभयं प्राप्नोति-ओदनपाच ' । ५ 'इत्युभयं प्राप्नोति–काष्ठभेद ' । ६ 'नुशास्यन्त' ।

पद न वाधिष्यते ॥ अनुपपदस्यावकाश –सुग्ल सुग्ल । कर्मोपपदस्य स एव । इहोभय प्राप्नोति–गोसदाये वडवासदाय । कर्मोपपदो भवति विप्रतिषेधेन ॥ नैष युक्तो विप्रतिषेध । अनुपपदस्तृतीय । ण्वुल्तृजच । तेषां ण । णस्य क । स यथैव को ण बाधते एव कर्मोपपदमपि बाधेत ॥ का तर्हि गति ? ॥ पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते [ नोत्तरान् ] इत्येवमय को ण बाधिष्यते कर्मोपपद न वाधिष्यते ॥२॥ शीलिकामिभक्ष्याचरिभ्यो ण, पूर्वपदप्रकृतिस्वर च ॥-॥ शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्य, पूर्वपदप्रकृतिस्वरत्व च वक्तव्यम् । शीलि–मांसशील, मासशीला । शीलि[1] ॥कामि–मासकाम मासकामा । कामि ॥ भक्षि–मासभक्ष मासभक्षा ॥ भक्षि ॥ आचरि—कल्याणाचार कल्याणाचारा ॥—॥ ॥ ईक्षिक्षमिभ्या च ॥-॥ ईक्षिक्षमिभ्या चेति वक्तव्यम् । सुखप्रतीक्ष सुखप्रतीक्षा । कल्याणक्षम ॥ कल्याणक्षमा॥ किमर्थमिदमुच्यते?॥ पूर्वपदप्रकृतिस्वरत्वञ्चे वक्ष्यामि, ईकारश्च मा भूदिति ॥ नैतदस्ति प्रयोजनम् । इह यो मास भक्षयति मास तस्य भक्षो भवति । [तत्र] योऽसो भक्षयतेरजन्तेन बहुव्रीहि ॥ एव तर्हि सिद्धे सति यत्कर्मोपपद ण शास्ति तज्ज्ञापयत्याचार्य 'समानेऽर्थ केवल विग्रह

---

प्र ]पुनरनयो प्रत्ययशोर्विशेष '। उच्यते। कर्मोपपदे क सति नित्यसमासा भवति। अकर्मोपपदे तु विकल्पेन षष्ठीसमास स्यात् । नन्वर्थेश इत्यनातोऽनुपसर्गे क इति क प्राप्नोति न त्वण्प्रत्यय, तत्कथमुच्यते 'कर्मोपपदस्य स एवे ति,न हि कुम्भकार कर्मोपपदस्य कस्यैव विग्रह ।एव तर्हि काऽणोर्विप्रतिषेध परत्वादण् क बाधत,अणमपि कर्मोपपद कोऽपवादत्वादिति ममासादस्येनदुक्तमित्यदोष । मासकाम इति । मासशब्द 'स प्रत्ययान्तोऽन्तोदात्त । कल्याणशब्दो 'लघावन्त द्वयोश्च बह्वषो गुरु' रिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते ।

भक्षयतेरजिति।'एरजण्यन्ताना मित्येतत्तु मुनित्रयस्य मते नास्ति।कर्त्यादिभ्य[2]

---

उ ]प्रकृतिस्वरत्व दर्शयितु पूर्वपदस्वरान्दर्शयति–मासेति । 'एकस्मिन्नन्ते लघौ द्वयोर्वाऽन्तयोर्गुर्वो मतोर्बह्वप बह्वचस्य'त्यर्थ । भाष्ये–ईकारश्च माभूदिति । अतो ण कृत इति भाव । मांस तस्य भक्ष इति । भक्षे कर्मण्यच् । 'घ‍ाञघा पुंसि' इति नित्य पुस्त्वम् । एतेन 'इद भावघञ्विषयमेव'त्यपास्तम् । भक्षण भक्ष इति।भावेऽजिति भाव । कर्माऽजन्तेन समानाधिकरणबहुव्रीहिस्तु नाऽनभिधानात् । तच्च तथाऽप्यानस्यकमिति बोध्यम् । भाष्ये तज्ज्ञापयत्याचार्य इति । नन्वणि सति 'मांसभक्षी'ति प्रयोग स्यादिति तद्वारणेन चरितार्थ वार्तिक

---

१'वडवर्गदाय उभयं प्राप्नोति'।'गोमदाये लभ्य'।२, इद् इचिह्न.।३ च. प्रविम ।

डो वक्तव्य । प्रह्वाज्य इति ॥ किमुच्यते सर्वत्रेति ?॥ अन्यत्रापि नावश्यमिहैव ॥ क्वान्यत्र ?॥ आह्व प्रह्व इति॥*॥के हि सम्प्रसारणप्रसङ्ग ॥~॥ के हि सति सम्प्रसारण प्रसज्येत । सम्प्रसारणे कृते सम्प्रसारणपरपूर्वत्वे चोवङादेश 'आहुव' इत्येतद्रूप प्रसज्येत॥स तर्हि वक्तव्य ?॥न वक्तव्य । अन्यत्र सम्प्रसारण, सम्प्रसारणे कृते आकार लोपस्तस्य स्थानिवद्भावादुवङादेशो न भविष्यति ॥ पूर्वत्वे कृते प्राप्नोति॥ एवन्तर्हीदमिह सम्प्रधार्यम् आकारलोप क्रियता पूर्वत्वमिति, किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोप ॥ न सिध्यति । अन्तरङ्गत्वात्पूर्वत्व प्राप्नोति ॥ एव तर्हि वार्णादाङ्ग बलीयो भवतीत्याकारलोपो भविष्यति ॥ एव तर्हीदमिह सम्प्रधार्यम् आकारलोप क्रियता सम्प्रसारणमिति किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोप ॥ नित्य सम्प्रसारण । कृतेऽप्याकारलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ आकारलोपोऽपि नित्य । कृतेऽपि सम्प्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ अनित्य आकारलोप , न हि कृते सम्प्रसारणे प्राप्नोति। अन्तरङ्ग[हि^1]पूर्वत्व बाधते। यस्य लक्षणान्तरेण निमित्त विहन्यते न तदनित्यम् ॥ न च सम्प्रसारणमेवाकारलोपस्य निमित्त विहन्ति । अवश्य लक्षणान्तर पूर्वत्व प्रतीक्ष्यम् । उभयोर्नित्ययो परत्वादाकारलोप । आकारलोपे कृते सम्प्रसारण । सम्प्रसारणे कृते यणादेशेन सिद्ध रूपम्-आह्व प्रह्व इति ॥ एवमपि न सिध्यति । योऽनादिष्टादच पूर्वस्त्य विधि प्रति स्थानिवद्भाव ।

प्र ]आतोऽनुपस॥ प्रह्वाज्य इति । प्रपूर्वाज्जुहोतेरिति उप्रत्यय । 'वार्णादाङ्गवलीय' इत्युक्ते यो ब्रूयात्'समानाश्रयाङ्गवार्णविषयमेत'दिति,त प्रत्याह–एव तर्हीति । नित्यमिति । सम्प्रसारणे कृते पूर्वत्वेन भाव्यमित्याकारलोपस्याऽनित्यत्व मन्यते । अन्तरङ्गमिति। 'वार्णादाङ्ग बलीय' इत्येतत्तु समानाश्रयविषयमेवत्युक्तम् । एवमपि न सिध्यतीति । 'आह्व इत्यादिरूप'मिति शेष । योऽनादिष्टादिति । उकारस्थानादिय

उ ]मित्यनेन सूचितम् ॥ [ कर्मण्यण् ] ॥

आतोऽनुपसर्गे॥ प्रसारणिन -सम्प्रसारणभाज । प्रह्वाज्य इति। के हि सम्प्रसारणे इयन् स्यादिति भाव । भाष्ये-किमुच्यते सर्वत्रेति । सर्वग्रहणस्य 'क' मात्र इत्यर्थ । तमाह-अन्यत्रापीति । 'आतश्चोपसर्ग' इत्यत्रापीत्यर्थ । एवन्तर्हि वार्णादिति । 'इयादे'त्यादिसिद्धयेऽस्या निमित्तनिमित्तत्वेऽपि प्रवृत्तिरावश्यकीति भाव । समानाश्रयेति । 'तदनाश्रयणेऽप्याहे'ति वक्तुमुचितम् । एव च एवन्तर्हीति किञ्चे'त्यर्थकमिति भाव । भाष्ये-अन्तरङ्ग पूर्वत्वमिति । यद्यपि वार्णपरिभाषयाऽपि आकारस्य नित्यत्व वक्तु शक्यन्तथापि तदनाश्रयणेनाऽस्य

१ इति क्वचिन्न। २ 'णस्य पूर्व'। ३ 'स्यात्'। ४ क्वचिन्न। ५ 'यमिन्दु'। ६ नैताऽस्य।

सम्प्रसारणापर पूर्वो भवति । तत 'पूट '। पूट्श्च सम्प्रसारणात्पूर्वो भवति ॥ किमर्थमिदमुच्यते?॥ अकृते आत्वे पूर्वत्व यथा स्यात् । तत 'पदान्तादति'। 'पूट' इत्येव॥ इहापि तर्हिकृत आत्वे पूर्वत्व स्यात्-आह्व प्रह्व इति॥अस्त्यत्र विशेष । आकारान्तलक्षण कविधि, तेनाऽनेनाऽवश्यमात्व प्रतीक्ष्यम् । लिट् पुनरविशेषेण धातुमात्राद्विधीयते ॥

॥^॥ नित्य प्रसारण ह्वो यण्वार्णादान्न पूर्वत्वम् ।
योऽनादिष्टादच पूर्वस्तत्वार्थे स्थानिवत्व हि ॥१॥
प्रोवाच भगवान्कात्यस्तेनाऽसिद्धिर्यणस्तु ते ।
आत को लिट् नैव पूर्व सिद्ध आत्वस्तथा सति ॥२ ॥^॥

प्र ]च्यते ग्न'इति। तेनात्व बाध्यत पूर्वत्वविधानेन। आकारान्तलक्षण इति।अति तीति पर्युदासाश्रयेऽपि ह्वानाम'वेति ज्ञापकादाकारान्तग्रहणे कप्रत्यये कर्तव्ये पूर्व मेवात्व भवति ततत्न्निमित्त प्रत्यय इतिभाव ।उत्तरार्थसङ्ग्रहश्लोकौ-नित्य प्रसारण मिति । कृताऽकृतप्रसङ्गित्वादिति भाव । तत्र कृत पूर्वत्व नियतमाकारलोप इति वार्णादाङ्गमिति वचनादाकारलोपो भवति न तु पूर्वत्व, तत्राकारलोपस्य स्थानिवत्त्वा-दुवङ्प्राप्तीति ह्वो यण्प्रवर्तत इत्यर्थ ।ग्तर आह-योऽनादिष्टदिति। तेनासिद्धिरिति। असिद्धवदत्राभा दित्याकारलोपस्येत्यर्थ ।तस्याऽसिद्धत्वाद्यणादेशो भवतीत्यर्थ ।जुहुवतुरित्यत्रापि तथैव यस्यादित्याह-पूट पूर्व इति । 'आदे' इत्यत्रापि तथैव पूर्वत्व स्यादित्याह-आत क इति ।लिप्नेति। लिट् धातुमात्राद्विधीयते न त्वाकारान्तादेवेत्यर्थ । [आतोऽनुपसर्गे क ] ॥

उ ]प्याकत्व बाधित्वा पूर्व सम्प्रसारण पूर्वत्वञ्चेत्युवङ्किद्वो 'जुहुवु'रित्यादावति भाव । पर्युदासाश्रयेऽपीति । अन्यथाऽन्योन्याश्रय स्यादिति भाव । आभीयाऽसिद्धाऽ नित्य वेनाऽपि 'जुहुवतु'रिति सिध्यति । ह वे इते आत्वोपापूर्व सम्प्रसारण, यतो नित्यम् । नित्यत्व दर्शयति-कृतेति । एवञ्च ह्वो यण्स्त्वीत्यर्थ । वार्णादित्यादि व्याचष्टे-तत्र कृते इति । 'यतोऽनादिष्टादच पूर्वत्वे स्थानिवत्त्वमतो भगवान् कात्य प्रसारणिभ्यो ड प्रोवाचे'त्यन्वय । प्रत्याख्यानवादाह-तेनाऽसिद्धिर्यणस्तु त इति । तेन-आभा'दिति सूत्रेण,यतोऽसिद्धिरतो यणस्त्वित्यर्थ ।'प्रोवाच भगवान् कात्य' इत्युतया 'ड'विधानस्य 'आह्व'मिथ्यर्थमावश्यकता ध्वनिता । तथा चेदमेव ज्ञापकमीदृशे विषये आभायाऽसिद्धत्वाऽभावस्य, वार्णादाङ्गमित्येनदभावस्य वेति जुहुवतुरित्यादिसिद्धि ।योगविभागस्य तथाऽपि कर्तव्यत्वेन गौरवस्य तदवस्थत्वादिति च ध्वनितम् । एवञ्च 'तेनाऽसिद्धि'रित्युक्तिरेकदेशिन प्रौढोक्ति च ध्वनितम् ।

१ 'पदान्तादिति' २ 'कप्रत्ययविधि' । ३ 'पूर्वत्व हि' । ४ 'प्रह्व' । ५ 'न्नादि' ।

तुन्दशोकयोः परिमृजापनुदोः ॥ ३।२।५ ॥

॥ ५॥ तुन्दशोकयो परिमृजापनुदोरालस्यसुखाहरणयो ॥*॥ तुन्दशोकयोः परिमृजापनुदोरित्यत्रालस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दपरिमृजोऽलसः । शोकापनुद पुत्रो जात । यो हि तुन्द परिमार्ष्टि तुन्दपरिमार्ज स भवति । यश्च शोकमपनुदति शोकापनोद स भवति ॥*॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् ॥*॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यान कर्तव्यम् । मूलविभुजो रथ । नखमुचानि धनूंषि । काकगुहास्तिला । सरसीरुहं कुमुदम् ॥

गापोष्टक ॥ ३।२।८ ॥

॥ ~॥सुरासीध्वो पिबते ॥*॥सुराशीध्वो पिबतेरिति वक्तव्यम् । इह मा भूत् । क्षीरपा ब्राह्मणीति॥ पिबतेरिति किमर्थम्?॥या हि सुरा पाति सुरापा सा भवति॥ ॥बहुल तणि॥*॥बहुल तणीति वक्तव्यम् ॥ किमिद 'तणीति'?॥ ॥*॥[तर्णाति] सञ्ज्ञाछन्दसोर्ग्रहणम॥ *॥ या ब्राह्मणी सुरापी भवति नैना देवाः पतिलोक नयन्ति।या ब्राह्मणी सुरापा भवति नैनां देवा. पतिलोकं नयन्ति॥

प्र ]न्यायेन बाधेन । सामर्थ्यादत्र भावे व्यवस्थिते इति भावेन न बाध्यते वर्ग॥

तुन्द । आलस्यसुखाहरणयोरिति । आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो भवतीत्यर्थ ।तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाऽऽहर्तरि प्रत्ययो भवतीत्युक्त भवति । शोकापनोद इति । य सखादिनिन्दनोद्रावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः । [ तुन्दशोकयो ] ॥

गापोष्टक् । पिबतेरिति । लुग्विकरणपरिभाषालभ्यार्थस्थनम्।[गापोष्टक् ]॥

च.] तुन्दशोकयो । तत्र सामर्थ्यादिति । एवं सति ते गम्ये भवत इत्यर्थ । तुन्दपरिमृजे मृजेरचि 'क्ङिति चे'ति पक्षे वृद्धि प्राप्नोति, सा भवत्येव सन्निधाने । यत्तु 'अची'त्येव वक्तव्ये अजादादित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति, तन्न , तत्र तदभावात्, 'यस्मिन्विधि'रिति परिभाषाप्राप्त्याऽऽदिग्रहपार्थ्यस्य तत्राऽऽनुवादाच । अनन्यभाव्यस्वरसात्तत्र 'क्ङि'त्पदेनाविदितिकङ्तिोरेव ग्रहणम् । व्याकरणान्तरे-'सङ्कम'पदेन तयोरेव ग्रहणाचेति परे । 'मूलविभुजादिभ्य' इति तु तादर्थ्ये चतुर्थी । काकगुहा इति । काकेभ्यो गूहितव्या इत्यर्थ । 'घार्थे कविधान'मित्यनेनाऽन्यत्रापि निष्पत्त्यर्थत्वेनैतत्। सरसि सरस्या वा रोहति । कौ मोदत इत्यर्थ । [ तुन्दशोकयो ] ॥

गापोष्टक् । बहुलं तर्णाति । पक्षे 'आनोऽनुपसर्गे' इति क । या ब्राह्मणी सुरापेति । सुरा पिबतीत्यर्थे एवाऽस्य प्रयोग इति बाहुल्काश्रयणम् ॥

१ 'सीध्वो' । २ इदं क्वचिन्न । ३ इद नास्ति । ४ भाव्यमिदमित्यन्ये ।

दिषूपसङ्ख्यानं कर्तव्यम् । पार्श्वशयः पृष्ठशयः उदरशयः ॥*॥ दिग्धसहपूर्वाच्च ॥*॥ दिग्धसहपूर्वाच्चेति वक्तव्यम् । दिग्धसहशयः ॥*॥ उत्तानादिषु कर्तृषु ॥*॥ उत्तानादिषु कर्तृष्विति वक्तव्यम् । उत्तानशयः । अवमूर्धशयः ॥ ॥*॥गिरौ डश्छन्दसि॥*॥गिरावुपपदे छन्दसि डो वक्तव्यः।गिरौ शेते गिरिशः। ॥*॥ तद्धितो वा [ यथा लोमशादयः गिरिशः ] ॥*॥ तद्धितो वा पुनरेष भविष्यति । गिरौ [गिरौ शेते, गिरिरस्यास्तीति] गिरिशः ॥ १५ ॥

चरेष्टः ॥ ३।२।१६ ॥

इह कस्मान्न भवति,–कुरूंश्चरति पञ्चालांश्चरतीति ? ॥ अधिकरण इति वर्तते ॥ ननु च कर्मण्यपि वर्तते, तत्र कुत एतदधिकरणे भविष्यति न पुनः कर्मणीति ? ॥*॥ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥*॥ [ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ]।यदयं 'भिक्षासेनादायेषु च' इति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो–'न भवति कर्मणि' इति ॥ [ चरेष्टः ] ॥

प्र ] अधिकर । दिग्धसहपूर्वाच्चेति । 'दिग्धसह'शब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम् । तत्र दिग्धेन सह शेत इत्यपि कृते मयूरव्यंसकादित्वात् समासः । तद्धितो वेति । यो गिरौ शेते गिरिरस्यास्तीति लोमादिषु दर्शनात्प्रत्ययः ।अन्ये त्वाहुः –गिरौ गिरौ शेत इति 'सङ्ख्यैकवचना'दिति सप्तम्यन्ताच्छस् प्रत्ययः । व्युत्पत्तिर्हि यथाकथञ्चित्कर्तव्या, उणादीनामनियमात् । तदुक्तं हरिणा- 'वैरवासिष्ठगिरिशास्तथैकागारिकादयः । कैश्चित्कथं चिद्व्याख्याता निमित्तावधिसङ्करे' ॥ इति । 'छन्दसी'ति वचनाद्भाषाया गिरिशशब्दस्याऽसाधुत्वमाहु ॥

चरेष्ट । कुरूंश्चरतीति । यस्य कुरव एव प्राप्या स कुरूंश्चरतीत्युच्यते । यश्च कुरुषु भ्रमति स कुरुषु चरतीत्युच्यते । [ चरेष्टः ]

उ ]नार्थन्तु तदावश्यकमिति 'स्थ क चे'ति सूत्रे भाष्ये स्पष्टम्॥[शमि धातो ]॥

अधिकरणे । मयूरव्यंसकेति । दिग्धसहपूर्वता प्रायोगिकी बोध्या, पृथग् 'दिग्धसह'शब्दस्य सिद्ध्यभावात् । 'गिरौ शेते' इत्यर्थे तद्धितस्याऽविधानादाह—यो गिराविति । अन्ये त्वाहुरिति।अनाऽऽरचिस्त्वदन्तशब्दाऽसिद्धिः, शब्दयन्तापत्तिः, तस्य स्वार्थिकत्वेन 'गिरौ गिरौ शेते' इति विग्रहाऽसङ्गतिश्चावेरेति।वीरस्येद वीरासा वा वीरादागतं तत्र भवमिति। वसिष्ठस्येदं तेन कृतं प्रोक्तं वा। गिरौ शेते गिरिरस्तीति वा गिरिश । निमित्तम्-अर्थः, अवधिः–प्रत्ययानाम्प्रकृतिः, तत्सङ्करेरित्यर्थः ॥

चरेष्ट । कुरूंश्चरतीति । तान् गच्छतीत्यर्थः । यदर्थभेदो न स्यात्तर्हि द्वितीयान्तात्पूर्वस्याऽनुपपत्तिप्रतिपादनं व्यर्थं स्यादत आह—यश्चेति । भिक्षाचरे[ति]

१ इदं क्वचित्र । २ 'उरःशय' । ३ इदं लुप्त स्यात् । ४ 'गिरौ शेते' ।

## नासिकास्तनयोर्ध्माधेटो ॥ ३।२।२९ ॥

॥ ॥स्तन धट ॥ ॥ स्तने धेट इति वक्तव्यम्। स्तनन्धय । [॥१॥नासिकाया ध्माध[धेट्श्च]॥ ॥ नासिकायाः ध्मश्च धेटश्चेति वक्तव्यम्।नासिकन्धम । नासिकन्धय ] । तंतो ॥ ॥मुष्टौ ध्मश्च ॥ ॥ मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम् । मुष्टिन्धम मुष्टिन्धय ॥ अन्यत्पमिदमुच्यते ॥*॥ नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्॥ १॥ नासिकन्धम नासिकन्धय । नासिका ॥ नाडी नाडिन्धम नाडिन्धय । नाडी ॥ मुष्टि–मुष्टिन्धम मुष्टिन्धय । मुष्टि॥ घटी घटिन्धम घटिन्धय । घटी ॥ खारी–खारिन्धम खारिन्धय ॥

## प्रियवशे वदः खच् ॥ ३।२।३८ ॥

॥ ॥ गमप्रकरण गमे सुप्युपसंख्यानम् ॥*॥ खच्प्रकरणे गमे सुप्युपसंख्यानं कर्तव्यम् । मितङ्गमो हस्ती, मितङ्गमा हस्तिनी । ॥*॥ विहायसो विह च॥ ॥विहायसो विह इत्ययमादेशो भवतीति वक्तव्यम् ,खच।विहङ्गम । ॥ ॥ खच डिद्वा ॥ ॥ खच डिद्वा वक्तव्य । विहङ्ग । ॥ ॥ डे च ॥*॥ डे च विहायसो 'विह' इत्ययमादेशो वक्तव्य । विहग । [ प्रियवशे वद ] ।

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड॰ ॥ ३।२।४८ ॥

॥*॥ डप्रकरण सर्वत्रपन्नगोरुपसंख्यानम् ॥ ॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यान कर्तव्यम् । सर्वत्रग , पन्नग ॥ ॥ उरसो लोपश्च॥ ॥ उरसो लोपश्च वक्तव्य । उरग ॥ ॥ सुदुरोरधिकरणे ॥ २॥ सुदुरोरधिकरणे डो वक्तव्य । सुगं दुर्गं ॥ ३॥ निसो देशे ॥ ॥ निसो देशे डो वक्तव्य । निर्गो देशे ।

प्र ] नासिका। स्तने धेट इति। यथासंख्याऽभावार्थ एतावान्योग कर्तव्य इत्यर्थ । वार्तिकस्याप्यन्यासमुद्रायस्य भाष्यकार आह–अन्यत्पमिति।डे चेति।विहायःशब्द पूर्वाद्गमेरन्यत्रापि दृश्यत इति डप्रत्यये सति विहादेश । [नासिकास्तनयो ] ॥

उ ] नासिका। एतावान्योग इति। एतदन्यास्थायक वार्तिकमित्यर्थ । वार्तिकस्याप्येति । अपिना 'नासीमुष्ट्योर्धे'ति सूत्रस्याऽपि । 'मुष्टौ ध्मश्चे'ति वार्तिक 'नाडीमुष्ट्योर्धे'ति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रम कार्य , 'यथासंख्य सूत्रस्थभाष्ये स्पष्टत सूत्रोपादानात् । यद्यपि नाडीमुष्टिविषये तन्मूत्र यथासंख्यमुक्तत्वाद्यन्द्राप्यवार्तिकविरोधात्ताप्य प्रौढिवाद इति बोध्यम् । एवञ्चाऽत्र 'नाडी'शब्देन 'ध्म' एव सबन्धो, 'मुष्टि' शब्दे नोभयोरिति बोध्यम् । पूर्ववार्तिकदूषणेन नाडीशब्दसम्बन्धोऽप्युभयोरित्याह– नासिकानाडीत्यादि । अत्र ध्माध धटश्चे ति वर्तते ॥ [ नासिका ] ।

१ क्वचित् । २'खारी'। ३पूर्वापरवैपरीत्य क्वचित् । ४'चादेशो ।५'सुगं' 'दुर्गम्' ।

प्रतिषेधोऽनर्थकः ॥ किं कारणम् ?॥ 'ख्युन्ल्युटोरविशेषात्' । ख्युना मुक्ते ल्युटा भवितव्यं । न चैवाऽस्ति विशेषश्च्व्यन्त उपपदे खा ख्युनो वा ल्युटो वा । तदेव रूपं स एव च स्वरः॥ अयमस्ति विशेषः—ल्युटि सतीकारेण भवितव्यं, ख्युनि सति न भवितव्यम्॥ख्युन्यपि सति–[ईकारेण] भवितव्यम् । एवं हि सौनागाः पठन्ति–॥*॥ 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्' ॥*॥ इति ॥ अयं तर्हि विशेषः,—ख्युनि सति नित्यसमासेन भवितव्यम्, उपपदसमासो हि नित्यसमास इति । ल्युटि सति न भवितव्यम्॥ल्युट्यपि [सति] भवितव्यम् । गतिसमासोऽपि हि नित्यसमासः, च्व्यन्तं च गतिसंज्ञं भवति ॥ [॥*॥ मुमर्थं तु ॥*] ॥ मुमर्थं तर्हि प्रतिषेधो वक्तव्यः । ख्युनि सति मुमा भवितव्यं ल्युटि सति न भवितव्यम् ॥*॥ मुमर्थमिति चेन्नाऽव्ययत्वात् ॥*॥ मुमर्थमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अव्ययत्वात्' । अनव्ययस्य मुमुच्यते, च्व्यन्तं चाऽव्ययसंज्ञं [भवति]॥*॥ उत्तरार्थं तु ॥*॥ उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । 'कर्तरि भुवः खिष्णुच्खुकञौ' । 'अच्वौ' इत्येव । आढ्यीभविता ॥ अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति?॥ रूढिशब्दप्रकारास्ताच्छीलिकाः । न च रूढिशब्दा गतिभिर्विशेष्यन्ते।

---

प्र] अस्तु । उत्तरार्थमिति । उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादारम्भणमिति ख्युद्य भाष्यम् । तत्र यदन्यैरुक्तं–'प्रतिषेधसामर्थ्यात्ख्युन्यसति ल्युडपि न भवतीति ल्युटोऽप्यसमर्थनं प्रतिषेध' इति । तदयुक्तम् । रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोऽपि गौर्भवति । गोपिण्डाच्चाऽन्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति । तथा ताच्छीलिका अपि क्रियाविषयं ताच्छील्यमुपादाय क्रियाविरहेऽभावेऽपि प्रयुज्यन्ते, केचिदेव तु गत्या संबध्यन्ते,—आगामुकः प्रवर्धुक इति । न तु सर्वे । यथा कामुक इति । न भवति 'प्रकामुक' इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषांचिद्गतिसंबन्धो भवति ताच्छीलिकानां तु भवति केषांचित्त सर्वेषामिति प्रतिपादयति । द्रव्योपलक्षणाय क्रियाया प्रवृत्तत्वादान्तातिशयं प्रति आसक्त्याऽभावात्तदतिशययोतनार्थं गतिसंबन्धाभावस्ताच्छीलिकेष्वित्यर्थः ।

---

उ.]भाष्ये–ख्युना मुक्त इति। भाष्ये स एव स्वर ।लित्स्वरनित्स्वराभ्याम् । ल्युटा भाव्यमिति। अवश्यभाव्यमित्यर्थ ।तदयुक्तमिति । भाष्यविरोधादित्यर्थ । उत्तरार्थत्वं वदता इहार्थत्वाऽभावस्य भाष्यकृता बोधितत्वादिति भाव । केचिदेवेति । स्पष्टं प्रतीयमानक्रियाविशेषा इति भाव । द्रव्योपलक्षणायेति । अवस्थाविशेषविशिष्ट-

---

१ इदं प्राचीन । २ 'ल्युटः ख्युनो वा' । ३ इदं वार्त्तिकमित्यन्ये ।

न हि भवति देवदत्त प्रदेवदत्त इति । [ आभ्यमुभगस्थूर ] ॥

कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३।२।५७ ॥

किमर्थं खिष्णुजिकारादि क्रियते न च स्नुरित्येवोच्येत । तत्रायमप्यर्थ' स्वरार्थश्चकारो न कर्तव्यो भवति ॥ केनेदानीमिकारादित्व क्रियते ? ॥ ॥*॥इष्णुच ईकारादित्वमुदात्तत्वात्कृत भुव ॥*॥भवतिरुदात्तस्तस्योदात्तत्वादिड् भविष्यति ॥ इद तर्हि प्रयोजन–खिदय क्रियते, तत्र चन्वं कृते सन्देह स्यात् क्विद्वा खिद्वेति ॥ सन्देहमात्रमेतद्भवति॥सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । खिदिति व्याख्यास्याम । ॥*॥ नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुच ॥*॥ इद तर्हि प्रयोजन 'कृत्यो केष्णुच्चार्वादयश्चे'त्येष स्वरो यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम्, अय

प्र ] प्रदेवदत्त इति।प्रशब्देन देवनक्रिया न विशेष्यते, देवशब्दस्य रूढिशब्दत्वात्, तदवयवस्य च देवदत्तशब्दस्येत्यर्थ । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा इति तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ [ आभ्यसुभग ] ।

कर्तरि । नञ इति पञ्चमी । नञ उत्तरस्य स्वरसिद्ध्यर्थमित्यर्थ । अयम पीति । क्स्नुप्रत्यय क्रियते, चकार सामान्यग्रहणार्थ इति मन्यते । खिष्णुचि तु कृते इकारोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते । [कर्तरि भुव ] ॥

उ ] स्योपलक्षणार्थेत्यर्थ । न तु क्रियाप्रकारको बोध इति तात्पर्यम् । वस्तुतस्त्वभिधानस्वाभाव्यात्केषाञ्चिदेव कृत्प्रयोगाणा गतिसम्बन्धो न सर्वेषामिति भाष्यतात्पर्यम्।

भाष्ये–इष्णुजिति । 'भुवश्चे त्यनेन । 'प्रदेवदत्त' इत्यत्र 'प्र'शब्दस्य देवनक्रियाया दानक्रियाया वाऽन्वय । नाद्य इत्याह–देवशब्दस्येति । नान्त्य इत्याह–तदवयवस्य चेति । 'तदवयवस्ये'ति बहुव्रीहि । व्याघ्रादौ तर्हि सज्ञाशब्दे कथ गतिसम्बन्धोऽत आह–व्याघ्रादयस्त्विति । [ आभ्यसुभग ] ॥

कर्तरि भुव । भाष्ये–'न च क्स्नु'रिति पाठ । उदात्तत्वादिति । तेन 'एकाच उपदेश' इत्यस्याऽप्रवृत्तिरिति भाव । ननु 'कृत्योकेष्णु'जिति सूत्रेण नञ स्वराऽभावादाह–नञ उत्तरस्येति । अन्तोदात्तनिपातनञ्समिदम्पूर्वपदप्रकृतिस्वराप वाद । ननु 'तदनुबन्धक'परिभाषया इष्णुच एव ग्रहण भविष्यति न खिष्णुच इत्यत आह–इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषातदनुबन्धकपरिभाषाबाधे च खिष्णुच करणेन चलाणलयोरसिद्धत्वाऽभावे च सिद्धे इकारोच्चारण व्यर्थमिति 'अयमपीति कृते' इति भाष्यतात्पर्यम्।न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ [ कर्तरि भुव ]।

१'क्स्नु''न स्नु'।२श्लोकवार्त्तिकम्।३'भवतेरुदात्तत्वादिकारादित्व भविष्यति'।

मपीटि कृते पत्वे णत्वे चेष्णुजेव भविष्यति ॥ न सिध्यति–'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति । अथ वाऽसिद्धं खल्वपि षत्वं, तस्याऽसिद्धत्वादिस्नुजेव भविष्यति ।

॥*॥ इष्णुच ईकारादित्वमुदात्तत्वात्कृतं भुवः ।

ननस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥*॥ [ कर्तरि भुवः ] ॥

स्पृशोऽनुदके क्विन् ॥ ३।२।५८ ॥

किमर्थो नकारः ?॥*॥[नकारः] स्वरार्थः ॥*॥'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाचोऽयं विधीयते । तत्र नाऽर्थः स्वरार्थेन नकारेणाऽनुबन्धेन । धातुस्वरेणैव सिद्धम् ॥ यस्तर्ह्यनेकाज्दधृगिति ? ॥ वक्ष्यत्येतत्,–'धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यत' इति ॥ विशेषणार्थस्तर्हि ॥ [ विशेषणार्थस्तर्हि भविष्यति ] ॥ क्व विशेषणार्थेनार्थः ? ॥ 'क्विन्प्रत्ययस्य कु'रिति । 'क्विप्रत्ययस्य कु'रित्युच्यमाने सन्देहः स्यात् क्विपः प्रत्ययस्य क्विनो वेति ॥ सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति क्विप्रत्ययस्येति व्याख्यास्यामः ॥[स्पृशोनुदके]॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३।२।५९ ॥

दधृगिति किं निपात्यते ? ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते ॥ [ ऋत्विग्दधृक् ] ॥

त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३।२।६० ॥

किमर्थो नकारः ? ॥ ॥*॥ [ नकारः ] स्वरार्थः ॥*॥ ञ्नितीत्याद्यु-

---

प्र.] स्पृशोनु । सन्देहः स्यादिति । क्विमेकपकारको निर्देश उत द्विपकारक इत्यर्थः । व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाऽभावः ॥

त्यदादिषु । नकारस्य कार्यद्वयं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते–किमर्थ इति ।

---

उ ] स्पृशोऽनु । एकाचोऽयमिति भाष्ये । यङ्लुगन्तात्त्वयं न क्विन्, अनभिधानादिति भावः । ननु 'क्वि'ग्रहणे क्विपोऽपि ग्रहणं स्यादत आह–तदनुबन्धेति । अत्र सूत्रे 'कर्मणी'ति सम्बध्यत एव । 'मन्त्रस्पृ'गित्यादि तु क्विपा सिद्धम् । 'क्विन्प्रत्ययस्ये'ति बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम् ॥ [ स्पृशोऽनु ] ।

ऋत्विग् । अन्तोदात्तत्वञ्चेति । इदञ्च क्विनो नकारसत्त्वे उचितम् । सगुष्णिहोर्निपात्यमानत्वात्तु न स्पष्टत्वात्तन्नोक्तम् । 'क्रुञ्चा'मिति निपातनान्नलोपाऽभाव

---

१इदं क्वचिन्न । २'दिष्णुजेव' । ३'पत्वस्या' ।४'भवति' ।५ 'उदात्तत्वात्कृत्व सिद्धमिकारादित्वमिष्णुच' । ६ 'त्वमिष्यते' । ७ इदं भाष्यमित्यन्ये । ८ 'क्विनेति' ।

॥*॥ सदादिषु सुब्ग्रहणम् ॥*॥ सदादिषु सुब्ग्रहणं कर्तव्यम् । होता वेदिषत् । अतिथिर्दुरोणसत् ॥ न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् ? ॥ वक्तव्यं च ॥ किं प्रयोजनम् ? ॥ 'ज्ञापकार्थम्' ॥ किं ज्ञाप्यम् ? ॥ एतज्ज्ञापयत्याचार्योऽन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ यदः सुप्यनुपसर्गग्रहणं चोदितं तन्न वक्तव्यं भवति ॥

अदोऽनन्ने ॥ ३।२।६८ ॥ क्रव्ये च ॥ ३।२।६९ ॥

किमर्थमिदमुच्यते नाऽदोऽनन्न इत्येव सिद्धम्[1]॥ न सिध्यति । छन्दसीत्येतदनुवर्तते । भाषायामयमारम्भः । पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तं, तच्चावश्यं निवर्त्यम्,—आमाद्, सस्यादित्येवमर्थम् ॥ अत उत्तरं पठति ॥८॥

अदोऽनन्ने क्रव्येग्रहणं वासरूपनिवृत्त्यर्थम् ॥९॥ अदोऽनन्ने क्रव्येग्रहणं क्रियते॥[किं प्रयोजनं ? ॥ 'वासरूपनिवृत्त्यर्थम्' ॥] वासरूपो मा भूदिति । [ अदोऽनन्ने ]।

---

प्र ] सत्सूद्विष । सदादीनां येषां चित्सकर्मकत्वात्कर्मैवोपपदं प्राप्नोतीति मत्वाह— सदादिष्विति । वेदिषदिति । वेद्यां सीदतीति क्विप् । पूर्वपदादिति षत्वं । दुरोणे सीदतीति दुरोणसत् । दुरोणं गृहम् । तन्न वक्तव्यमिति । अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्ते सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते । यत्र चानुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते,—स्पृशोऽनुदके क्विन्नित्येतदपि ज्ञापनस्य प्रयोजनम् । तेनोपस्पृशतीत्यादौ क्विन्न भवतीति । [सत्सूद्विष] ॥

क्रव्ये च । वासरूपो मा भूदिति । तेन 'क्रव्याद' इत्यण्न भवतीत्यर्थः ।

---

उ.] सत्सू । कर्मैवोपपदमिति । 'कर्मणी'त्यधिकारादिति भावः । सुब्ग्रहणन्तु तन्निवृत्तिद्योतनायेति बोध्यम् । वस्तुतः सुब्ग्रहणमेवाऽत्राऽनुवर्तते, 'कर्मणी'ति निवृत्तमित्यन्वाख्यानमेवैतत् ।अत्र सूत्रे 'उपसर्गेऽपि' ग्रहणम् 'अनुपसर्ग' इत्यस्य 'आतो नुपसर्गे' इति सूत्रादनुवर्तमानस्याऽत्रे निवृत्तिद्योतनाय । भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याय 'अनुपसर्गे' इत्यस्याऽनधिकारं द्योतयति । तत्फलं ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन 'प्रष्ठ' इत्यादिसिद्धिः । ननु 'यदः' सुपी'त्यत्र 'गदमदे'त्यतोऽनुपसर्गग्रहणाऽनुवृत्तिप्रदर्शनपरं वार्तिकं नाऽपूर्वकरणपरमत आह— अनुपसर्गेति । यत्र चेति । यत्र 'स्पृशोऽनुदके' इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः । इदञ्चिन्त्यम् । अत्रापि 'जनोऽनुपसर्गे' इत्यतोऽनुवृत्तिसम्भवात् ॥ [ सत्सूद्विषद्रुह ] ॥

अदोऽनन्ने । भाष्ये—आमादित्येवमर्थमिति । लोके एतत्सिद्ध्यर्थमित्यर्थः । क्रव्याद इत्यणन्ते ते । आममांसभक्षणकर्तेत्यर्थ इति भावः । पक्वमांस-

---

1 'सीति वर्तते' । 2 इदं क्वचित् । 3 'स्त्वग्रह' । 4 'पृक्ते' 'तुक्ते' ।

[भवंति] ॥ अवश्य तद्वक्तव्य दीर्घार्थम् ॥ नैतदस्ति प्रयोजनम् । सिद्धमत्र दीर्घत्वम् 'अत्वसन्तस्य चाधातो'रिति ॥ यत्र तेन न सिध्यति तदर्थम् ॥ क्व तेन न सिध्यति ? ॥ सम्बुद्धौ हे श्वेतवा इति॥ न तर्हीदानीं डस्वक्तव्य ? ॥ वक्तव्यश्च ॥ किं प्रयोजनम् ? ॥[१]॥ उत्वार्थम् ॥ ॥ श्वेतवोभ्या श्वेतवोभि ॥

स्थः क च ॥ ३।२।७७ ॥

किमर्थं स्थ कक्विपावुच्येते न क्विप्सिद्धोऽन्येभ्योपि दृश्यत इति, कश्च आतोऽनुपसर्ग क इति ? ॥ न सिध्यति । विशेषविहित. क सामान्य विहित क्विप बाधते ॥ वासरूपेण क्विपपि भविष्यति ॥ इद तर्हि–शस्थ शस्था ॥ उक्तमेतत् 'शमि सज्ञाया धातुग्रहण कृञो हेत्वादिषु टप्रतिषेधार्थ'-मिति । स यथैवाऽच्ट बाधते एव कक्विपावपि बाधेत ॥ [ स्थ क च ]॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३।२।७८ ॥

सुपीति वर्तमाने पुन सुब्ग्रहण किमर्थम् ? ॥ अनुपसर्गं इत्येव तद् भूत्,इद सुप्मात्रे यथा स्यात्,–प्रस्थायारिण्य उदासारिण्य इति॥ ॥णिन्विधौ

प्र ] स्थ क च । शस्था इति । 'इचमकारादा'विति वचनाद्भाष्यकारवचन प्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाऽभाव । [ स्थ क च ]।

उ ] इत्यस्याऽपि सिद्धेर्द्वयमपि न कार्यमित्यन्ये । [ मन्त्रे श्वेतवहोक्थ ] ।

स्थ क च।सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादाविति वचन मुख्य वकारादिप्रतिपत्त्यर्थमिति वदन्तम्प्रत्याह–भाष्यकारवचनेति । यद्वा यायान इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह–भाष्येति । अत एव 'ध्यायते सम्प्रसारण'मिति वार्तिके 'दधातेर्वा धी'रिति भाष्ये क्विप्यपीत्व कृतम् । वस्तुतो भाष्ये क्विप्पदेन सादृश्याद्विजुच्यते इत्शीलाऽप्रसक्तिरेवाऽत्रेति बोध्यम् । भाष्ये–कक्विपाविति । 'आतोऽनुपसर्गे'इति 'क्विप्चे'ति विहितौ। तत्र कस्य बाधे 'शस्थ' इति न सिध्येत्तदर्थं स्थ को विधेय । कस्य चाऽज्वाधकत्वेन क्विबपवादत्वाऽभावारपरत्वेन क्विपो नित्यबाधवारणाय क्विपपि विधेय इति भाव । न चाऽत्रैव 'शस्था' इत्यस्य सिद्धत्वेन क्विपो बाधे फलाऽभाव । शस्थाशब्दाच्छसि आतो लोपानापत्ते । 'कृदति'दिति सूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात् । 'पुरस्ता'दिति न्यायेन टस्यैव तेन बाध इति तु न शङ्क्य, 'येन नाऽप्राप्ति'न्यायेन क्विप एव बाध इत्यस्याऽपि वक्तु शक्यत्वात् । तस्माद्भाष्यसामान्यचिन्तयोभयोरपि स बाधक स्यादिति तात्पर्यम्॥ [ स्थ क च ] ॥

१ इद क्वचिन्न । २ अत्र 'श्वेतवादीनां डस्, उत्वार्थम्' इति वार्तिकपाठमिति तु गौडा । ३ 'बाधेन' ।

प्रसज्येत। अश्राद्धभोजीत्येव चेष्यते ॥ एवं तर्हि नञ एवायं भुजिप्रतिषेधवाचिन श्राद्धशब्देनाऽसमर्थसमासो,—न भोजी श्राद्धस्येति॥ स तर्ह्यसमर्थसमासो वक्तव्य ? ॥ यद्यपि वक्तव्योऽथ वैतर्हि बहूनि प्रयोजनानि ॥ कानि?॥ ॥*॥ [प्रयोजनानि] असूर्यंपश्यानि मुखान्यपुनर्गेया श्लोका अश्राद्धभोजी ब्राह्मण मुहुःपुनरस्ये'ति ॥*॥ । [ प्रते ] ।

आत्ममाने खश्च ॥ ३।२।८३ ॥

आत्मग्रहणं किमर्थम् ? ॥ परमाने मा भूदिति । क्रियमाणेऽपि वै आत्मग्रहणे परमाने प्राप्नोति ॥ किं कारणम् ? ॥ 'आत्मन' इतीय कर्तरि षष्ठी, 'मान' इत्यकारो भावे। स यथेवात्मान मन्यतेऽथापि परमात्मन एवाऽसौ मानो भवति॥ नैष दोष । आत्मन इति कर्मणि षष्ठीय॥कथम् ?॥ 'कर्तृकर्मणो कृती'ति ॥ ननु च कर्मण्यपि वा एतेनैव विधीयते तत्र कुत एतत्—कर्मणि भविष्यति न पुन कर्तरीति ? ॥ एव तर्हि—॥*॥ कर्मकर्तरि

प्र ]भाष्यमिति नास्ति स्वरभेद।अत्राहु —यदा णिनीत्यत्र संज्ञायामित्यनुवर्तते तदाऽसंज्ञायामस्ति स्वरभेद । अथ नानुवर्तते स्वरभेदाऽभाव । भोजीति । एतदपि भुजिना सबन्ध नञ प्रदर्शयितु प्रक्रियावाक्यमुपात्तम् । न हि केवलस्य भोजिशब्दस्य प्रयोग , सुप्युपपदे प्रत्ययविधानात् । तदेतदुक्तं भवति,—न श्राद्ध भुङ्क्त इति वाक्य कृत्वा नञ श्राद्धशब्देनाऽसमर्थसमासं विधायाऽश्राद्धशब्द उपपदे णिनि कर्तव्य । णिनीत्यत्र संज्ञानुवृत्तौ सत्यामत्र कृत्स्वर । [ प्रते ] ॥

आत्ममाने।आत्मशब्द प्रत्यगात्मवचन परव्यावृत्तिं करोति। कर्मकर्तरीति । यदा प्रत्ययार्थ कर्ता, आत्मानमेव पाण्डित्यादियुक्त मन्यते तदाऽसौ कर्मकर्ता भवति। तत्र यदि कर्तरि षष्ठी स्यात्तदात्मग्रहणमनर्थकं स्यात् । कर्तृसम्बन्धाऽव्यभिचारा-

उ.]एवेति भाव।अथ नाऽनुवर्तत इति।'उपमान शब्दार्थ' इति सूत्रस्थप्राग्भाष्येऽयमपि पक्षो दृश्यत इति भाव । अत्र पक्षे स्वरभेदोक्तिरेकदेश्युक्तिरिति बोध्यम् । प्राग्भाष्य चैकदेश्युक्ति । भाष्ये भुजिप्रतिषेधवाचिन इति । तदर्थबोधकस्य नञ इत्यर्थ । सुप्युपपद इति । बहुलग्रहणन्तु क्वचिदिष्टसिद्धय इति भाव ॥[ प्रते ]।

आत्ममाने। पूर्वं कर्मण इदानीं कर्तृत्वाऽभावेन युगपदेकस्य कर्मकर्तृत्वविरोधेन चेदमसङ्गतमत आह—यदेति । केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्मविरोध इति भाव । आत्मग्रहणमनर्थकमिति । यद्यपि 'उभयप्राप्ता'विति नियमा-

१ 'जीति चेष्यते'। २ 'अश्राद्धभोजीत्यसमर्थसमास ' इत्येवमत्र वार्तिक लुप्तमितिगौडा । ३ इदं वार्तिकमित्यन्ये । भाष्यमेवेत्यन्ये । ४ इद क्वचित्र । ५ 'इतीयं कर्मणि षष्ठी' । ६ 'वै तेनैव' ।

एव तर्हि 'धातो'रिति वर्तते । धातौ भूते॥ धातुर्वै शब्दो न च शब्दस्य भूत-भविष्यद्वर्तमानताया सम्भवोऽस्ति ? ॥ शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते ॥

क पुनर्धात्वर्थः ?॥ क्रिया । क्रियायां भूतायाम् ॥ यद्येवं ॥८॥ निष्ठाया-मितरेतराश्रयत्वादप्रसिद्धि ॥*॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥ के

प्र ]शनाय पृच्छति—कस्मिन्निति । इतर आह—काल इति । तस्यैव भूतादिशब्द-वाच्यत्वेन सुप्रसिद्धत्वादिति भाव । तत्र केचिन्नित्य काल पदार्थानामनुज्ञाप्रतिबन्धा-भ्या स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेद-व्यवहारो भूतादिव्यपदेशश्च । अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्र-सिद्धपरिमाणाया क्रियाया परिच्छेदकत्वेनोपात्ता अहरादिव्यपदेश्या काल इत्याहु । न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थान न लभ्यत इत्यर्थ । न च शब्दस्येति । शब्दस्याऽर्थे गुणभावाद्गुणस्य विशेषणसम्बन्धाऽयोग्य-त्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि भूताद्यन्यतरविधानासंभवादुच्चरितलक्षणभूत-

उ ]त्वादिरन्य इति तात्पर्यम्। अभ्यनुज्ञाप्रतिबन्धाभ्यामिति। तद्रूपाभ्यामर्था-भ्यामित्यर्थ । तत्राऽभ्यनुज्ञया—स्थित्युत्पत्तिहेतु । प्रतिबन्धेन—प्रलयहेतु । ईश्वराऽधिष्ठितत्वेन च तदुपपत्ति । ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाऽभावा-त्कथ भूतत्वव्यवहार इत्यत आह—तत्र संसर्गीति । तत्क्रियोपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थ । अन्ये त्विति । तथा च तस्या अनित्यत्वान्निर्द्ध एव भूतादिव्यवहार इत्यर्थ । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्य-त्वम् । उत्तरदेशसयोगाऽवच्छिन्नक्रियेति चेत्तस्या विशेष्यविशेषणसम्बन्धरूपत्वे त्रयाणामपि स्थिरत्वात्क्षणव्यवहारनियामकस्याऽभाव । अतिरिक्तत्वे सिद्धोऽतिरिक्त-क्षणपदार्थ इति तत्प्रचयैरेव कल्पमुहूर्त्तादिव्यवहारोपपत्तौ किमखण्डेन तेन ?। स्पष्टञ्चेद 'काल परिमाणिने'त्यत्र भाष्ये इति निरूपित तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहार श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽ-प्येष दोषोऽस्त्येव । किञ्च 'प्रसिद्धपरिमाणे'त्युक्तिरसङ्गता, तस्या अपि क्रियान्त-रस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् । शब्दस्येति । स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसम्बन्धाऽयोग्यत्वादिति भाव । तदाह—गुणस्येति । नित्यत्वा-देरत्यनेन भूतादिव्यवहाराऽयोग्यत्व दर्शयति । वैयर्थ्यादिति । अनुच्चारिता-प्रत्ययविधेरसम्भवादिति भाव । न च शब्दस्येति—भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यताया सम्भवो नेत्यर्थ । अनित्यत्वपक्षेऽपि यथा वर्त्तमानशब्दस्य प्रकृतित्वसम्भवो न तथा भूतभविष्यतोः शब्दयो प्रकृतित्वसम्भव इति योजना

१ 'ताया.' । २ इदं क्वचिन्न ।

एवं तर्हि 'धातो'रिति वर्तते । धातौ भूते॥ धातुर्न शब्दो न च शब्दस्य भूतभविष्यद्वर्तमानतायाः सम्भवोऽस्ति ? ॥ शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते ॥

क पुनर्धात्वर्थ ?॥ क्रिया । क्रियायां भूतायाम् ॥ यद्येव ॥४॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धि ॥४॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धि स्यात् ॥ के

प्र ]श्नाय पृच्छति–कस्मिन्निति । इतर आह–काल इति । तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भाव । तत्र वै नित्य काल पदार्थानामनुग्रहप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र सम्बन्धिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च । अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणाया क्रियाया परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहु । न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थान न लभ्यत इत्यर्थ । न च शब्दस्येति । शब्दस्याऽर्थे गुणभावाद्गुणस्य विशेषणसम्बन्धाऽयोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि भूतात्प्रत्ययविधानासम्भवादुच्चरितत्वलक्षणभूत-

उ ]त्वादिमन्य इति तात्पर्यम्। अभ्यनुज्ञाप्रतिबन्धाभ्यामिति। तद्रूपाभ्यामर्थाभ्यामित्यर्थ । तत्राऽभ्यनुज्ञया–स्थित्युत्पत्तिहेतु । प्रतिबन्धेन–प्रलयहेतु । ईश्वराऽधिष्ठितत्वेन च तदुपपत्ति । ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाऽभावात्कथं भूतत्वव्यवहार इत्यत आह–तत्र सम्बन्धीति । तत्क्रिययोपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थ । अन्ये त्विति । तथा च तस्या अनित्यत्वात्सिद्ध एव भूतादिव्यवहार इत्यर्थ । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगाऽवच्छिन्नक्रियेति चेत्तस्या विशेष्यविशेषणसम्बन्धरूपत्वे त्रयाणामपि स्थिरत्वात् क्षणव्यवहारनियामकत्वाऽभाव । अतिरिक्तत्वे सिद्धोऽतिरिक्त क्षणपदार्थ इति तत्प्रचयैरेव कल्पमुहूर्त्तादिव्यवहारोपपत्तौ किमखण्डेन तेन ?। स्पष्टश्चेद 'काल परिमाणिने'त्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहार श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽप्येष दोषोऽस्त्येव । किञ्च 'प्रसिद्धपरिमाणे'त्युक्तिरसङ्गता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् । शब्दस्येति । स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसम्बन्धाऽयोग्यत्वादिति भाव । तदाह–गुणस्येति । नित्यत्वादेत्यनेन भूतादिव्यवहाराऽयोग्यत्वं दर्शयति । वैयर्थ्यादिति । अनुच्चारिताप्रत्ययविधेरसम्भवादिति भाव । न च शब्दस्येति—भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यतायां सम्भवो नेत्यर्थ । अनित्यत्वपक्षेऽपि यथा वर्त्तमानशब्दस्य प्रकृतिवगम्भवो न तथा भूतभविष्यतो शब्दयो प्रकृतिवगम्भव इति योजना

१ 'ताभ्या '। २ इद क्वचिन्न।

तरेतराश्रयता ? ॥ भूतकालेनाऽव्ययशब्देन निर्देशः क्रियते, निर्देशोत्तरकालं च भूतकालता । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि [कार्याणि] च न प्रकल्पन्ते ।॥*॥ अव्ययनिर्देशात्सिद्धम् ॥ ॥ [ अव्ययनिर्देशात्सिद्धमेतत् ] ॥ अव्ययवता शब्देन निर्देशः करिष्यते । अवर्तमानेऽभविष्यतीति ॥ स तर्ह्यव्ययवता शब्देन निर्देशः कर्तव्यः ? ॥ न कर्तव्यः । अव्ययमेष 'भूते'शब्दो, नैषा भवतेर्निष्ठा ॥ कथमव्ययत्वम् ? ॥ ['उपसर्ग]विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा ॥ अथापि भवतेर्निष्ठैवमप्यव्ययमेव ॥ कथम् ? ॥ न व्येतीत्यव्ययमिति ॥ क्व पुनर्न व्येति ?॥ एतौ कालविशेषौ भविष्यद्वर्तमानौ । स्वभावतो भूते एव वर्तते ॥ यदि तर्हि न व्येतीत्यव्ययम् ॥ ॥ न वा तद्विधानस्याऽन्यत्राऽभावात् ॥२॥ न वा भूताधिकारेणाऽर्थः ॥ किं कारणम् ?॥ 'तद्विधानस्यान्यत्राऽभावात्'।[3]ये ऽपि ह्येते इत उत्तरं प्रत्यया शिष्यन्ते [4]ऐतेऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ । स्वभावत [एव ते] भूत एव वर्तन्ते॥ अत उत्तरं पठति

---

प्र ]न्याश्रये च विशेषणवैयर्थ्यादिति भावः ।भूतकालेनेति । भवतेर्निष्ठाप्रत्ययो भूतक्रियावाचिनो विधानस्य, न च भूताधिकारमन्तरेण निष्ठाप्रत्ययस्य भूतक्रियाविषयत्वं लभ्यते । न च भूतक्रियाविषयनिष्ठाविधानमन्तरेण भूताधिकार उपपद्यते । तत्रश्चाधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इतीतरेतराश्रयत्वमित्यर्थः । एवमपीति।न शास्त्रीयमव्ययत्वमभिमतं किं तर्हि नित्यत्वमित्यर्थः ।ततो नित्यो भूतशब्दो निष्क्रान्तार्थवाची नित्येनार्थेन भविष्यद्वर्तमानप्रतिद्वन्द्विना सम्बद्धोऽभिनियत इत्यर्थः ।

---

उ ]बोध्या। क्रियायामभूतायामिति । तस्यामभूतत्वञ्च वर्तमानध्वंसप्रतियोगिकालवृत्तित्वम् । भूतकालेनेति । भूतकालक्रियावाचकेनेत्यर्थः । अव्ययनिर्देशादिति । वार्तिकेऽव्ययपदमर्शं आचजन्त, न्यायान्तरपरञ्चेन्न्याशयेनाह–अव्ययवतेति । अव्ययमेष इति । अव्ययस्य भूतेशब्दस्य निर्देशादिति वार्तिकार्थ इति भावः । नित्येनाऽर्थेनेति । साधुत्वज्ञानं न शाब्दे कारणं नाऽप्यसाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः । परमतेऽपि शिष्टोच्चारितत्वेन साधुत्वाऽनुमानाद्बोधः । शास्त्रं च तत्प्रत्ययश्च तु पश्चाद्भविष्यतीत्यदोषः । यदि तु शास्त्रेणैव निष्पाद्यं स्यात्स्यादयं दोष इति भावः । भाष्ये–न व्येतीति । विविधमर्थं न प्राप्नोतीत्यक्षरार्थः । शास्त्राऽभावेऽपि तदर्थक एवाऽयमिति भावः । तदुक्तं कैयटेन–नित्यत्वमित्यर्थ इति । क्व पुनर्न व्येतीति । क्वेति विषयसप्तमी, कस्मिन्विषये विविधमर्थं न प्राप्नोति । किं रूपं विविधमर्थं न प्राप्नोतीत्यर्थः । तत्रोत्तरमाह भाष्ये–एतौ

---

१क्वचित्।२'वर्त्तमानभवि'।३'येऽप्ये'।४तेऽप्येतौ'।५'क्रान्तवाची'।६ शास्त्रजतत्र'।

॥*॥ भूताधिकारस्य प्रयोजनं कुमारघाती शीर्षघात्यागुरुः निदाघ तुलान

प्र ]कुमारघातीति। यदीह भूताधिकारो न क्रियते तदा 'कर्मणि हन' इति णिनि सामान्येन विधीयते । 'कुमारशीर्षयोर्णिनि'रित्ययमपि [णिनि-] प्रत्ययः काल-सामान्ये । पुनर्विधानं तु वासरूपनिवृत्त्यर्थं स्यात्। ततश्च विशेषविहित कुमार-शीर्षयोर्णिनिरित्ययं भूतेऽपि प्रसज्येत। सति तु भूताधिकारे तत्कर्तृणिन्यन्यासेन कुमारशीर्षयोरित्यनेन भूतणिनिं बाधित्वा भविष्यद्वर्तमानयोरेव णिनिर्विधीयते। आगुहेति । सति भूताधिकारे ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवतीति नियमेन भूत-एवोपपदान्तरे क्विन्निवर्त्यते न तु कालान्तर इत्यागुहेति भविष्यद्वर्तमानयोः प्रयोग उपपन्नो भवति । सुञ्चन्त इति । 'सुञो यज्ञसंयोग' इति ङ्वनिप्रत्ययः । तत्र यदि भूताधिकारो वर्तमानाधिकारश्च न क्रियते तदा यज्ञसंयोगे विशेषविधानाभावात् कालान्तरेऽपि ङ्वनिपं बाधेत । ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात् । अथ काल

उ ]कालविशेषाविति । तद्विधानमर्थेति । तस्मिन्विधानं यस्येत्यर्थः। भूतशब्दवत् तेऽपि स्वभावत एव भूतमात्रवाचका भवन्ति, किमधिकारेणेति भावः । सामान्ये-नेति। कालसामान्येनेत्यर्थः।'सामान्ये' इति सप्तम्यन्तपाठस्तु युक्त एव। ननु पूर्वो 'कर्मणी'ति सूत्रे 'कुत्सित'ग्रहणं कृतमिति कुत्सितार्थन्तादिति चेन्न, 'कुत्सित'ग्रहणस्य भाष्येऽभावात्। शब्दशक्तिस्वभावमिदन्त्वेतत्नाऽपीति भाष्याशयः। ननु तेनैव सिद्धे 'कुमारे'त्यादि व्यर्थमिति चेत्तत्राह—पुनर्विधानस्त्विति। 'कुमारहन्ते'त्यादिव्यावृत्त्य-र्थः । विशेषविहित —उपपदविशेषे विहितः । इत्ययम्भूतेऽपीति । इत्ययमपि भूते प्रसज्येतेत्यन्वयः । तत्कर्तृणिन्यन्यवेति । कुमारशीर्षयोर्विशेषविहितो णिनि 'कर्मणि हन' इत्येन बाध्यते । तत्र तेनाऽपि णिनेरेव विधानेन णिनेर्बाधस्य वक्तुम-शक्यतया तत्सहचरितभूतकाले बाध्यत इति वर्त्तमानभविष्यतोरेव 'कुमारे'त्यादि णिनिर्भवति । एवञ्च तद्बाधनेन चरितार्थं शास्त्रमिति 'दासरूप'न्यायनाधे सता-ऽभावेन 'कुमारहन्ते'त्याद्यपि सिद्ध्यतीति भावः । 'कुमारघाती'त्यादौ विधानस्य 'कुमारे'त्यादिणिनेर्भविष्यद्वर्तमानयोर्बाधा स्यात्तस्य भूतार्थे निवृत्तिश्च यथा स्या-दिति भूताधिकार इति भाष्याशयः । इदमिन्त्यं, तत्कर्तृणिन्यन्यासस्य विधेर-विरसत्वात्। तस्माद्भूताऽधिकारमात्रेण 'कर्मणि हन' इत्यनाऽनेन णिनि । 'भूत' इति नियमादन्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थः । यथाऽस्य णिनेरधि-काराऽभावेऽपि स्वभावत एव भूते वृत्तिस्तथा 'कुमारे'त्यस्य स्वभावत एव भूते निवृत्तिर्भविष्यतीत्यरुचे प्रयोजनान्तरमाह भाष्ये—आगुहेति। यज्ञसंयोग इति। यज्ञसंयोगविषये ङ्वनिपस्त्विषु कालेष्वपवादो माभूदित्यन्वयः । प्रसङ्गाद्वर्तमानाऽ-धिकारस्याऽपि प्रयोजनप्रदर्शनं। वार्त्तिके 'भूताऽधिकारस्ये'त्युपलक्षणम्। तत्र ङ्वनि-

सुन्वन्त सुषुपुषोऽनेहा अग्निमादधानस्य,[भूतकालनिवृत्त्यर्थं भविष्यद्वर्तमानकालसम्प्रत्ययार्थम् ]॥ ३॥ कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थो भूतनिवृत्त्यर्थं । आखुहा बिडाल इति, भविष्यद्वर्तमानार्थं । इतरथा हि ब्रह्मादिषु नियमस्त्रिषु कालेषु निवर्तक स्यात् ॥ सुत्वान सुन्वन्त , यज्ञसयोगे ङ्वनिपस्त्रिषु कालेषु शताऽपवादो मा भूत् ॥सुषुपुष , नजिङ् सर्वकालापवादो मा भूत् । अनेहा इति,–वर्तमानकाल एव । अन्यत्र–'अनाहन्ता' ॥ आदधानस्य ।–कानच श्चानश् ताच्छील्यादिषु सर्वकालापवादो मा भूत् । अग्निमादधानस्य । आदधानस्येत्येवान्यत्र ॥

प्र ] त्वप इति ङ्वनिब्विधीयते तथापि सुत्वा सुन्वद्भिरिति कालभेदो न स्यात् । सति त्वधिकारे कालभेदेन तयोरवस्थान भवति । सुषुपुष इति । असति भूतवर्तमानाधिकारे विशेषविहितेन नजिङा लिटो बाधन स्यात्। ताच्छीलिकेषु च वासरूपविधिर्नास्ति । सति त्वधिकारे भूत लिड्वर्तमाने नजिङिति बाध्यबाधकभावाऽभाव । अनेहा इति।'नन्याहन एह चे'ति असिप्रत्ययोऽसत्यधिकारे सर्वस्मिन्काले तृच बाधेत। सति त्वधिकारे वर्तमानकाल एवौणादिकस्तृच बाधेत। चानशिति। असत्यधिकारे कानचश्चानशा बाधक स्यात्।न पुनरनयोर्भेदो यावताऽभ्यस्तानामादिरिति लसार्वधातुके

उ ]भूताऽधिकारे। शता वर्तमानाऽधिकारे।ङ्वनिप्–'सुयजोर्ङ्वनिबि'ति विहितम्। कालभेदो न स्यादिति । वाऽसरूपेण वर्तमानेऽपि ङ्वनिप्प्राप्नोतीति भाव । नजि ङेति । 'स्वपितृषोर्नजिङ्' । अय वर्तमानाऽधिकारे । लिट–भूताऽधिकारे। लिट – 'छन्दसि लिट्' लिट कानज्वा' 'क्वसुश्चे'त्यस्य । भाष्ये–सर्वकालाऽपवाद इत्यस्य सर्वकालद्योतकप्रत्ययाऽपवाद इत्यर्थ । भूतकाललिटोऽपीति यावत् । असत्यधिकार इति । 'वर्तमान' इत्यधिकारेऽसतीत्यर्थ । सति त्विति । 'वर्तमान' इत्यधिकारे सति 'उणादय' इत्यस्य तदधिकारस्थत्वादसिर्वर्तमानकाल इति भाव । रूढिशब्दत्वादेवोणादिषु वाऽसरूपविधिर्नास्तीति तात्पर्यम् । एतत्प्रयोजनोक्तिरेकदेशिन , उणादीनामव्युत्पन्नत्वेऽसम्भवात् । ण्वुल्तृचोरपि वर्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्य उक्तत्वेन 'अन्यत्र अनाहन्ता' इत्यस्याऽसङ्गतेश्च । असत्यधिकार इति । भूतवर्तमानयोरधिकारयोरसतोरित्यर्थ । कानच इति । क्वसोरप्युपलक्षणमिदम् । यद्वा कानजुपलक्षितस्य लिट इत्यर्थ । लसार्वधातुक इति । तत्र चानश सार्वधातुकत्वेऽपि लादेशत्वाऽभाव । कानचो लादेशत्वेऽपि आर्द्धधातुकत्वमित्युभयत्राऽप्यन्तोदात्तत्वमेवेति भाव । कर्त्रभिप्राय एवेति । अनास्मिस्तु क्वसुरिति भाव । भाष्ये 'चानश्ताच्छील्यादिषु सर्वकालाऽपवादो माभू'दित्युत्तरम्–'अग्निमादधानस्ये'-

१ इद प्रचिप । २ इद लुप्त स्यात् ।

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ३।२।८७ ॥

किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते न क्विप्चान्येभ्योऽपि दृश्यत इत्येव सिद्धम् ? ॥१॥ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ॥२॥ [ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ]॥ नियमार्थोऽयमारम्भः। ब्रह्मादिष्वेव हन्तेर्भूते[२] क्विब्यथा स्यादिति ॥ किमविशेषेण?॥'ने'त्याह। उपपदविशेषे, एतस्मिंश्च विशेषे ॥ अथ ब्रह्मादिषु हन्तेर्णिनिना भवितव्यम् ? ॥ न भवितव्यम् ॥ किं कारणम्?॥ 'उभयतो नियमात्'। उभयतो नियमोऽयम्। 'ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति'। 'क्विबेव च [ हन्तेर्भूते ] ब्रह्मादि'ष्विति ॥३॥ तथा चोत्तरस्य

प्र.] विधीयत न सार्वधातुकमात्र'।एवं तर्हि पुनरहङ्कृतो भेदः।तानजात्मनेपदत्वं कर्त्रभिप्राय एव भवति, चानशपुनरविशेषेण। सति त्वधिकारे भूते यत्नवर्तमाने चानशिति वाच्यं प्रयत्नभावाऽभावः। [ भूते ]।

ब्रह्मभ्रूण।किमविशेषेणेति।किं धातूपपदकालप्रत्ययाश्चत्वारोऽपि नियम्यन्ते अथ किं विदेव नियम्यत इति प्रश्नः। उपपदविशेष इति। अनेन धातुनियमं दर्शयति, 'ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति नोपपदान्तरे'। तेन पुरुषं हतवानित्यत्र क्विप् न भवति।अथेति।'कर्मणि हनः' इत्यनेनेति भावः।क्विबेवेति।'ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तर'मिति क्विपि भूतकाले नियम्यत इति कालनियमोऽपि भवति। एतदेव नियमद्वयं भाष्यकारेणाश्रितम्।'ब्रह्मादिषु हन्तेरेव भूते क्विब्भवति' 'ब्रह्मादिषु हन्तेः क्विब्भूत एवे'त्येतत्तु नियमद्वयं नाभ्युपगतम्। अन्यैस्त्वाहोपुरुषिकया चतुर्विधो नियमो व्याख्यातः, स भाष्यविरोधादनादरणीयः। तथा चेति। यस्माद्ब्रह्मा-

उ.] त्येव। सुयुपुषोऽनेहाऽपि'मित्यपाठः। आदधानस्येत्येवाऽन्ययदेति। भूतार्थाऽतिरिक्तवर्तमानत्वविवक्षायामकर्त्रभिप्राये कर्त्रभिप्राये च 'आदधानस्ये'त्येव। भूते तु कर्त्रभिप्राये एव तदा। अकर्त्रभिप्राये तु वसुरेवेत्यर्थः॥ [ भूते ]

ब्रह्मभ्रूण। किं धातूपपदेति। भाष्ये—'नियमार्थोऽयमारम्भः किमविशेषेणे'-त्येव पाठः। 'ब्रह्मादिष्वेवे'त्यादिनियमाकारलेखस्तु लेखकप्रमादात्, अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरनिरस्ततया पुनः प्रश्नाऽनुपपत्तेः। उपपदविशेष इति। नियमस्य सजातीयापेक्षत्वात् 'हन्तेः क्विबुपपदविशेष एवे'त्यर्थः। एतस्मिंश्च विशेष इति। भूत इत्यर्थः तेन।'भूते हन्तेः क्विब्ब्रह्मादिष्वेवे'ति नियम इति भावः। तदाह—अनेनेति। धातोरनन्तरातिरिक्ते उपपदे भूतत्वलाऽवच्छिन्नेऽर्थे वर्तमानात् क्विपोऽसत्त्वबोधकत्वादिति भावः। भाष्ये—अथेति। एतत्कालनियमाऽधिकारे इत्यर्थः। कालनियम इति। भूतत्वाऽवच्छिन्नार्थवाचिनो क्विबतिरिक्ताऽसंबन्ध-

१ इदं छन्न। २ 'हन्ते क्विप्'। ३ इदं क्वचिन्न। ४ 'क्विब्भूतकाले निय'।

वचनार्थं ॥५॥ एवच कृत्वोत्तरस्य योगस्य वचनार्थं उपपन्नो भवति,–'बहुल छन्दसी'ति। यो मातृहा पितृहा भ्रातृहा। न च भवति 'अमित्रघात'इति ॥

## कर्मणीनिविक्रियः ॥ ३।२।९३ ॥

॥*॥ कर्मणि कुत्सिते ॥ ॥ कर्मणि कुत्सिते इति वक्तव्यम्। इह मा भूत्। धान्यविक्राय इति ॥[कर्मणीनि]॥

## अन्येष्वपि दृश्यते ॥ ३।२।१०१ ॥

॥*॥ अन्येभ्योऽपि दृश्यते ॥*॥ अन्येभ्योपि दृश्यत इति वक्तव्यम् ॥ इहापि यथा स्यात् आखा। उखा परिखा ॥ [अन्येष्वपि दृश्यते]।

## निष्ठा ॥ ३।२।१०२ ॥

॥*॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धि ॥ ॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥ केतरेतराश्रयता? ॥ सतो क्तक्तवतो संज्ञया भवितव्य, संज्ञया च क्तक्तवतू भाव्येते। तदेतदितरेतराश्रय भवति। इतरेतराश्रयाणि च [कार्याणि] न प्रकल्पन्ते॥ ॥द्विर्वा क्तक्तवतुग्रहम् ॥*॥ द्विर्वा क्तक्तवतुग्रहण कर्तव्य भवति 'क्तक्तवतू भूते'। क्तक्तवतू निष्ठेति। यदि पुनरिहैव

---

प्र] द्विर्वेवति नियमोऽनेन क्रियत तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति,– उपपदान्तरेऽपि हन्तेश्छन्दसि क्विप्यथा स्यादिति। [ ब्रह्मभ्रूणवृत्रेषु ]॥

कर्मणि। कर्मणि कुत्सित इति। यस्य सोमघ्नादे शास्त्रेण विक्रय प्रतिषिद्धस्तत्कर्म विक्रये कुत्सितम्। [ कर्मणीनिविक्रियः ]॥

अन्येष्वपि। अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रितं न तु धात्वन्तरमित्याह–अन्येभ्योपीति। [ अन्येष्वपि दृश्यते ]॥

---

उ] रो रस्त्वादिति भाव। तत्र केवलस्यानो प्रत्ययान्तरस्यान्यस्याऽवारणात्तत्पर्येन धात्वन्नियमोऽयमिति बोध्यम्। नियमद्वयमिति। ब्रह्मादिष्वेव' क्विबेवे'ति च कल्प्यमानस्यैवकारस्य श्रुत्युपस्थापितेऽन्वयो न्याय्य। न च भाष्यप्रामाण्यादुभयत्राऽपीति तत्त्वम्। उत्तरस्य वचनार्थं इति। सापेक्षत्वेऽपि गमकत्वात्समास। धातुनियमस्येद मानमिति दर्शयति–यस्मादिति। नन्वेतदर्थं 'छन्दसि' इत्येवास्तु, सामर्थ्यादुपपदान्तरे भविष्यति किं बहुलग्रहणेनेत्यत आह भाष्ये–न च भवति अमित्रेति। तावन्मात्रोक्तौ 'क्विबेवे'ति नियमान्न स्यान्न भवन्ति येनदर्थं बहुलपदमिति भाव ॥ [ ब्रह्मभ्रूण ]॥

कर्मणीनि। ननु कर्मण कथ कुत्सितत्वमत आह–यस्य सोमेति ॥

निष्ठा। 'तौ सदिति वचन' मित्यादि वार्तिक 'तौ स'दिति सूत्रे तेन समान-

---

१ इदं क्वचिन। २ 'निर्विक्रिय'। ३ 'उखा'।

निष्ठासंज्ञाप्युच्येत । 'क्तक्तवतू भूते' । ततो–'निष्ठा' । निष्ठासंज्ञौ च क्तक्तवतू भवत इति ॥ किं कृतं भवति ? ॥ द्विःक्तक्तवतुग्रहणं न कर्तव्यं भवति ॥ एवमपि 'तौ'विति वक्तव्यं स्यात् । वक्ष्यति ह्येतत् 'तौ सदिति वचनमसंसर्गार्थ'मिति । असंसक्तयोर्भूतकालेन क्तक्तवत्वोर्निष्ठा संज्ञा यथा स्यात् । ञिमिदा–मिन्न । ञिक्ष्विदा–क्ष्विण्णः ॥ यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठासंज्ञोच्येत[१] ॥ नैवं शक्यम् । दृष्टश्रुतयोर्न स्यात् । ञिमिदा–मिन्नः । [ ञिक्ष्विदा–क्ष्विण्ण इति ] । तस्मान्नैवं शक्यम् ॥ न चेदेवं द्विःक्तक्तवतुग्रहणं कर्तव्यं भवति इतरेतराश्रयं वा भवति ॥ नैष दोषः, इतरेतराश्रयमात्रमेतद्भवति । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि 'सिद्धं तु नित्यशब्दत्वा'दिति ॥ नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि संज्ञा नित्या ॥ एवं तर्हि

---

प्र] निष्ठा । यदि पुनरिति । यौ लौकिके प्रयोगे न दृष्टौ नापीह शास्त्रे श्रुतौ तौ क्तक्तवतू निर्दिश्य संज्ञा विधीयते । एतदुक्तं भवति,–इहैव प्रकरणे क्तक्तवतू निष्ठेति सूत्रं कर्तव्यम् । यौ भूते क्तक्तवतू तौ निष्ठासंज्ञौ भवतः । तत्र संज्ञाविधानान्यथानुपपत्त्या तयोर्भूते विधानमनुमास्यते, इतरेतराश्रयदोषश्च न भविष्यतीति । दृष्टश्रुतयोरिति । यद्यपि क्तवतुरन्यो नास्ति तथापि संज्ञाविधाने द्वयोः सह निर्देशादत्रापि द्विवचनेन निर्देशो न तु द्वित्वं विवक्षितम् । एकत्वेनेति । सामान्येनेत्यर्थः । न हि संज्ञा नित्येति । वृद्ध्यादिका संज्ञा विषयनियतत्वान्नित्या । आकारादयो हि प्रयोगे विद्यन्ते तत्र 'वृद्धिर्वृद्धि'रित्यादिना साधुत्वमात्रमन्वाख्यायते–वृद्धिर्वृद्धि साधुर्भवति । क्तक्तवतू तु सानुबन्धकौ प्रयोगे न विद्येते इति नित्यत्वाऽभावः संज्ञिनोऽभिप्रेत्यैतदुक्तम् ।

---

उ.] त्यानिदमित्याह भाष्ये–असंसक्तयोरिति । नाविलुप्ते हि अदृष्टविशेषस्वरूपमात्रपरामर्शान्न दोष इति भावः । 'भिन्न' इत्यादौ 'नीत क्त' इति वर्तमाने क्तः । यदि पुनरिति भाष्यम्पूर्वोक्तेन पुनरुक्तमित्याशङ्क्याह–यौ लौकिके इति । न दृष्टाविति । अनुबन्धविशिष्टौ न दृष्टावित्यर्थः । वचनश्रुतत्वमात्रमाह–एतदुक्तम्भवतीति । भाष्ये–दृष्टश्रुतयोरिति । 'नीत क्त' इत्यादौ । अत्र शास्त्रज्ञाना तत्तत्प्रत्ययविहिताना प्रयोगेऽनुबन्धवियोगेऽपि दृष्टत्वं बोध्यम् । भाष्ये–द्विःक्तेति । तद्दोषग्रहणमित्यर्थः । क्तक्तवतू भूते तौ निष्ठेति । सामान्येनेति । एकत्वपदेन तदाश्रयो लक्ष्यते । साधारण्यपर्यायश्च 'एक'शब्द इत्यन्ये । ननु वृद्ध्यादिसंज्ञाऽपि वृद्धिमत्त्वादनित्यैव, तत्कथं तत्राऽयं समाधिर्नेत्यत आह–वृद्ध्यादिकेति । विषयनियतत्वादिति । संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वान्नाऽत्र नित्या, साधुत्वाऽन्वाख्यानस्य च सम्भवो, नैवम्प्रकृते इति भावः । ननु संज्ञाया

---

१ 'क्तक्तवतू निष्ठासंज्ञौ' । २ 'भूतेन कालेन निष्ठा' । ३ 'हि नस्यात्' । ४ क्वचित् ।

भाविनी सञ्ज्ञा विज्ञास्यते । तद्यथा कश्चित्कं चित्तन्तुवायमाह 'अस्य सूत्रस्य शाटकं वये'ति । स पश्यति—'यदि शाटको, न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य सञ्ज्ञाऽभिप्रेता, 'स मन्ये वातव्यो यस्मिन्नुते शाटक इ'त्येतद्भवती'ति । एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठेत्येषा सञ्ज्ञा भविष्यति ॥

॥ ॥ आदिकर्मणि निष्ठा ॥*॥ आदिकर्मणि निष्ठा वक्तव्या । प्रकृतः कटं देवदत्त इति॥ किं पुनः कारणं न सिध्यति ?॥*॥ यद्वा भवन्त्यर्थे ॥*॥ यद्वा भवन्त्या अर्थे भाष्यते । प्रकृतः कटं देवदत्तः । प्रकरोति कटं देवदत्त इति ॥*॥ न्याय्या त्वाद्यपवर्गात् ॥*॥ न्याय्या त्वेषा भूतकालता ॥ कुतः ? ॥ 'आद्यपवर्गात्' । आदिरत्राऽपवृक्तः । एष च नाम न्याय्यो भूतकालो यत्र किं चिद

प्र ]भाविनी सञ्ज्ञेति। सञ्ज्ञिनो भावित्वात्सञ्ज्ञा भाविनीति। तथा हि निष्ठेत्युक्ते सञ्ज्ञावाक्यं 'क्तक्तवतू निष्ठे'ति स्मर्यते। तत्र सामर्थ्यात् क्तक्तवतुविधानं सम्पद्यते। आदिकर्मणीति । आद्येषु क्रियाक्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाऽभावान्निष्ठा न प्राप्नोतीति वचनम् । न चादिकर्मणि क्तः कर्तरि [च]इत्येतदर्थादेशनमादिकर्मणि निष्ठाया ज्ञापकम् । 'ञीतः क्तः' इत्यादिना वर्तमानकालविषयस्य क्तस्य सम्भवात्तस्यैवैतदर्थादेशनं स्यात्। यद्वा भवन्त्यर्थ इति । यस्मान्नोऽर्थे विकल्पेन भाष्यते निष्ठा तस्माद्वक्तव्येत्यर्थः । न्याय्येति । आदिभूत एवावयवे समूहरूपस्य समाप्तत्वादस्ति

उ ]स्वतो भावित्वमनुपपन्नमत आह—सञ्ज्ञिन इति । सामर्थ्यादिति। अन्यस्योत्पन्नस्य निष्ठासञ्ज्ञाया अभावादिति भावः । आदिकर्मणीति 'कर्म'शब्दः क्रियावाची । एककालोद्देशप्रवृत्तसमूहरूपा च क्रिया । तत्र वार्तिकफलं दर्शयति—आद्येष्विति । सम्पूर्णसमूहस्य व्यपवृक्तत्वे हि भूतव्यवहार इति भावः । क्रियाक्षणेष्विति । अत्र 'क्षण'शब्दः सूक्ष्मप्रायकालोपलक्षणम्, अन्यथा क्षणरूपत्वे क्रियायास्तद्वदेव सूक्ष्मकालाऽवच्छिन्नत्वात्प्रत्यक्षत्वाऽनापत्त्या 'पश्य मृगो धावती'त्यादेरनुपपत्तिरिति बोध्यम् । वस्तुतः क्रिया प्रत्यक्षैव फलाऽनुमेया च । तद्वक्ष्यति भाष्ये—अत्यन्ताऽपरदृष्टेति । अवयवरूपेण समुदायरूपेण चाऽप्रत्यक्षेत्यर्थः । 'पश्य मृगो धावती'त्यादिप्रयोगस्तत्तत्प्रयोगदर्शनाऽभिप्रायेण, दृशेर्वा ज्ञानसामान्ये लक्षणा। निरूपयिष्यते चेदं 'वर्तमाने लट्'इति सूत्रे । 'आद्येषु क्रिया लक्षणे'ष्विति क्वचित्पाठः । तत्राद्येषु क्रियाऽवयवेष्वित्यर्थः । 'ञीतः क्तः' इति,—यदि तद्विषयमेव स्याद्वर्तमानग्रहणमेव कुर्यादिति चिन्त्यमिदमिति हरदत्तः । तेन क्ताऽनुमानेऽपि क्तवत्वर्थं वचनमावश्यकमित्यपरे। यस्मादिति इति । धात्वर्थस्य वर्तमानत्व एव यतो न्येके विकल्पेन प्रयुञ्जतेऽतो वक्तव्येत्यर्थः । 'यद्भवन्त्यर्थे वा भाष्यत' इति भाष्येऽ-

पवृत्त दृश्यते ॥ ॥ वा चाऽद्यतन्याम् ॥*॥ वा चाऽद्यतन्या भाष्यते । अकृत घट देवदत्त । प्राकार्षीत्कट देवदत्त इति॥ किं शक्य त एते शब्दा प्रयोक्तुमिसतो न्याय्यैषा भूतकालता ?॥ नावश्य प्रयोगादेव । क्रिया नामेयमत्यन्ताऽपरदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुंठित इति । साऽसौ येन येन शब्देनाऽभिसबध्यते तावति तावति परिसमाप्यते । तद्यथा कश्चित्पाटलिपुत्र जिगमिषुरेकमहर्गत्वाऽऽह–'इदमद्य गत'मिति। न च तावताऽस्यै ब्रजिक्रिया परिसमाप्ता भवति । यत्तु गत तदभिसमीक्ष्यैतत् प्रयुज्यते 'इदमद्य गत मिति। एवमिहापि यत्कृत तदभिसमीक्ष्यैत

प्र ]भूतत्वापपत्तिरित्यर्थ ।तदुक्त हरिणा–'समूह स तथाभूत प्रतिभेद समूहिषु। समाप्यते ततोऽभेदे कालभेदस्य सभव ' ॥ इति । वाचाद्यतन्यामिति । यदुक्त भवन्त्यर्थे भाष्यत' इति, तस्य व्यभिचार । कृतोऽपि निषय निशया अय प्रयोगस्तस्मादवश्यमाद्यपवर्गाद्भूतत[वि[3] ]ष्टव्या । अन्यथा कृत प्रयोगो न स्यादित्यर्थ । किं शक्यन्त इति । यावदभिमतफलप्रयोजनसकलावयवापरिसमाप्तिर्न भवति तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम्। ततश्च वस्तुशून्या एवाऽमी शब्दा प्रयुज्यन्त इति भाव । अत्यन्ताऽपरदृष्टेति । पर–प्रधान प्रमाण प्रत्यक्षम् । अनुमानस्य तत्पूर्वकत्वात्। तत क्रिया न दृश्यत।अवयवसमूहस्य युगपदनुपादादनवस्थानाच्च । तदुक्तम्–'क्रमात्सदसता तेषामात्मानो न समूहिनाम् । सद्वस्तुविषयैर्यान्ति सबन्ध चक्षुरादिभि ' ॥ इति ॥ येन येनेति । शब्देन प्रत्याय्यमाना यत्र येनावयवेन सबध्यते समूहरूपा क्रिया तस्मिन्नेवावयवे समाप्यत। तत्रावयवान्

उ ]न्वय ।भाष्ये–आदिरप्रति। आद्यक्रियाक्षण इत्यर्थ । ननु तस्य भूतत्वेऽपि धात्वर्थस्य क्रियायात्मत आह–आदिभूत एवेति । समासत्वात्–आरोपितत्वात् । प्रतिभेद–प्रत्यवयवम् । समूहिषु–अवयवेषु । समाप्यते–आरोप्यत इत्यर्थ । अभेदे–अवयव समूहाऽभेदे । तेन क्रिया न दृश्यत इति । अत्यन्तमवयवशः समूहश्च न दृश्यत इत्यर्थ । अनवस्थानाच्चेति । अननाऽवयवस्याऽप्यप्रत्यक्षत्व, क्षणिकत्वेनाऽनवस्थानादित्यर्थ । क्रमात्सदसतामिति। भूयोऽवयवसत्त्वं समूहप्रत्यक्षे कारणमिति भाव । चक्षुरादिभिरसबन्धे हेतु –सद्वस्तुविषयैरिति । यत्र शब्देनेति। समानाधिकरण्ये तच्छब्देनाऽपि तस्यैव परामर्शात् शब्दे परिसमाप्तिरुक्ता स्यात्, न च सा युक्तिमती अतो वैयधिकरण्येन व्याचष्ट–येनाऽवयवेनेति । सबध्यते–यत्र यत्राऽवयव आरोप्यत इत्यर्थ । यो योऽवयव पक्वाऽनुकूलत्वेन विवक्ष्यत तत्रैव समाप्यत । तत्रावयव समास समूह एव समाप्यतऽतीता भवती

१ 'परिस्थ' । २ 'न शक्या'। ३ इद प्रक्षिप्त । ४ तस्य ।

प्रयुज्यते 'अकृत कटं देवदत्त' इति । यदा हि वेणिकान्त कटोऽभिसमीक्षितो भवति 'अकरोति कट'मित्येव तदा भवति ॥ [ भूते ] ।

## लिटः कानज्वा ॥ ३।२।१०६ ॥ क्वसुश्च ॥ ३।२।१०७ ॥

किमर्थं कानच्क्वस्वोर्विधानं क्रियते ? ॥*॥ कानच्क्वस्वोर्वचनं छन्दसि तिङो दर्शनात् ॥ ॥ कानच्क्वस्वोर्वचनं क्रियते ॥ किं कारणम् ? ॥ 'छन्दसि तिङो दर्शनात्' । छन्दसि तिङपि दृश्यते । अह सूर्यमुभयतो ददर्श । अह द्यावापृथिवी आततानेति[2] ॥*॥ न वाऽनेन विहितस्यादेशवचनात् ॥*॥ न चैतत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'अनेन विहितस्यादेशवचनात्' ॥ अस्त्वनेन विहितस्यादेशः केनेदानीं छन्दसि विहितस्य लिटः श्रवणं भविष्यति ?॥ 'छन्दसि लुङ्लङ्लिटः' इत्यनेन ॥ तदेतद्वावचनं तिष्ठतु तावत् सान्न्यासिकम् ॥

अथ कित्करणं किमर्थं नाऽसंयोगाल्लिट्कितिदित्येव सिद्धम् ॥*॥ कित्करणं संयोगान्तार्थम् ॥*॥ कित्करणं क्रियते ॥ [ किं प्रयोजनं ? ] । 'संयोगान्तार्थम्' । संयोगान्ताः प्रयोजयन्ति । बेन्धे –'वृत्रस्य यद्बद्धधानस्य रोदसी' स्वम-

प्र ]कालनयप्रयोगात् क्रियाया अपि कालनयप्रयोग । [ भूते ] ॥

लिटः कानच् । छन्दसि तिङो दर्शनादिति । वासरूपविधिश्च लादेशेषु नास्तीत्युक्तम् । अनेनेति । 'छन्दसि लि'डित्यनेनेत्यर्थः । तस्यैव लिट इहाऽनुवृत्तत्वादानन्तर्यादिति भावः । तदेतदिति । उत्तरत्रोपयोक्ष्यत इति भावः । बद्धधानस्येति । 'बन्ध बन्धने' । छान्दसत्वादभ्यासधकारस्य हलादिशेषेण निवृत्त्यभावे झलां जशझशीति जश्त्वं दकार । [ लिटः कानज्वा ] ॥

उ ]त्यर्थ । वेणिका–कटचरमाऽऽयत । तदन्तं कट इत्यस्य तदन्तकटनिर्वर्तनं निरागमूह इत्यर्थ । [ भूते ] ॥

लिटः कानज्वा । क्वसुश्च । वाऽसरूपविधिरिति । ननु 'इशश्वनोर्गङ् चे'ति ज्ञापकादादेशानवैरूप्यमादाय 'ल विधौ वाऽसरूपो नास्ती'त्युक्तम्, एवञ्च प्रकृते स्यादेव, न च प्रत्ययविधिविषयस्याऽऽदेशेऽभावः, आदेशविधानेऽपि 'प्रत्यय' इत्यस्योपस्थिते 'आद्युदात्तश्चे'ति सूत्रभाष्यसम्मतत्वादिति चेन, एतद्भाष्यप्रामाण्यादादेशरूपप्रत्ययविधौ तदनुपस्थितेः कल्पनात् । तत्फल सदादिभ्यो भूतसामान्ये लिट क्वसुरेव न पक्षे तिङ इति भाव । उत्तरत्रेति । केचित्तु 'तस्य धातुसम्बन्धे विधाने नाऽधातुसम्बन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङ्श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्ये'त्याहु । यत्तु वृत्तौ 'लिटि'त्यनुवर्त्य विभक्तिविपरिणामेन सिद्धे

१ 'भविनव्यम्'।२ इद क्वचिन्न। ३ 'अनेन'। ४ 'लिटस्तिङ'। ५ 'सान्यासिक'।

वक्तव्य । कृपि । किरि । गिरि ॥*॥ संपदादिभ्यः क्विप् ॥*॥ संपदादिभ्यः क्विब्वक्तव्य । संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । पर्षत् ।

## कृत्यल्युटो बहुलम् ॥ ३।३।११३ ॥

॥*॥ कृत्ल्युट: ॥*॥ कृत्ल्युट इति वक्तव्यम् ॥*॥ कृतो बहुलमिति वा ॥*॥ कृतो बहुलमिति वा वक्तव्य । पादहारकाद्यर्थम् ॥ पादाभ्यां ह्रियते पादहारक । गले चोप्यते गलेचोपक । श्वोऽग्नीनाधास्यमानेन । श्व सोमेन यक्ष्यमाणेन ॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ३।३।११९ ॥

॥*॥ गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ॥*॥ गोचरादीनां ग्रहणं शक्यमकर्तुम् ॥ घः कस्मान्न भवति ? ॥ 'प्रायवचनाद्यथा कष' निकष इति' । प्रायवचनात् [ कषो निकष इति ] घस् न भवति ॥

## हलश्च ॥ ३।३।१२१ ॥

॥*॥ घञ्विधाववहाराधारावायानामुपसंख्यानम् ॥*॥ घञ्विधाववहाराधारावायानामुपसंख्यानं कर्तव्यम् । अवह्रियन्तेऽस्मिन्नवहार । आध्रियन्तेऽस्मिन्नाधार । एत्यैतस्मिन्वयन्त्यावाय । [ हलश्च ] ॥

## उदङ्कोऽनुदके ॥ ३।३।१२३ ॥

---

प्र ]सिध्येत्। घञ्प्रत्ययस्य 'कृदति'दित्यधिकाराद्धातुविहितत्वेऽपि कृत्संज्ञा। तदन्तस्य प्रातिपदिकत्वाद्विभक्त्युत्पत्ति । एवं 'मत्वर्थीय' इति । अकारलोपस्त्वना-ऽभवेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा। संपदादिभ्य इति। क्विन्नपि बहुलवचनाद्भवति-संपत्तिरिति । [ रोगाख्यायां ] ।

कृत्य । कृल्युट इति। कृद्ग्रहणमनर्थकं कृद्ग्रहणं व्यापकत्वात्कर्तव्य। तस्मिन्ध-कृते ल्युड्ग्रहणं न कर्तव्यं, तस्यापि कृत्त्वात्। श्वोऽग्नीनिति । अनद्यतनेऽपि लृड्भवति ।

गोचरसचर । प्रायवचनादिति । 'हलश्चे'त्यत्र प्रायग्रहणानुवर्तनाद्घञ् क्वचिदभावादेव भवतीत्यर्थ । [ गोचरसंचर ] ।

---

उ ]'आहो प्रभूतादिभ्य' 'गच्छतौ परदारादिभ्य' इति प्रयोग सङ्गच्छन्ते । कृत्य-ल्युटेति । बाहुलकादित्यन्ये । एव मत्वर्थीय इति । 'प्रातिपदिकत्वाद्विभक्त्युत्पत्ति'-रित्यनुषङ्ग । आर्द्धधातुकत्वाऽभावादतो लोपाऽप्रसंगे. स्वादिष्वाऽभावेनाऽभत्वाद्यस्येति लोपाऽप्राप्तेश्चाह-भाष्यकारेति । बहुलग्रहणादिति गारम् । तदाश्रयणे भाष्यकार-वचनं हेतु । बहुव्रीहि स्वार्थिकोऽयं छ ।पदीनपुगसाद्यादिन्यन्तेन कथिन्नामतर्याति। हलश्च।नाने-एत्येति।आतोऽर्थप्रदर्शनमिदम्।येन आचे 'आतो युगि'ति युक्॥

---

१ इद क्वचित्र । २ ॥*॥'कृतो बहुलमिति वक्तव्य पादहारकाद्यर्थम्' ॥*॥ [ कृतो बहुलमिति वक्तव्य॥ किं प्रयोजन ? ॥ 'पादहारकाद्यर्थम्']॥पा॰ ।

किमर्थमिदमुच्यते न 'हलश्च' इत्येव सिद्धम् ?॥ अनुदक इति वक्ष्यामीति। इह मा भूत्। उदकोदञ्चन ॥*॥ उदङ्कोऽनुदकग्रहणानर्थक्यं च प्रायवचनात् यथा गोदोहन प्रसाधन इति॥ ॥ उदङ्कोऽनुदकग्रहणं चानर्थकम् ॥ घञ्कस्मान्न भवति ?॥[प्रायवचनाद्यथा गोदोहन प्रसाधन ]प्रायवचनाद्घञ्न भवति। यथा गोदोहन। प्रसाधन इति ॥ [ उदङ्कोऽनुदके ]।

खनो घ च ॥ ३।३।१२५ ॥

॥[*॥ खनो डडरेकेकवकाः ॥*]॥ डो वक्तव्यः। आखः। डरो वक्तव्यः। आखरः। इको वक्तव्यः। आखनिकः। इकवको वक्तव्यः। आखनिकवकः ॥

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३।३।१२६ ॥

॥*॥ अजब्भ्यां स्त्रीखलनाः ॥ ॥ अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन। अजबोरवकाशः –चयः लवः। स्त्रीप्रत्ययानामवकाशः –कृतिः हृतिः। इहोभयं प्राप्नोति–चितिः स्तुतिः। खलोऽवकाशः –ईषद्भेदः सुभेदः। अजपौ स एव। इहोभयं प्राप्नोति–ईषच्चयः सुचयः। ईषल्लवः सुलवः। अनस्यावकाशः –इध्मप्रव्रश्चनः। अजपौ स एव। इहोभयं प्राप्नोति–पलाशशातनः अविलवनः। स्त्रीखलना भवन्ति विप्रतिषेधेन ॥*॥ स्त्रिया खलनौ विप्रतिषेधेन ॥*॥ स्त्रिया खलनौ भवतो विप्रतिषेधेन। स्त्रीप्रत्ययानामवकाशः –कृतिः हृतिः। खलोऽवकाशः –ईषद्भेदः सुभेदः [सुलेखः]। इहोभयं प्राप्नोति–ईषद्भेदा सुभेदा। अनस्यावकाशः –इध्मप्रव्रश्चनः। स्त्रीप्रत्ययाना स एव। इहोभयं प्राप्नोति–सक्थुधानी तिलपीडनी। खलनौ भवतो विप्रतिषेधेन ॥

कर्तृकर्मणोश्च भूकृञोः ॥ ३।३।१२७ ॥

॥*॥ खल्कर्तृकर्मणोश्च्व्यर्थयोः ॥ ॥ खल्कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्। अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुम्–ईषदाढ्यंभवं भवता। स्वाढ्यंभवम्। स्वाढ्यंभवम्। ॥ ॥ कर्तृकर्मग्रहणं चानर्थकम् ॥*॥ कर्तृकर्मग्रहणं चोदयिष्यमाणार्थं द्रष्टव्यम्। तेऽपि च्व्यर्थयोरभिधेययोरिति।

प्र] हलश्च। अध्याहृत आधारादावर्थ्यो वर्णितः दर्शनान्निवृत्तं न खौ।

उदङ्को। प्रायवचनादिति। घञादयो न भवन्ति सर्वत्र संज्ञायाम् ॥

कर्तृ। च्व्यर्थयोरिति। अभूततद्भावविषये खल भवति, अन्यत्र

उ] उदङ्को। घञ्कस्मादिति। यदि पुन 'अनुदक' इति प्रतिषेधसामर्थ्यादन्यत्र ग्रहणे प्राप्तस्तर्हि भव। [ उदङ्कोऽनुदके ]।

कर्तृकर्मणो। खल् न भवति अन्यत्राद्य–आढ्येन सुभूयत इति॥ सिद्ध०

१ इद क्वचित्। २ इद ग्रन्थ्। ३ 'द्रष्ट'।

तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे-'कर्तृकर्मग्रहणं चोपपदसंज्ञार्थ'मिति॥

**अन्येभ्योऽपि दृश्यते ॥ ३।३।१३० ॥**

॥ * ॥ भाषायां शासियुधिदृशिधृषिभ्यो युच् ॥ * ॥ भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । ॥[ * ॥ मृषेश्च ॥ * ]॥ मृषेश्चेति वक्तव्यम् । दुर्मर्षणः । इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

**वर्तमानसामीप्ये वर्तमानवद्वा ॥ ३।३।१३१ ॥**

---

प्र ]सुभूयत इति। अत्र गतित्वात्सुशब्दस्य धातोः प्राक्प्रयोगः।'स्वाढ्यं भवं भवते'-त्यादौ खल् विवरणसामर्थ्यात्तनोरनन्तरं कर्तृकर्मणी प्रयुज्येते। तदाचार्य इति। एतच्च विवरणादनव्ययस्य मुमर्थाद्गम्यते। चकारस्य सन्नियोगार्थत्वादीषद्दुःस्वथोऽप्युपपदान्याश्रीयन्ते। [ कर्तृकर्मणोश्च ]।

अन्येभ्यो। भाषायामिति। छन्दसीत्यधिकाराद्भाषायां न प्राप्नोतीति वचनम्॥ * ॥इति०महाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥ * ॥

वर्तमान सा। समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति। अन्ये समीपस्य भावः सामीप्यं, वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते। ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसम्बन्धो न वर्तमानस्येति समासाऽप्रसङ्गः। नैष दोषः। पारंपर्येण संबन्धसद्भावात्। अथाऽस्मिन् पक्षे 'गुणेन ने'ति षष्ठीसमासप्रतिषेधः कस्मान्न भवति?। अत्र केचिदाहुः—शौरन्यादीनां रूपादिविशे-

---

उ ]रणसामर्थ्यादिति। न च 'पुल्मुदुज' इत्यादिविषयवर्तितेऽपि ष्यञ्ग्रहणपरिभाषया सुम्प्रवर्तकत्वेन तच्चरितार्थमिति वाच्यं, भाष्यप्रयोगैरेव व्यवस्थाकल्पनादिति तत्त्वम्। बहुलग्रहणेनेत्यन्ये।दु सचोऽप्युपपदानीति।समासस्तु पर्यायेणेति बोध्यम्॥

अन्येभ्यो। छन्दसीत्यधिकारादिति। 'छन्दसि गत्यर्थेभ्य' इत्यतः॥

॥ * ॥ इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते तृतीयाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥ * ॥

वर्तमान॥ समीपमेवेति। स्वार्थप्रकरणात् वाक्येन सामानाधिकरण्यार्थमिति भावः। अन्नाऽपि पक्षे षष्ठीसमास एव। समासाऽप्रसङ्ग इति। भूतभविष्यन्निरूपितं वर्तमानस्य यत्सामीप्यं तत्र वर्तमानप्रत्ययातिदेशोऽनर्थकः। ते हि वर्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् सिद्धा एव, अतो वर्तमाननिरूपितं भूतभविष्यतोः सामीप्यं तत्रेत्यर्थः स्वीकार्यं। तथा च वर्तमानपदेन समासाऽप्रसङ्ग इति भावः। सामीप्यसम्बन्ध इति तृतीयातत्पुरुषः।सामीप्यनिरूपितः सम्बन्ध इत्यर्थः। सामीप्येनाऽऽश्रयतारूपः साक्षात्सम्बन्धस्तयोरेवेत्यर्थः। पारम्पर्येणेति। तत्र

वचनं किमर्थम् ? ॥ 'वर्तमानसामीप्ये वर्तमाने वे'तीयत्युच्यमाने वर्तमाने ये प्रत्यया विहितास्ते [ वा ] वर्तमानसामीप्ये धातुमात्रात्स्युः । वत्करणे पुनः क्रियमाणे न दोषो भवति ॥ यदि च यास्यः प्रकृतिभ्यो येन विशेषेण वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण वर्तमानसामीप्ये भवन्ति ततोऽमी वर्तमानवत्कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात्ततोऽमी वर्तमानवत्कृताः स्युः ॥ इह वर्तमानसामीप्ये वर्तमानवद्वेत्युक्ते लँङेवोदाह्रियते, यदि पुनर्वा लड्वदित्येवोच्येत ? ॥ अत उत्तरं पठति ॥ ॥वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥–॥ वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते ॥ [किं प्रयोजनम् ?] । 'शत्राद्यर्थम्'। शत्राद्यर्थोऽयमारम्भः । एषोऽस्मि पचन् । एषोऽस्मि पचमान इति ॥ नैतदस्ति प्रयोजनम्। लडादेशौ शतृशानचौ, तत्र वा लड्वदित्येव सिद्धम्॥ यौ तर्हि

प्र ]षाणां समासप्रतिषेध इति।अन्ये त्वाहुः –अयमेव निर्देशो ज्ञापयति 'अनित्यः समासप्रतिषेधः' इति । अपरे ब्रुवते –गुणशब्दस्य सम्बन्धिशब्दत्वाद्गुणाक्षिप्तस्य गुणिन एव समासप्रतिषेधः, न च वर्तमानः सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणत्वात्। वत्करणमिति । 'वर्तमान' इत्येतावतैव वर्तमानसहचरितानां प्रत्ययानां सिद्धत्वादिति प्रश्नः । धातुमात्रादिति । वर्तमानग्रहणेन साहचर्यात्प्रत्ययानां रूपमात्रमेव लभ्येत, ततश्च सद्दोषः स्यात्। यस्माद्धातोर्वर्तमाने यः प्रत्ययो विहितः स विशेषानुपादानाद्धात्वन्तरादपि स्यादित्यर्थः । लँङेवेति । प्रतिपत्तिरिति भावः । शत्राद्यर्थमिति । 'लटः शतृशानचा'वित्यनेन वर्तमानाधिकाराद्वर्तमानकालविहितस्यैव लटः शतृशानचौ भवतः, न तु कालान्तरविहितस्येति भावः । लडादेशाविति । लस्मानादेशौ । वर्तमानग्रहणस्य तत्रानपेक्षणादिति भावः । यौ तर्हीति। 'पूङ्यजोः शानन्'

द ]समीपद्वारा सामीप्येन सम्बन्ध इति भावः ।प्रतियोगिनासम्बन्धेनाऽन्वयः । वर्तमानकालप्रतियोगिकसामीप्ये सतीत्यर्थः इत्यन्ये । 'भूतादौ वर्तमानसामीप्ये सति वर्तमानवत्प्रत्यया' इति वान्योऽर्थः । एवञ्च तत्समीपे भूतादौ फलतीति बोध्यम् । तद्गुणित्वात् । सामीप्यगुणित्वादित्यर्थः । 'तद्गुणत्वा'दिति पाठे चतुर्थी हे । अत्र मेव युक्तः पाठः । 'वर्तमान' इति प्रथमान्तेन 'वर्तमाने ये प्रत्यया' इत्यर्थः कथं लभ्यतेऽत आह–सहचरितानामिति । लक्षणयेति भावः । रूपमात्रमिति । न तूपाधिविशिष्टमित्यर्थः । वत्करणे तु 'वर्तमानेऽर्थे यथा भवन्ति तथा सामीप्येऽपि भवन्ती'त्यर्थान्न दोष इति भावः । रूपमात्रेति । मात्रशब्दः कार्त्स्न्ये । भाष्ये— यौ तर्हीति । शानादीनित्यर्थः । न चायमपि वर्तमानसमीपभूतभविष्यतोर्विधीयमान

१ इदं क्वचिन्न । २ 'विशेषेण' । ३ किं लँङेवो' । ४ इदं त्यक्तम्' ।

लडादेशौ, एषोऽस्मि पवमानः एषोऽस्मि यजमान इति॥ यौ चापि लडादेशौ तावपि प्रयोजयतः। वर्तमानविहितस्य लटः शतृशानचावुच्येते, अविशेष-विहितश्चाऽयं योगः॥ शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादय एषोऽस्म्यलङ्करिष्णुः। एषोऽस्मि प्रजनिष्णुः॥ [ वर्तमानसामीप्ये ]॥

## आशंसायां भूतवच्च ॥ ३।३।१३२ ॥

आशंसा नाम भविष्यत्कालः। ॥*॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ॥*॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः ॥*॥ न वाऽपवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधानम् ॥*॥ न वा वक्तव्यः॥ किं कारणम्? ॥ 'अपवादस्य निमित्ताऽभावात्'। नात्राऽपवादस्य निमित्त-मस्ति ॥ कथम्? ॥ अनद्यतने हि तयोर्विधानम् ॥ अनद्यतने हि तौ विधीयेते लङ्लिटौ। न चाऽत्राऽनद्यतनः कालो विवक्षितः॥ किं तर्हि? ॥ भूतकालसामान्यम्। ॥*॥ आशंसासम्भावनयोरविशेषात्तद्विधानस्याऽप्राप्तिः॥*॥

प्र.]'ताच्छील्यवयोवचनशक्तिषु चानश्'इत्यादिभ्यः शतृप्रत्यय इत्यर्थः। वर्तमानविहि-तस्येति। लट्स्म इत्यादिविहितलनिवृत्त्यर्थमवश्यं तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः। अविशेषविहित इति। वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः।

आशंसायाम्। आशंसेति। आशंसा-अभिमतार्थवाञ्छा, सा वर्तमानापि विष-यस्य भविष्यत्त्वाद्भविष्यत्काल इत्युच्यते। इह चाशंसानिर्देशस्य विषयभावेनोपात्ताः। 'आशं-सायां विषय आशंस्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्ती'त्यर्थं संप-द्यते। नवेति। अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनस्तत्र सामा-न्यातिदेशे विशेषानतिदेश इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः। आशंसासंभाव-नयोरिति। यद्यविशेष एव द्वन्द्वनिर्देश इति चेत्, शब्दस्वरूपाभिधायित्वाददोषः।

उ.]कथमविशेषविहित इत्यत आह-वर्तमानलक्षणादिति। भाष्ये-अयं योग इति। एतद्योगविहित इत्यर्थः। प्रयोजनान्तरमप्याह भाष्ये-शत्राद्यर्थमिति। इष्णुजा-दयोऽपि वर्तमान एव विधीयन्त इति भावः। तुः शतुर्निष्ठानशश्च सर्व-कालत्वमुक्तं 'भूत' इति सूत्रे भाष्य इति चानश्रुति कैयटे चिन्त्या ॥[वर्तमान]।

आशंसायां। सूत्रप्रयोजनं दर्शयति भाष्ये-आशंसा नामेति। आशंसाया भविष्य-त्कालत्वं कथमत आह-आशंसेति। ननु भविष्यत्त्वमाशंसायामेव प्रत्ययः कस्मा-न्नेत्यत आह-इह चेति। एवञ्च धात्वर्थस्य सर्वत्र लकारप्रकृत्यर्थं एवाऽन्वयस्य शुभत्वादाऽऽशंसायां तदन्वय इति भावः। अपवादस्येति भाष्यस्य,-अपवादस्य निमित्तमुपादायाऽनिर्देशाऽभावादित्यर्थः। तदाह-नाऽत्राऽपवादस्येति। निमित्तमुपात्त-

१ 'दनुदेशौ'। २ इदं भाष्यमिति केचित्। ३ 'भूतसामान्य'। ४ 'इहन्विति'।

क्षिप्रवचने लृट् ॥ ३।३।१३३ ॥

॥*॥ क्षिप्रवचने लृट आशंसावचने लिङ्प्रतिषेधेन ॥*॥ क्षिप्रवचने लृट् आशंसावचने लिङ् भवति विप्रतिषेधेन। क्षिप्रवचने लृड् भवतीत्यस्यावकाशः—उपाध्यायश्चेदागत क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाश—उपाध्यायश्चेदागत आशंसे युक्तोऽधीयीय। इहोभय प्राप्नोति—उपाध्यायश्चेदागत आशंसे क्षिप्रमधीयीय। लिङ् भवति विप्रतिषेधेन ॥ ॥ ॥अनिष्पन्ने निष्पन्नशब्द शिष्योऽनिष्पन्नत्वात् ॥*॥ अनिष्पन्ने निष्पन्नशब्द शिष्य—शासितव्य॥ किं कारणम्? ॥ 'अनिष्पन्नत्वात्'। देवश्चेद्वृष्टो निष्पन्ना शालय। तत्र भवितव्यं 'संपत्स्यन्ते शालय' इति ॥*॥ सिद्ध तु भविष्यत्प्रतिषेधात् ॥ ॥ सिद्धमेतत् ॥ कथम्? ॥ 'भविष्यत्प्रतिषेधात्'। यल्लोके भविष्यद्वाचिन शब्दस्य प्रयोगं न मृष्यति। कश्चिदाह 'देवश्चेद्वृष्ट सपत्स्यन्ते शालय' इति। स उच्यते 'मैव वोच, सपन्ना शालय इत्येवं ब्रूहि' ॥ ॥*॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा ॥*॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा

प्र ]नियमेनालमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषण नोपाददीनेत्यर्थ।

क्षिप्रवच। अनिष्पन्न इति। अनाशंसार्थमिदम्। 'वृष्टश्चे'दित्यादि वस्तुस्वरूपकथनम्। सिद्धंत्विति। अप्शालिबीजसंयोग एव निष्पत्ति। शालीना तत्रैव निष्पत्तेर्वर्णनादिति भाव। हेतुभूतकालसंप्रेक्षितत्वाद्वेति। कारणसम्बन्धी काल कार्यस्य व्यवस्थापने कारणान्तरापेक्षाभावप्रतिपादनायेत्यर्थ। हेतुभूतस्य वर्षादेर्य काल स एव कार्ये सप्रेक्षित, कारणस्यैव कार्यरूपतया विवक्षितत्वात्। कार्यकारण-

उ.]त्यर्थ। ज्ञानमिति। ज्ञानेच्छयोश्च भेद स्पष्ट एवेत्यर्थ। तयोर्भेदे एकदेशयुक्त युक्त्यन्तरमाह भाष्ये—अथवाऽसन्देहो वेति। तयोरर्थाऽविशेषेऽप्यालमर्थ्याऽनालमर्थ्यकृतो भेद इति भाव। तद्दर्शयति—आचार्येति। नाऽऽलमर्थ्यमिति। नियमेनाऽऽलमर्थ्यं न गम्यत इत्यर्थ ॥ [ आशंसायां ] ॥

क्षिप्रव। भाष्ये—निष्पन्ने इति। भविष्यति भूतप्रत्ययो वक्तव्य इत्यर्थ। अनाशंसार्थमिति। आशंसाया पूर्वेण भूतवदतिदेशाद्धविष्यत्यपि क्त सिद्ध इति भाव। आनयाऽस्मात् दर्शयति भाष्ये—देवश्चेद्वृष्ट इति। तदेवाह—वस्तुस्वरूपेति। न तस्याऽऽशंसाविषयत्वेति भाव। उक्तौ लाघवमेवं वादो लोकस्य। भाष्ये— यल्लोक इति। यल्लोको भविष्यप्रयोगं न मृष्यति तस्मात्त मुख्या निष्पत्तिर्निष्पदेर्थ, किन्त्वन्य इत्यर्थ। तमेवाह—अप्शालीति। अयमेव निष्पत्तिपदार्थोऽभिमतस्यैति भाव। शालीनामिति—पूर्वाऽन्वयि। तत्रैवेति। अप्शालिबीज-

१ 'निष्पद्यन्ते' 'संपद्यन्ते' 'निष्पत्स्यन्ते'।

अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः । कूपोऽस्ति, कूपो भविष्यति, कूपो भविता, कूपोऽभूत्, कूप आसीत्, कूपो बभूवेति ॥ कथं पुनर्ज्ञायते भवन्त्या एषोऽर्थ इति ?॥ 'कर्तुर्विद्यमानत्वात्' ॥ कर्ताऽत्र विद्यते ॥ कथं पुनर्ज्ञायते कर्ताऽत्र विद्यत इति ?॥ कूपोऽनेन कदा चिद्दृष्टो न चास्य किं चिदपायं पश्यति । स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति,—कूपोऽस्तीति[1] ॥*॥ सिद्धं तु यथास्वं कालसमुच्चारणात्[2] ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ [ 'यथास्वं कालसमुच्चारणात्' ] । यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति॥ कथं पुनर्ज्ञायते यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति ? ॥*॥ अवाच्यत्वात् ॥*॥ यत्र वा भाष्यन्ते ॥*॥ असिद्धविपर्यासश्च ॥*॥ असिद्धश्च विपर्यासः । न हीह कश्चित्कूपोऽस्तीति प्रयोक्तव्ये 'कूपोऽभू'दिति प्रयुङ्क्ते ॥ किं पुनः 'कारणं न वा भाष्यन्ते' 'असिद्धश्च विपर्यास' ?॥ इह हि किं चिदिन्द्रियकर्म, किं चिद्बुद्धिकर्म । इन्द्रियकर्म समा-

प्र ]न तु भूतभविष्यद्रूपत्वमित्यर्थः । अवाच्यत्वादिति । अविकल्पितत्वादित्यर्थः । एतदेवाह—यत्र वा भाष्यन्त इति । एतदुक्तं भवति,—यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन् । 'कूपोऽभू'दिति प्रयोक्तव्ये 'कूपो भविष्यती'त्यपि प्रयुज्येत। तदेव दर्शयति—असिद्धविपर्यासश्चेति । इह किं चिदिति । इन्द्रियव्यापारकालस्य कूपसत्त्वं प्रति भेदकत्वेनाध्यवसितत्वादपि तत्कालत्वमित्यर्थः । तदुक्तं हरिणा—'सत्तामिन्द्रियसम्बन्धात्सैव सत्ता विशिष्यते । भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ अत्यन्तं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते । यः समासादनाद्भेदः स तत्र न विवक्षितः ॥' इति ॥

उ.]कल्पितत्वादिति । प्रयोगे इत्यर्थः । यत्र वेति। 'प्रयोगे' इति शेषः । वचनेन—'अस्त्यर्थाना'मिति वार्त्तिकेन। असिद्धविपर्यास इति भाष्येऽपि,—'लोके' इति शेषः । चो हेतौ।यतः शिष्टलोकस्यानभिमतो विपर्यासो विपरीतः प्रयोगोऽतो न विकल्पेन प्रयुज्यन्तेऽन्यैरतोऽत्र यथाकालमेव प्रत्यया इत्यर्थः।किं पुनः कारणमिति।किं पुनः कारणं वा न भाष्यन्ते,किं च कारणं शिष्टाना विपर्यासाऽसिद्धिरिति भावः। वास्तवकालभेदस्याऽभावाद्वचनेनैव साधने प्राप्तेऽन्येव विपर्यासादिकमिति भावः । इन्द्रियव्यापार—तत्प्रति । इन्द्रियपदेनाऽत्र कर्मेन्द्रियं । सता वस्तूनामिन्द्रियसम्बन्धात्—तत्काल-प्राप्तिसम्बन्धादेवैव सत्ता कालभेदमापद्यते। वस्त्वन्तरम्—इन्द्रियव्यापारः। तदेवाह—यः समासादनादिति । तत्र—बुद्धिरचनात्मकसामान्ये । वर्तमानेति । वर्तमाना-

1 'कूपोऽस्त्यस्तीति' । 2 'यथास्वकालं तु' । 3 इदं लुप्तम् । 4 'यथा स्वकालमेता' । 5 इदं क्वचित्' ।

सादन, बुद्धिकर्म व्यवसाय ॥ एव हि कश्चित्पाटलिपुत्र जिगमिषुराह 'योऽयमध्वा गन्तव्य आ पाटलिपुत्रादेतस्मिन्कूपो भविष्यति' ॥ अनद्यतने कूपो भवितेति । समासाद्य 'कूपोऽस्ती'ति । समासाद्यातिक्रम्य 'कूपोऽभू'दिति । समासाद्यातिक्रम्योपेत्य वा 'कूप आसी'दिति । समासाद्यातिक्रम्योपेत्य वा विस्मृत्य 'कूपो बभूवे'ति । यदेन्द्रियकर्म तदैता विभक्त्यो, यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यैति ॥ [ क्षिप्रवचने लृट् ] ॥

नाऽनद्यतनवत् क्रियाप्रबन्धसामीप्ययो ॥ ३।३।१३५ ॥

किमर्थमिमौ द्वौ प्रतिषेधावुच्यते नाऽद्यतनवदित्येवोच्येत? ॥ १॥ नाऽनद्यतनवत्प्रतिषेधे लङ्लुटो प्रतिषेध ॥ ॥ नानद्यतनवत्प्रतिषेधे लङ्लुटो प्रतिषेधो द्रष्टव्य ॥*॥ अद्यतनवद्वचने हि विधानम् ॥*॥ अद्यतनवद्वचने हि सति विधिरेव विज्ञायेत ॥ तत्र को दोष ? ॥*॥ तत्र लुङ्विधिप्रसङ्ग ॥*॥ तत्र लुङ्विधि प्रसज्येत । ॥२॥ लुङ्लृटोश्चाऽयथाकालम् ॥*॥ लुङ्लृटोश्चाऽयथाकाल प्रयोग प्रसज्येत । लुङोऽपि विषये लृट् स्यात्, लृटश्च विषये लुङ्

प्र ] नानद्यतन । तत्र लुङ्विधिप्रसङ्ग इति । अपूर्वविधानेऽद्यतने लुङो दृष्टत्वा द्भूतभविष्यदनद्यतने प्रसङ्ग । लुङ्लृटोश्चेति । ननु वत्करणात्साहचर्यासङ्करो न भविष्यति । नैतदस्ति । अप्राप्तप्रापणार्थत्वादतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्लृटोर्विधानेऽप्यद्यतने दृष्टत्वमात्रेणाऽयथाकालमपि प्रसङ्ग उच्यते। वत्करणं तु तदा विस्पष्टार्थमेव स्यात् । प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थम्। अन्यथा वत्करणमनर्थकं स्यात् नानद्यतनइत्येव ब्रूयात्। तेन परोक्षे

उ ] धिवेत्यर्थ ॥ [ क्षिप्रवचने ] ।

नाऽनद्यतन । अपूर्वेति । अद्यतनशब्दोपादानेन कस्याऽपि विध्यभावात्तत्र दृष्टत्वमात्रेणाऽतिदेशो वाच्य ।तथा च भूतादिष्वनद्यतने लङपि स्यादिति भाव ।भाष्ये-लुङ्लृटोरिति। भविष्यदनद्यतने लुङ्, भूतानद्यतने लृट् स्यादिति भाव । अप्राप्तेति । लुङ्लृटौ भूतभविष्यतोरद्यतने दृष्टौ तत्राऽद्यतनवदित्युच्यमाने तस्मिन्नेवाऽद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदाशङ्क्य । तत्राऽद्यतनोऽद्यत्वेनाऽतिदेशे भूताऽनद्यतने लुङ्, भविष्यति तत्र लृडिति प्रयोगसिद्धावपि अद्यतनवदिति निषेध ।। तस्मात्प्रत्याहारत्वेनाऽतिदेशे आश्रीयमाणे यथाकालप्रसङ्ग इति भाव । भाष्ये-यथाभासमेवेति । एवैव विधाय एवेषु एवेषु कालेषु भवन्तीति न सङ्करप्रसङ्ग इत्यर्थ । तेन परोक्षे इति । परन्त्वत्र मन चिन्त्यम्, भाष्ये लुङ्लृटोरेवोपक्रमे उक्तत्वादिति दिक् ॥ [ नानद्यतनवत् ] ।

१ इति क्वचित् । २ 'भविष्यन्ति' । ३ 'विधानमिदम्' । ४ 'भूतादयो' ।

स्यात् ॥ अथ पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते यथाप्राप्तमेवाद्यतने भविष्यतीति । [ नानद्यतनवत्क्रियाप्रबन्ध ] ॥

### भविष्यति मर्यादावचनेऽवरस्मिन् ॥ ३।३।१३६ ॥

किमर्थमिदमुच्यते न 'नानद्यतनव'दित्येव सिद्धम् ? ॥*॥ भविष्यति-मर्यादावचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थम् ॥*॥ [ भविष्यति मर्यादावचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थम् ]। अक्रियाप्रबन्धार्थोऽयमारम्भः ॥ किमुच्यतेऽक्रियाप्रबन्धार्थ इति, न पुनः क्रियाप्रबन्धार्थोऽपि स्यात्॥*॥ क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यम् ॥*॥ क्रियाप्रबन्धार्थमिति चेद् [ वचनानर्थक्यम् ] वचनमनर्थकं [भवति], सिद्धं क्रियाप्रबन्धे पूर्वेणैव ॥ इदं तर्हि प्रयोजनम् 'अनहोरात्राणा'मिति वक्ष्यामीति । इह मा भूत्–'योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः पञ्चदशरात्र' इति ॥*॥ अहोरात्रप्रतिषेधार्थमिति चेन्नाऽनिष्टत्वात् ॥*॥ अहोरात्रप्रतिषेधार्थमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अनिष्टत्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ इदं तर्हि प्रयोजनम्–भविष्यतीति वक्ष्यामीति । इह मा भूत्,–'योऽयमध्वा गत आ पाटलिपुत्रात्तस्य यदवरं साकेता'दिति ॥ 'नानिष्टत्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ इदं तर्हि प्रयोजनं–मर्यादावचन इति वक्ष्यामीति । इह मा भूत् योयमध्वाऽपरिमाणो गन्तव्यस्तस्य यदवरं साकेता'दिति ॥ 'नानिष्टत्वात्' । अत्रापि नानद्यतनव-

---

प्र.] लिट्' 'ह्यशश्वतोर्लङ् च' 'लट् स्मे' 'परि लुङ् चास्मे' इत्येतत्सूत्रविहिता अपि प्रत्यया प्रतिषिध्यन्ते । [ नानद्यतनवत् ] ।

भविष्यति । अक्रियाप्रबन्धार्थमिति । एतच्चोपलक्षणं, तेन असामीप्यार्थं चेति द्रष्टव्यम् । वचनसामर्थ्याच्च क्रियाप्रबन्धसामीप्ययोरिति निवृत्तम् । अनहोरात्राणामिति । उत्तरसूत्रस्य प्रयोजनमेतत्स्यादिति भाव । अनिष्टत्वादिति । क्रियाप्रबन्धसामीप्ययोरहोरात्रविभागेऽप्यनद्यतने प्रतिषेध इष्यत इत्यर्थ ।मर्यादावचन इति । नियमार्थमेतत् स्यान्मर्यादावचन एवेति भाव । अत्रापीति । विधिनिषेधसम्भवे विधेर्ज्यायस्त्वात् । [ भविष्यति मर्यादावचने ]॥

---

उ.] भविष्यति। उत्तरसूत्रे सप्रयोजनमेतदिति पाठ । भाष्ये त्रिंशद्रात्र इति । 'संख्यापूर्वं रात्र क्लीब'मिति स्वस्मादेव भाष्यप्रयोगात् , 'लिङ्गमशिष्यं लोकाश्रयत्वा-ल्लिङ्गस्ये'त्युपेक्षाऽनेनेति भाव । भाष्ये–योऽयमध्वापरिमाण इति । 'अपरिमाण' इति च्छेद । नियमार्थमिति । क्रियाप्रबन्धविषये इति भावः । विधीति । अक्रियाप्रबन्धादाविति भाव ॥ [ भविष्यति मर्यादा ] ॥

---

१ इदं तर्हि स्यात् । २ इदं प्रतिषिध्य । ३ साकेतं –अयोध्या ।

दित्येवेष्यते ॥ इदं तर्हि प्रयोजनम्–अवरस्मिन्निति वक्ष्यामीति । इह मा भूत्, 'योऽयमध्वाऽऽगन्तव्य आपाटलिपुत्रात्तस्य यदवरं साकेतात्' इति। 'नानिष्टत्वात्'। अत्रापि नानद्यतनवदित्येवेष्यते। तस्मात्सूच्यते 'भविष्यति मर्यादा वचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थं, क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्य'मिति।

कालविभागे चाऽनहोरात्राणाम् ॥ ३।३।१३७ ॥

॥*॥ अनहोरात्राणामिति तद्विभागे प्रतिषेधः ॥*॥ अनहोरात्राणामिति चेत्तद्विभागे प्रतिषेधो वक्तव्यः । योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्द्धमास' इति । ॥*॥ नैष विभागः ॥*॥ तैश्च विभाग इति वक्तव्यम् । 'योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्र' इति। तदेव विज्ञायते 'अहोरात्राणामेवाहोरात्रैर्विभागे प्रतिषेधो भवती'ति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'अनहोरात्राणामिति तैश्च विभागे तैश्च विभागे' इति ॥

परस्मिन्विभाषा ॥ ३।३।१३८ ॥

कस्मिन्परस्मिन् ? ॥ 'कालविभागे' ॥ कुत एतत् ? ॥ योगविभागकरणसामर्थ्यात् ॥ [ परस्मिन्विभाषा ] ।

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३।३।१३९ ॥

साधनातिपत्तावपि वक्तव्यम् । इहापि यथा स्यात्, अभोक्ष्यत भवा

---

प्र ] कालविभा । तद्विभाग इति। अनहोरात्राणामिति सम्बन्धसामान्ये षष्ठी, न कर्मणि, नापि कर्तरि। तेन यदाऽहोरात्राणामन्येन कालेन विभागोऽन्यस्य वा अहोरात्रैरहोरात्राणां वाऽहोरात्रैः सर्वथा प्रतिषेध इत्यर्थः ॥ [कालविभागे चान] ॥

परस्मिन् । योगविभागकरणसामर्थ्यादिति । इह 'भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणा'मित्येकयोगे कर्तव्ये पृथग्योगकरणं परस्मिन्विभाषेत्यत्र कालविभागग्रहणसम्बन्धार्थमित्यर्थः ॥ [ परस्मिन्विभाषा ] ॥

लिङ्निमित्ते । साधनातिपत्तावितिं । साधन–मासादि । तस्याऽतिपत्तौ क्रियानिष्पत्तावपि लृङ् भवतीति भावः । अभोक्ष्यतेति। मासस्याऽनिष्पत्तेः।भोजन-

---

उ ] कालविभागे चा । 'द्वन्द्वश्च प्राणि'त्यादिवदहोरात्राणामहोरात्रैर्विभागे एव स्यादतो वार्त्तिकमनहोरात्राणामिति । तदाचष्टे–सम्बन्धसामान्ये इति ॥

परस्मिन्विभाषा । एकयोगेति । सामर्थ्यात्कालविभागविषय एव निषेध, नहि देशविभागस्याऽहोरात्रैः सम्बन्धोऽस्तीति भावः । पृथग्योगेति । कालविभाग ग्रहणसामर्थ्याच्चेत्यपि बोध्यम् ॥ [ परस्मिन्विभाषा ] ॥

लिङ्निमित्ते । कुतश्चिन्निमित्तात् क्रियाया अनिष्पत्तिः–क्रियाऽतिपत्तिः ।

---

१ विभागे प्रतिषेधो वक्तव्यः । २इदं क्वचिन्न । ३'द्वन्द्व' ।४इदं वार्त्तिकमित्यन्ये ।

न्मांसेन यदि मत्समीपं आसिष्यतेति ॥ तत्तर्हि वक्तव्यम् ?॥ न वक्तव्यम् । नाऽन्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति साधनातिपत्तिश्चेत्क्रियातिपत्तिरपि भवति । तत्र क्रियातिपत्तावित्येव सिद्धम् । [ लिङ्निमित्ते ] ॥

भूते च ॥ ३।३।१४० ॥

॥*॥ भूते लङुताप्यादिषु ॥*॥ भूते लङुताप्यादिषु द्रष्टव्यः । उताध्यैष्यत । अप्यध्यैष्यत ॥ [ भूते च ] ।

वोताप्योः ॥ ३।३।१४१ ॥

॥*॥ विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्याम् ॥*॥ विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्यामिति वक्तव्यम् । वोताप्योरिति ह्युच्यमाने सन्देहः स्यात्, प्रागुतोताऽपिभ्यां, सह वेति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्या'मिति ॥ [ वोताप्योः ] ॥

गर्हायां लडपिजात्वोः ॥ ३।३।१४२ ॥

॥*॥ गर्हायां लड्विधानानर्थक्यं क्रियाऽसमाप्तिविवक्षितत्वात् ॥*॥ गर्हायां लड्विधिरनर्थकः ॥ किं कारणम् ? ॥ क्रियाऽसमाप्तिविवक्षितत्वात् । क्रियाया अत्राऽसमाप्तिर्गम्यते । एष च नाम न्याय्यो वर्तमानः काले

प्र.]क्रियायास्तु निष्पत्तिरेव । साधनातिपत्तिश्चेदिति । करणभेदाद्भिन्ना भोजनक्रिया । तेन मांसातिपत्तौ मांसभोजनक्रियाऽनिष्पत्तिरेवेत्यर्थः ॥ [ लिङ्निमित्ते ] ॥

भूते च । भूत इति । वक्ष्यमाणसूत्रार्थपर्यालोचनलभ्यं चैतत् । 'उताप्यो'रित्यारभ्य यल्लिङ्निमित्तं तत्र भूते क्रियातिपत्तावनेन लृङ्प्रत्ययः, प्राक् ततो विकल्प इत्यर्थः ॥

वोताप्योः । विभाषेति । 'गर्हायां लडपिजात्वो'रित्यनेन लड्विधानाल्लिङ्निमित्ताऽभावाद्विभाषा कथमि लिङ् चेत्यत्र प्रभृति प्रागुताप्योः समर्थयोरित्यतः सूत्रात् यल्लिङ्निमित्तं तत्र लृङ्विकल्प । मर्यादाया द्योतनाद्, नाभिविधावित्यर्थः । गर्हाप्रभृताविति । गर्हादिविशिष्टे प्रत्यये इत्यर्थः ॥ [ वोताप्योः ] ॥

उ.]साधनाऽतिपत्ति —साधनविशेषविशिष्टक्रियाऽनिष्पत्तिरित्यर्थः ॥

भूते चाऽउताप्यो प्राग् 'वा'इत्यस्याऽधिकार इत्युक्त्याऽन्यस्य तदुत्तरत्राधिकार इति लभ्यते, तदन्वाचष्टे इत्याह—वक्ष्यमाणेति । तत्रेति । तत्रापीत्यर्थः । लृङ्प्रत्यय इति । 'नित्य'मिति शेषः ॥ [ भूते च ] ॥

वोताप्योः । भाष्ये विभाषा गर्हाप्रभृताविति । गर्हाविशिष्टप्रत्ययपर्यन्तविषयविभाषापदघटितेन—'विभाषा कथमि लिङ् चे'ति सूत्रप्रभृतीनित्यर्थः । अनन्तरसूत्रस्थाने बोधयन्नाह—गर्हाया लडपीति ॥ [ वोताप्योः ] ।

१'समाप्तेर्विव' । २'विधानानर्थक्य' । ३'क्रियाया असमाप्तेर्' । ४'तिर्निरूपिता' ।

यत्र क्रियाऽपरिसमाप्ता भवति तत्र 'वर्तमाने ल'डित्येव सिद्धम् ॥ यदि वर्तमाने लडित्येवमत्र लड्भवति शतृशानचावपि तर्हि प्राप्नुतः । इष्येते च शतृशानचौ । अपि मा याजयन्तं पश्य । अपि मा याजयमानं पश्य ॥

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ ३।३।१४५ ॥

॥ *॥ किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणानर्थक्यम् ॥*॥ किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणमनर्थकम् । निवृत्तं 'किंवृत्त' इति, तस्मिन्निवृत्तेऽविशेषेण किंवृत्ते चाऽकिंवृत्ते च भविष्यति ॥ इदं तर्हि प्रयोजनम्,—उपपदसंज्ञा वक्ष्यामीति ॥ उपपदसंज्ञावचने किं प्रयोजनम् ? ॥ 'उपपदमति'ङिति समासो यथा स्यात् ॥ 'अति'ङिति प्रतिषेधः प्राप्नोति ॥ यदा तर्हि लृट् सत्संज्ञो तदोपपदसंज्ञा भविष्यति ॥ भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येतेऽविशेषविहितश्चायम् ॥ [अनवक्लृप्त्यमर्ष] ॥

जातुयदोर्लिङ् ॥ ३।३।१४७ ॥

॥ *॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानम् ॥*॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानं कर्तव्यम् । यदा भवद्विधः क्षत्रियं याजयेत् । यदि भवद्विधः क्षत्रियं याजयेत् । [ जातुयदोर्लिङ् ] ॥

शेषे लृडयदौ ॥ ३।३।१५१ ॥

प्र ] गर्हायाम् । इष्येते इति । तौ च सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लटो न प्राप्नुत इति दोषत्वानेव सूत्रारम्भ इत्यर्थः । [ गर्हायां लडपि ] ॥

अनव । इदं तर्हीति । 'अकिंवृत्त शब्देन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते । तस्योपपदसंज्ञार्थमकिंवृत्तग्रहणं तेन किंवृत्ताऽकिंवृत्तयोरुपपदसं. । सिध्यतीति भावः । अतिङिति प्रतिषेध इति । न विद्यते तिङस्मिन् समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति भावः । उपपदसंज्ञेति । उपपदसंज्ञाकार्यं समास इत्यर्थः । भविष्यदधिकारविहितस्येति । 'लृटः सद्वे'त्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येव विहितस्य 'लृटः शेषे चे'त्यस्य लृट आनन्तर्याद्वा शतृशानचौ । अविशेषेति । कालमात्रे विधानादयं लृडत्र्यपि भविष्यति भवति तथापि भविष्यदधिकारविहितो न भवतीति शतृशानचावस्य न भवतः । [ अनवक्लृप्त्यमर्षयोर ] ॥

उ ] गर्हायां लः । अपि मा याजयन्तमिति । ताच्छील्यप्रतिपादनेन गर्हा । यद नेन कथने तत्सर्वं याजनार्थमिति सर्वदा याजयन्नवाऽऽस्तेति क्रियाया समाप्तिरविरतिलेति भावः ॥ [ गर्हायां लडपि ] ॥

अनवक्लृ । ननु किंवृत्ते नेत्यर्थात्कथमुपपदत्वमत आह—अकिंवृत्तेति । उपपदसंज्ञाया अन्यदाऽपि भावात्तदा 'भविष्यती'त्यनुपपन्नमत आह—उपपदसंज्ञाकार्यमिति ॥

॥*॥ चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वात् ॥*॥ चित्रीकरणे यदिप्रतिषेधोऽनर्थकः ॥ किं कारणम् ? ॥ 'अर्थान्यत्वात्' । नहि यदावुपपदे चित्रीकरणं गम्यते ॥ किं तर्हि ? ॥ सम्भावनम् ॥

## हेतुहेतुमतोर्लिङ् ॥ ३।३।१५६ ॥

॥*॥ हेतुहेतुमतोर्लिङ् ॥*॥ हेतुहेतुमतोर्लिङिति वक्तव्यम् । अनेन चेद्यायात्त शकटं पर्याभवेत् । अनेन चेद्यास्यति न शकटं पर्याभविष्यति ॥*॥ भविष्यदधिकारे ॥*॥ भविष्यदधिकारे इति वक्तव्यम् । इह मा भूत् । वर्षतीति धावति । हन्तीति पलायत इति ॥ अथेदानीं शतृशानचावत्र कस्मान्न भवत ? ॥

॥*॥ देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥*॥

## इच्छार्थेषु लिङ्लोटौ ॥ ३।३।१५७ ॥

---

प्र॰] शेषे लृ० । नहि यदाविति । 'आश्चर्यं यदि स भुञ्जीते'त्यत्र सम्भावनं तात्पर्येण प्रतीयत इति तन्निमित्त एव लिङ् भविष्यति 'सम्भावनेऽलमिति चे'दित्यनेनेत्यर्थः । सम्भावने हि यदिशब्दः प्रयुज्यत । [ शेषे लृड्यदौ ]॥

हेतु । देवत्रात इति । व्यवस्थितविभाषाश्रयणादिति भावः । तेन देवत्रात इति संज्ञा भवति, न तु देवत्राण इति । गलशब्दः प्राण्यङ्गे भवति न तु गर इति । विषे तु गर इति, न तु गल इति । जलचरे ग्राह एव, ज्योतिषि ग्रह एव । इतिशब्दप्रयोगे च सम्प्रज्ञो न प्रवर्तते । गवाक्ष इति । वातायने नित्यमेवावङ् भवति । संशितव्रत इति । व्रतविषये श्यतेर्नित्यमित्त्वं भवति । मिथ इति । परस्परेण देवत्राणादिभिरेतस्मिन्विषये न विकल्प्यन्त इत्यर्थः । एषु च 'तुदादिदोन्द्रने'ति वा नत्वम्, अचि विभाषेति रत्वं, विभाषाग्रह इति णप्रत्ययः, लक्षणेऽतो नित्यमित्त्वं इति शतृशानचौ तन्वोर्विभाषेत्यतो विभाषानुवर्तनाद्विकल्पितौ, अवङ्स्फोटायनस्येति विभाषाऽवङ्, शाच्छोरन्यतरस्यामिति नेति विषयः ॥ [ हेतुहेतुमता ] ॥

---

उ॰] शेषे लृड्।सम्भावन तात्पर्येणेति । 'यदि'शब्दस्य सम्भवनार्थत्वेन सम्भावन म्प्रतीयत इत्यर्थः । तदेवाह– सम्भावने हि यदिशब्द इति । भाष्ये–न हि यदाविति । चित्रीकरणस्याश्चर्यपदगम्यम्, न त्वन्यो नाम पर्यन्मारोऽस्तीत्या-द्युदाहरण इव तत्समभिव्याहारं विनाऽपि गम्यमिति भावः ॥ [ शेषे लृड्यदौ] ॥

हेतुहेतु । लक्षणहेत्वोरिति । क्रियाया लक्षणे हेतौ च वर्तमानाद्धातोः कर्तरि शतृशानचावित्यर्थः सूत्रस्य । क्रिय लक्षणाद्यर्थकत्वेऽपि द्योतकसमुच्चयस्य इत्यादिनिशब्देन तद्द्योतनेऽपि नाप्राप्तिरिति भावः ॥ [ हेतुहेतुमतोर्लिङ् ]

---

१ 'दर्शिने'। २ 'भविष्यत्यर्थे'। ३ इद क्वचिन्न । ४ 'मिथस्तु परस्परेण' ।

॥*॥ इच्छार्थेषु लिङ्लोटौ कामप्रवेदन चेत् ॥*॥ [इच्छार्थेषु लिङ्लोटौ ] कामप्रवेदन चेद्गम्यत इति वक्तव्यम् । इह मा भूत्,-इच्छन्करोतीति ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३।३।१६१ ॥

विध्यधीष्टयो को विशेष ?॥ विधिर्नाम प्रेषणम् । अधीष्ट नाम सत्कारपूर्विका व्यापारणा ॥ अथ निमन्त्रणामन्त्रणयो को विशेष ? ॥ सन्निहितेन निमन्त्रण भवत्यसन्निहितेनामन्त्रणम् [इति]॥ नैषोऽस्ति विशेष । असन्निहितेनाऽपि निमन्त्रण भवति,सन्निहितेन चामन्त्रणम्॥एव तर्हि यन्नियोगत. कर्तव्य तन्निमन्त्रणम्॥ किं पुनस्तत्?॥हव्य कव्य वा । ब्राह्मणेन 'सिद्ध भुज्यता'मित्युक्तेऽधर्म प्रत्यवायात्. । आमन्त्रणे कामचार ॥ कथ पुनरिद विज्ञा-

प्र ] विधिनिमन्त्रणा । विध्यधीष्टयोरिति । उभयोरपि नियोगरूपत्वादिति प्रश्न । प्रेषणमिति । भृत्यादे कस्यांचित् क्रियायां नियोजनमित्यर्थ । अधीष्ट नामेति । गुर्वादेस्तु पूज्यस्य व्यापारणमधीष्टमित्यर्थ । प्रपञ्चार्थं न्यायव्युत्पादनार्थं वाऽर्थभेदमाश्रित्य भेदेनोपादान विधिनिमन्त्रणादीना कृतम्। विधिरूपता हि सर्वत्रान्वयिनी विद्यते । सन्निहितेनेति । धावयनाऽऽगमनादिना । यथेह भवानासीतेति सन्निहितमासीन, तदनुपरमार्थं च निमन्त्र्यते । असन्निहितेति । यथेह भवान् भुञ्जीतेति भोजनमसन्निहित तदर्थमामन्त्र्यते । यन्नियोगत इति । अवश्यकर्तव्य नित्य नैमित्तिक च । तन्निमन्त्रणमिति।निमन्त्रणविषयत्वात्तदेव निमन्त्रणम्।अधर्म

उ ] इच्छार्थेषु । कामप्रवेदनमिति । प्रयोक्तु स्वाऽभिप्रायाऽऽविष्करणमित्यर्थ ॥

विधिनि। नियोगेति । नियोग -प्रवर्तना,प्रवर्तकनिष्ठ प्रवृत्त्यनुकूलो व्यापार । एतदेव प्रेषणम् । भाष्ये-व्यापारणेति । प्रवर्तनेत्यर्थ । एतेन नियोग इष्टसाधनताज्ञानमिति परास्तम् । 'हेतुमति चे'तिसूत्रस्थलिङादिणिचो पर्यायत्वशङ्कापरभाष्यविरोधापत्तेश्च स्यात् । न्यायेति । शब्दशक्तिविषयेत्यर्थ । अय भाव -निमन्त्रणादिशब्दाना प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसम्मततया विधिशब्दस्याऽपि प्रयोजकनिष्ठव्यापारवाचित्व न निष्टसाधनत्वादिबोधकत्वमिति । स चाऽत्र प्रयुज्यमानलिङादिरूप । स च प्रेरणात्वेन लिङ्शक्य । प्रेरणात्वञ्चाऽखण्डोपाधि । एतस्यैव रूपभेदेन वाच्यवाचकत्वे उपपद्येते । स च लोके पुरुषनिष्ठो, वेदे ईश्वरनिष्ठ । वेदस्याऽपौरुषेयत्वादिना मते-शब्दनिष्ठ । शब्दरूपत्वाच्च स 'शाब्दी भावने'त्युच्यत इति भट्टपादानां सिद्धान्त । विधिरूपतेति । प्रेरणेत्यर्थ । यन्नियोगत कर्तव्य श्राद्धादि, तस्य निमन्त्रणत्वाऽभावादाह-निमन्त्रणविषयत्वादिति । भाष्ये-ब्राह्मणेनेति । 'सिद्ध हव्य कव्य वा भुज्यता'मिति ब्राह्मणेनोक्त-

१ इद क्वचिन्न । २ इति क्वचिन्न । ३ 'तनाऽप्यामन्त्र' । ४ 'कव्यंच' ।

यते,–निमन्त्रणादीनामर्थे इति, आहो स्वित्निमन्त्रणादिषु गम्यमानेष्विति ?॥ कश्चात्र विशेषः ? ॥*॥ निमन्त्रणादीनामर्थे चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात्॥*॥'निमन्त्रणादीनामर्थे चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययानुपपत्तिः'। [ निमन्त्रणादीनामर्थे चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययो नोपपद्यते]॥ किं कारणम्?॥ 'प्रकृत्यभिहितत्वात्'। प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा प्रत्ययो न प्राप्नोति ॥*॥ द्विवचनबहुवचनाऽप्रसिद्धिश्चैकार्थत्वात् ॥*॥ द्विवचनबहुवचनयोश्चाऽप्रसिद्धिः ॥ किं कारणम् ?॥ 'एकार्थत्वात्' । एकोऽयमर्थो निमन्त्रणं नाम तत्रैकत्वादेकवचनमेव प्राप्नोति ॥ अस्तु तर्हि 'निमन्त्रणादिषु गम्यमानेष्विति ॥ इहापि तर्हि प्राप्नोति 'देवदत्तो भवन्तमामन्त्रयते, देवदत्तो भवन्तं निमन्त्रयते' इति ॥*॥ सिद्धं

प्र ]इति।यदाऽन्यो ब्राह्मणो भोक्ता न लभ्यते तदा दौहित्रादिर्निमन्त्रयितव्यः,तस्य च प्रत्याख्यानेऽधर्म इति स्मार्तः समाचारः । आमन्त्रण इति । काम्यकर्माणि यत्र-नया प्रवृत्तिर्नाऽन्यथा । कथमिति । किमिह विध्यादयः प्रत्ययस्याभिधेयत्वेन निर्दिष्टाः,उत विषयभावेनेति प्रश्नः । निमन्त्रणादीनामिति । आदिशब्दस्य प्रत्यया-र्थत्वाद्विधिरपि गृह्यते । प्रकृत्यभिहितत्वादिति । प्रकृत्या योऽर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्यं, न तु प्रकृत्यभिहितेऽर्थे,'उक्तार्थानामप्रयोग' इति न्यायात् । विषयपक्षाश्रये तु प्रकृत्याभिहितेष्वपि विध्यादिषु तत्सत्तामात्राश्रयः प्रत्ययः सिध्य-ति। द्विवचनेति । नाऽप्रसेषु यत्नादिषु विध्यादयोऽर्था निर्दिश्यमानास्तेषां त्र्यवस्थाः प्रसजन्तीति यत्नादिगताया सङ्ख्याया अभिधानं न प्राप्नोतीति भावः । सिद्धं त्विति ।

उ ] र्यादिब्राह्मणं प्रति, तत्र प्रत्याख्यातुर्मातामहस्याऽधर्म इत्यर्थः । 'ब्राह्मणेन दुष्कर-न्यदीयनिमन्त्रणप्रत्याख्याने प्रत्यवायोऽपि तत्कन्याऽतिरिक्तविषयाऽऽमन्त्रणे प्रत्याख्याने नाऽधर्म इति लभ्यते । 'यदाऽन्य' इत्यादिव्याख्याने कैयटेन पौत्र, भाव्याऽनुमृतश्च चिन्त्यः । सामान्यत एव ब्राह्मणस्य श्राद्धादिनिमन्त्रणप्रत्याख्याने-ऽधर्मः स्मृतिष्वपि स्मर्यत इति बोध्यम् । काम्यकर्माणीति । यत्र भोजनाद्यननु-ष्ठानेऽपि न प्रत्यवायस्तद्विषया प्रवर्तना-आमन्त्रणमिति तात्पर्यम्। उत विषयेति। लिङादयस्तु द्योतका इति भावः । विध्यादीनामर्थे इति बहुव्रीहिरत आह-आदिशब्दस्येति। 'प्रत्ये भवन्त'मित्यादि तदुदाहरणं बोध्यम् । निमन्त्रणादीना-मिति भाष्यस्य,-निमन्त्रणादिविषयाणामित्यर्थः । भाष्ये-निमन्त्रये इत्युदाहरणं,-'निमन्त्रते'इत्यादेरपि । ननु निमन्त्रणादिगतेऽपि यत्नादिसङ्ख्याभेदे द्विवचनबहु-वचने भविष्यत इत्यत आह-नाऽप्राप्तेष्विति । एवञ्च यत्नादयस्तैर्निरूपिते दूष

1 धन पाठो युक्त स्यात्। 2 'प्रत्ययमनुसरन्ति' 3 'रक्षर्यवत्'। 4 'दर्शित'।

तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात्॥ ८॥ सिद्धमेतत् ॥ कथम्?॥ [ 'द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात्' ]। द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवतीति वक्तव्यम् ॥ के च[1] प्रकृता अर्थाः ?॥ भावकर्मकर्तारः ॥ [एवमपि] भवेत्सिद्ध,–प्राप्नोतु भवानामन्त्रणम्। अनुभवतु भवानामन्त्रणमिति,यत्र द्वितीय आकाङ्क्ष्यते।इद तु न सिध्यति,–निम

प्र ]द्वितीयनित्यादिरमर्थं यदा धात्वर्थ आकाङ्क्षति तदा लिङ्प्रत्यय।यदा च धात्वर्थे सपाद्ये नियोज्यो नियुज्यते तदा द्वितीयाकाङ्क्षित्वम्। इह तु 'देवदत्तो भवन्तमामन्त्रयते' इति नास्ति धात्वर्थस्य द्वितीयाकाङ्क्षित्वमिति लिङ् न भवति। प्राप्नोत्विति। धात्वर्थस्य प्राप्त्यादेर्भिन्नमामन्त्रण प्रत्याकाङ्क्षा विद्यत इति भाव। आमन्त्र-

उ ]णान्तर बोध्यम्। कर्त्रादिगताया सङ्ख्याया इति। क्रियायामारोपिताया' इति शेष। वस्तुत प्रवर्त्तनानिष्टप्रेरणाया प्रयोज्यकर्तृकत्वाऽभावात्तद्गतसङ्ख्याऽऽरोपे न मान,वाच्यत्वे च तस्या एव विशेष्यत्व, सा चैकैवेति द्विवचनाद्यनापत्ति।धात्वर्थस्य कर्तृद्वित्वादिना द्वित्वाद्यावारे तस्य विशेषणत्वाच्च द्विवचनादिनियामकता। कर्त्रादिबाधस्तु न युक्त इत्यग्रे स्फुट भविष्यति। अत एव भाष्ये द्विवचनाद्यसिद्धावेकार्थत्वादित्येव हेतुरुक्त। विनतिर्नगरोऽयमर्थो निमन्त्रण नाम तस्यैकत्वादिति। अनेकविषयकमपि निमन्त्रणमेकमेवेति तदर्थ। एतेन विशेष्यगतसङ्ख्यैकवचनादिबोध्यति सूचितम्। अत एवाऽत्र पक्षे भावकर्त्रादीना बोधाऽनापत्तिरिति दूषण नोक्तम्। भाष्ये–इहाऽपि प्राप्नोतीति। लडादयस्तेभ्यो न स्यु, अनेन लिङा बाधितत्वादिति भाव। द्योतकतापक्षीय दूषणमुद्धर्त्तुमाह–सिद्धन्त्विति। द्वितीयाकाङ्क्षधातो प्रकृते प्रत्ययार्थे कर्त्रादौ लिङित्यर्थ। कर्त्रादीनामपि द्योत्यत्वमिति पक्षे 'प्रत्ययार्थे' इत्यस्य प्रत्ययद्योत्ये इत्यर्थ। नन्वेव 'पश्य मृगो धावती'-त्यादावपि लिङ् स्यादत आह–द्वितीय विध्यादिकमिति। द्वितीयशब्देन विध्यादिरेव गृह्यत इति भाव। नियोज्य –प्रेर्य। नियुज्यते–प्रेर्यते। प्रेरणाविषय धात्वर्थे यदा धातोर्लक्षणा तदा प्रकृतेऽर्थे प्रत्यय इति भाव। प्रकृते प्रत्ययार्थे इत्यनेनाऽऽमन्त्रणादीनामर्थे इति पक्षेऽपि तदत्याग सूचित, विरोधाऽभावात्। 'कर्त्रादयो द्योत्या' इति पक्षस्य 'लःकर्मणि 'इति सूत्रस्थभाष्यसम्मतत्वया बाधे माना-ऽभावाच्च। अत एव वाचकत्वपक्षे द्विवचनाद्यसिद्धिवत्तिनाद्यसिद्धिर्नोक्ता। भावकर्मकर्त्रर्थकत्वस्यैवात्मनेपदपरस्मैपदविभागेन तद्विधानात्। युष्मदस्मच्छेषसामानाधिकरण्याऽभावेन प्रथमपुरुषाद्यसिद्धिर्नोक्ता, अनियमश्च नोक्त इति दिक्। भिन्नमामन्त्रणप्रतीतीति। धात्वर्थाऽतिरिक्त प्रेरणरूपव्यापार प्रतीत्यर्थ।'प्राप्नोतु भवा'-

१ इद क्वचिन्न। २ 'के पुन' प्रकृता'। ३ 'र्थसिद्धिश्च'।

न्त्रयै आमन्त्रयै इति ॥ अत्रापि द्वितीय आकाङ्क्ष्यते ॥ कः ? ॥ निमन्त्रि-रेव । निमन्त्रयै निमन्त्रणमामन्त्रयै आमन्त्रणमिति ॥ कथं पुनर्निमन्त्रिर्नाम

---

प्र ]यै इति। आमन्त्रणस्य धात्वर्थत्वात्तस्य चैकत्वाद्भेदपूर्विकाया व्यवस्थाया आन-न्त्रण प्रत्यभाव इति भाव । निमन्त्रयै निमन्त्रणमिति । प्रवृत्तिवाच्य निमन्त्रण विशिष्टकर्मैकत्वात्, तद्विषय स्वकर्तव्यतालक्षणं निमन्त्रणमन्त्रादिनि भिन्नत्वा-दस्त्येन द्वितीयाकाङ्क्षितम् । तदयमर्थ ,-त्वत्कर्तृकं भोजनादिषु निमन्त्रणं मयानु-ष्ठेयम्, ततो भोजनादिषु त्वा निमन्त्रयै इति।अत्र चामन्त्रयै आमन्त्रणं निमन्त्रयै निमन्त्रणमिति,प्रकृत्यर्थव्यतिरिक्तामन्त्रणसद्भावप्रदर्शनायाऽऽमन्त्रणनिमन्त्रणशब्दौ प्रयुक्तौ, नत्वयं लौकिक प्रयोग ,लोटैव प्रकृत्यर्थव्यतिरिक्तस्यामन्त्रणादेर्गमितत्वात्।

---

उ ]नित्यादे -अङ्गीकरोतु भवान्। आमन्त्रणऽङ्गीकारविषया प्रेरणेत्यर्थ ।ननु 'पाक पचतीतिवत् प्रवर्तनाविशेषरूपाऽऽमन्त्रस्यापि तद्विशेषामन्त्रणान्तरविषयाऽऽका-ङ्क्षत्वन आह-भेदपूर्विकाया इति । तत्र सामान्यविशेषयोरभेदाऽन्वयो न तु तथा प्रवृत्ते इति भाव । आमन्त्रणप्रतीति । धात्वर्थव्यापाराऽतिरेकेण प्रेरणाप्रतीत्यर्थ । अत्रेदं तत्त्वं-स्वविषया प्रेरणा तु नाऽत्र प्रत्ययार्थ , स्वेच्छयैव तत्प्रवृत्तिसिद्धे । स्वप्रवृत्ते स्वप्रेरणाऽनपेक्षत्वेन तत्त्यासदर्थत्वाऽभावात्। इदमेवाऽभिप्रेत्य-'उत्तमपुरुषो विधिरापिप्रतिबन्धक' इत्यन्यात्रप्रवदि । अत एव भगवतोत्तमपुरुषविषये एव शङ्कितम् । विशिष्टकर्मकमिति । संबोध्यकर्मक-मित्यर्थ । अवश्यकर्तव्यतालक्षणम्-अवश्यानुष्ठेयत्वलक्षणम्। ततो भोजनादि-ष्विति । तद्बोधनार्थं च 'निमन्त्रयै' इत्यादिप्रयोग इति भाव । नन्वेवं 'निमन्त्रयै निमन्त्रण'मित्यादौ निमन्त्रणादिपदप्रयोगोऽयुक्त , लोटैव तदर्थप्रत्याय-नादत आह-नत्वयं लौकिक इत्यादि । धातूनामनेकार्थत्वात्-निमन्त्रणामन्त्रण-शब्दावर्हत्वार्थौ। अर्हत्वञ्चाऽवश्यकर्तव्यतालक्षण पैरस्त्योक्तम्। एवञ्च 'अर्हे कृत्यतृचश्च'इत्यनेन लिङ्लोटावुत्तमपुरुषविषये इत्युक्तं भवतीति बोध्यम्।भाष्ये-कथं पुनरिति।धर्मिणो हि धर्माऽऽशङ्का न तु धर्मस्येति प्रश्न । अत्यन्त स्त्रीवेनेन्द्रस्य स्त्रीतासाब्द उदाहरणम्। प्रवर्तनाविषय एव कर्तृक पाक इति बोध ।'अर्ह पाकमेव'-

---

१ ' कथं निमन्त्रिर्निमन्त्रिणा,आमन्त्रिरामन्त्रिणा[युज्यते']॥निमन्त्रिरपि निमन्त्रिणा युज्यते आमन्त्रिरामन्त्रिणा । एवश्च भावेन भावयोग । तद्यथा-शिरिशिगा युज्यते-एधितुमिच्छत्येधिषिषतीति । शीनं शीन्येनेति । एतस्याप्येषे रेति गायते, वर्तमानकालश्च प्रत्यय । भवतस्य चाऽऽ मायन सर्वकालश्च प्रत्यय इति॥सूत्र तर्हि भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं-'निमन्त्रणादिषु गम्यमानेषु इहापि प्रा-प्नोति-देवदत्तो भवन्तं निमन्त्रयत इति ॥ अस्तु तर्हि निमन्त्रणादीनामर्थ इति॥"

निमन्त्रणमाकाङ्क्षेत्? ॥ ॥ द्रव्यस्य भावेन भावयोग ॥१॥ तद्यथा इषिरिषिणा युज्यते स्त्रीत्व च स्त्रीत्वेन॥यावता [चा]ऽत्रापि द्वितीय आकाङ्क्ष्यतेऽस्तु तर्हि निमन्त्रणादीनामर्थ इति ॥ ननु चोक्त 'निमन्त्रणादीनामर्थ चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययानुपपत्ति प्रकृत्यभिहितत्वा'दिति॥ नैष दोष । योऽसौ द्वितीय आकाङ्क्ष्यते स एव मम प्रत्ययार्थो भविष्यति ॥ अथ तर्हि दोषो द्विवचनबहुवचनाप्रसिद्धिरेकार्थत्वा'दिति ॥ नैषोऽप्यदोष ॥ ॥ सुपा कर्मादयोऽप्यर्था सङ्ख्या चैव तथा तिङाम् ॥२॥ सुपा सङ्ख्या चैवार्थ, कर्मादयश्च ॥३॥प्रसिद्धो नियमस्तत्र ॥ ॥ प्रसिद्धस्तत्र नियम ॥४॥ नियम प्रकृतेषु वा ॥५॥ अथ वा प्रकृतानर्थानपेक्ष्य नियम ॥ के च प्रकृता ? ॥ एकत्वादय. । 'एकस्मिन्नेवैकवचन न द्वयोर्न बहुषु । 'द्वयोरेव द्विवचन, नैकस्मिन्न बहुषु' । 'बहुष्वेव बहुवचन, नैकस्मिन्न द्वयो'रिति ॥ [ विधिनिमन्त्रणा] ॥

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ ३।३।१६३ ॥

किमर्थं प्रैषादिष्वर्थेषु कृत्या विधीयन्ते नाऽविशेषेण विहिता कृत्यास्ते प्रैषादिषु भविष्यन्त्यन्यत्र च?॥ ॥ प्रैषादिषु कृत्याना वचन नियमार्थम् ॥१॥ प्रैषादिषु कृत्याना वचन क्रियते ॥ किं प्रयोजनम् ?॥ 'नियमार्थम्' । निय

प्र ]नश्यमर्थं ,–आमन्त्रये आमन्त्रणमिति,–आमन्त्रये इत्यत्र लोटि प्रयुज्यमाने आमन्त्रण धात्वर्थविषयमाकाङ्क्ष्यमाणमस्ति । इषिरिति । एषितुमिच्छतीति वाक्यावचनभेदादिच्छयोर्भेदाश्रयो योग । स्त्रीत्वमिति । 'कुमारी'त्यादौ स्त्रीत्व द्रव्यस्य विशेषण, यदा तु तदेव प्राधान्येनाश्रीयते तदा तस्य स्त्रीत्वादिना योग ,–स्त्रीत्व स्त्रीतेति। स एव ममेति । 'निमन्त्रये भवन्त'मित्यत्र प्रकर्तव्य भवतो भोजनादिषु मया निमन्त्रणमिति निमन्त्रणस्यानश्वरकर्तव्यताऽभाव निमन्त्रणमिति प्रकृतिप्रत्ययार्थयोर्भेद इत्यर्थ । सुपामिति । तिङ्वादिभिर्विरोधाऽभाव ल कर्मणि चे'त्यत्र बहुवचननिर्देशात्सर्वलकारसङ्ग्रहात् शेषा उभयानुग्रहाच्च कर्त्रादयो न बाध्यन्त इति कर्तृकर्मगतद्वित्वादिबन्धनानि द्विवचनबहुवचनानि भवन्तीत्यर्थ । [ विधिनिमन्त्रणा ] ॥

उ ]मित्यादौ पारम्पर्यसत्तनाऽनत्याऽनुप्रेयेति बोध ।भाष्य–यावता चाऽत्रेति। यद्यत्रेत्यर्थ । बहुवचनेति । अत एव सर्वलकारान्ते 'ल कर्मणी'त्यत्रापि। इदञ्चिन्त्यम् । 'एतानाथ ल' इति तत्सूत्रस्थभाष्यस्वप्रन्याभ्या 'ल' इत्यस्यैकवचनान्ततायां एव लाभात् । 'सुपा कर्मादय' इत्यस्याऽयम्भाव –धात्वर्थनिष्ठत्वमिव प्ररणाया स्वतएकत्वेऽपि प्रवर्तमानसङ्ख्याया स्वनिष्ठत्वात्वर्थे इव स्वविषयकप्रेरणायामप्यारोपाद्द्विवच

१ 'प्रैषार्थे' । २ नैष दोष' । ३ श्लोकवार्तिकम् । ४ 'निपात' । ५ इद वार्तिक क्वचित । ६ अय पाठ प्रायिक ।

[मार्थोऽयमारम्भ , 'प्रैषादिष्वेव कृत्या यथा स्यु'रिति ॥*॥ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् ॥*॥ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति । न हि प्रैषादिष्वर्थेष्वेव कृत्या इष्यन्ते ॥ किं तर्हि?॥ अविशेषेणेष्यन्ते । बुसोपेन्ध्य तृणोपेन्ध्यम् । घनघात्यम्॥*॥ विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ॥*॥ विध्यर्थं तु प्रैषादिषु कृत्यानां वचनम् । अथ प्रैषादिष्वर्थेषु लोड्विधीयते स विशेषविहितः सामान्यविहितान्कृत्यान्बाधेत॥ वासरूपेण कृत्या अपि भविष्यन्ति ॥ न स्युः ॥ किं कारणम् ? ॥ 'स्त्रियाः प्रागिति वचनात्' । प्राक्स्त्रिया वाऽसरूपः ॥ [ प्रैषातिसर्ग ] ॥

## कालसमयवेलासु तुमुन् ॥ ३।३।१६७॥

॥*॥ प्रथमान्तेषु ॥*॥ प्रथमान्तेष्विति वक्तव्यम् ॥ किं प्रयोजनम् ?॥ इह मा भूत्,—काले भुङ्क्ते ॥ तत्तर्हि वक्तव्यम् ?॥ न वक्तव्यम् । प्रैषादिष्विति वर्तते । तत्रावश्यं प्रैषादिग्रहणमनुवर्त्यम् । प्रथमान्तेष्विति ह्युच्यमाने इहाऽपि प्रसज्येत, 'काल पचति भूतानि काल संहरति प्रजा' ॥

॥८॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥३॥

## धातुसम्बन्धे प्रत्ययाः ॥ ३।४।१ ॥

प्र.] प्रैषाति । बुसोपेन्ध्यमिति । अग्निस्तोकं बुसेन ज्वलनीयमिति वस्तुस्वरूपकथनं, न तु प्रैषादिप्रतिपत्तिः । घनघात्यमिति । घनेन लोहादिना घात्यमिति, कठिनगात्रादित्यर्थः ॥ इति श्रीमन्महामहोपाध्यायकैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च तृतीयः ॥३।३।२॥

उ ]नातीने । वस्तुनो 'याचता चाऽत्रे'त्यादिग्रन्थ एकदेशिनः । एतेन 'प्रत्ययार्थे व्यापारे सङ्ख्यान्वयेऽपि प्रत्ययानाम् प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्ग' इत्यपास्तम्, एकदेश्युक्तित्वेनाऽभ्रमे । नन्वेवमपि नियमेन न स्यादधिकार्थस्याऽपि भानादत आह-प्रसिद्ध इत्यादि । तत्र-अर्थे । अत्र येन स्वार्थस्तो युक्, उपयुक्ते 'पचे'त्यादावपि तत्प्रतीतिश्च, सङ्ख्याकालकारकाणामिवाऽस्या अपि योलनाया एवोचितत्वाच । एवञ्च 'प्रवर्त्तनाविषय पाक' इत्येव बोध इति बोध्यम् ॥

प्रैषाऽति । भाष्ये-स्त्रियाः प्रागिति । इदमपि ज्ञापकं-'स्त्र्यधिकारादूर्ध्वं वाविधाऽसरूपविधिर्न वर्तत' इत्यर्थ ॥ इति॰ श्रीनागेशभट्टविरचिते महाभाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

धातुसम्बन्धे । धातो सम्बन्ध इत्यर्थः । सम्बन्धस्तत्कर्मेणन्, धातो धारक-

१ 'अविशेषेण' । २ 'वाचेन' । ३ इदं क्वचित् ।

प्रत्यय इति वर्तमाने पुन प्रत्ययग्रहण किमर्थम् ? ॥ अप्रातुप्रत्ययानामपि धातुसम्बन्धे साधुत्व यथा स्यात् । गोमानासीत्, गोमान्भवितेति ॥ इह पश्यामो,–भूतकालो भविष्यत्कालेनाभिसम्बध्यमानो भविष्यत्काल सम्पद्यते । कस्मान्न भविष्यत्कालो भूतकालेनाऽभिसम्बध्यमानो भूतकाल सम्पद्यते ?॥ ॥

प्र ] धातुसम्बन्धे प्रत्यया । सम्बन्धस्य अनेकाश्रितत्वात्सामर्थ्याद्द्वित्वावपि सङ्ख्याविशेषो द्वित्वमवगम्यते । धात्वो सम्बन्धो–धातुसम्बन्ध । धात्वर्थश्चात्रोपचाराद्धातुशब्देनोच्यते । न हि स्वार्थे गुणीभूतयोर्धात्वो परस्परेण सम्बन्ध उपपद्यते । धात्वर्थयोस्तु विशेषणविशेष्यभावलक्षणसम्बन्धोपपत्ति । तत्र धातुसम्बन्धे कालान्तरविहितानां प्रत्ययानामन्यस्मिन् काले साधुत्वाभ्यनुज्ञानार्थमिदं सूत्रम् ।

प्रत्यय इति वर्तमान इति । यद्यपि स्वरूपपदार्थक प्रत्ययशब्द प्रकृतस्तथापीह सञ्ज्ञिनिर्देशाऽभावात्सञ्ज्ञिपदार्थको विज्ञायत इति भाव ॥ अधातुप्रत्ययानामपीति । अन्यथा प्रकृतानामेव धातुप्रत्ययानां ग्रहण स्यात् । प्रत्ययग्रहणात्तु सर्वप्रत्ययपरिग्रहार्थात्तद्धितानामपि कालभेदे साधुत्वं भवति । गोमानासीदिति । त्दस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तेऽर्थे विहित । धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्वेऽपि साधुर्भवति । इह पश्याम इति । 'अग्निष्टोमयाज्यस्य पुत्रो जनिता'ति कालभेदे साधुत्वाभ्यनुज्ञानाय सूत्रम् । तत्र विशेषानुपादानाद्यथा भूतकालपरित्यागेन जनितेत्येतन्सम्बन्धाणिनिर्भविष्यति काले भवति

उ ]सम्बन्धस्य कारकाणां वा धातुसम्बन्धस्य सार्वत्रिकत्वात्।धात्वो सम्बन्ध इत्यर्थे तु समासौ दुरुपपादौ, तत्रौ सङ्ख्याविशेषस्याऽभानादत आह–सम्बन्धस्येति ।द्वित्वमवगम्यत इति । वस्तुतो द्वित्वाऽग्रहेऽपि धातुत्वेनैव धातुद्वयबोध इति बोध्यम् । गुणीभूतयोरिति। स्वार्थप्रतिपादनव्यग्रयोरित्यर्थ । नन्वर्थद्वारकसम्बन्धो धात्वोरेवाश्रियता कर्मत्वसमानकर्तृकत्वादिवदिति चेन्न, 'गोमानासी' दित्यादौ प्रवृत्त्यनापत्ते । न ह्यप्रयुज्यमानयोरर्थद्वारकोऽपि सम्बन्धो वक्तुं शक्य इति भाव । अर्थयोश्च क सम्बन्ध इत्यत आह–विशेषणेति। स च प्रत्ययार्थद्वारको वाक्यार्थ इति बोध्यम् ।

अन्यस्मिन्काल इति। उपपदोपाधिप्रकृत्यर्थानान्तु न ग्राह्य, 'वर्तमानसामीप्य' इत्यारभ्य कालाऽन्यत्वस्यैव प्रतिपादनादिति भाव । प्रकृतानामिति । प्रकरणादिति भाव । वर्तमानसत्तेति । न च 'तदस्याऽस्त्यी'त्यत्र सङ्ख्यावद्वर्तमान कालोऽप्यविवक्षित इति वाच्य, 'दण्डिनमानये'त्युक्तऽनीतदण्डस्याप्यानयनापत्ते । इदञ्च तत्रैव भाष्येऽत्र च स्पष्टम् । भाष्ये–'भूतकाल' इत्यादौ वहुव्रीहय । भाविव्यपदेशेति । भाविव्यवहारेत्यर्थ । अग्निष्टोमयाजीत्युत्तरम्––इति 'व्यव-

१ 'धातुत्व' । २ 'धात्वर्थोनाय' ।

धातुसम्बन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम् ॥ ॥ धातुसम्बन्धे प्रत्ययस्य यथा कालविधानात्सिद्धम्। यथाकालविहिता एवैते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते॥ कथं तर्हि कालाऽन्यत्वं गम्यते?॥ ॥ उपपदस्य तु कालान्यत्वम्॥ ॥ उपपदस्यैतत्कालान्यत्वम्॥ कुतो नु खल्वेतत्,—अग्निष्टोमयाजीत्येतदुपपदं भविष्यति, न पुनर्जनितेति॥ एवं तर्हि—॥ ॥ अस्त्यादिभिर्योगे ॥ ॥ अस्त्यादिविषयाः

प्र ]तया जनितेति लुड्लुटयो भविष्यत्कालत्वमग्निष्टोमयाजीत्येतत्संबन्धाद्भूते कस्मान्न भवतीति प्रश्न । यथाकालविधानादिति ।—सूत्रप्रत्याख्यानेनोत्तरम् । 'अग्निष्टोमयाजी'ति भूत एव णिनिर्विधीयते 'जनिते'त्येतत्संबन्धात् भाविव्यपदेशप्रतिपत्तिः, अथास्य सूत्रस्य शाब्दत्वं वर्तेतेत्यर्थः । इतरोऽगृहीताभिप्राय आह—कथं तर्हीति। 'पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टे'त्यत्र यदि भूते णिनिर्विधीयते तदा यागस्य भविष्यताऽवगमो न प्राप्नोतीति प्रश्न । उपपदस्येति । भाविव्यपदेशविशिष्टाद्विशेषणस्य कालान्यत्वं वाक्यार्थत्वादसत्यपि सूत्रारम्भे प्रतीयत इत्यर्थः । विशेष्याया आख्यातादिपदवाच्याया क्रियायाः प्राधान्यात् स्वकाल एवावस्थानं, विशेषणभूतायास्तु क्रियाया उपलक्षणभावेनोपादानाद्भाविभूतव्यपदेशाविरुद्धताप्रतिपादनात्कालान्यत्वागम इत्यर्थ । इतरो यथोक्तमभिप्रायमनुद्धुद्ध्य समीपे भूतमात्रमुपपदनिर्त्यवगम्य चोदयति—कुत इति । तत्राग्निष्टोमयाज्यस्य पुत्रो जात इत्यत्रापि वाक्यार्थं कस्मान्न भवतीति प्रश्न । आचार्यदेशीय आह—एवं तर्हीति । कालविधानाद्धातुग्रहणे सिद्धे धातुसम्बन्ध इति पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं,तेनास्तिभूजनिसम्बन्ध एव प्रत्ययाना कालान्तरे साधुत्वमन्वाख्यायत इति सूत्रारम्भे सति विपर्ययो न भवतीत्यर्थ । अस्त्यादिविषया इति । अस्त्यादिविशेषणत्वेन प्रयुज्य

उ ]रिष्यमाण' इति शेष इति भाव । यष्टेतीति । 'इत्यर्थं प्रतीयत' इति शेष । भाविव्यपदेशादिति । भाविव्यवहारादिपदसमभिव्याहारादिप्रतिपत्तेरित्यर्थ । वाक्यार्थवशादिति । 'जनिते'त्येनत्समभिव्याहारात्प्रतीतेरस्य वाक्यार्थत्वमित्यर्थं । व्यवहारस्य भविष्यत्व विषयभविष्यत्वकृतमिति भाव । वैपरीत्यनिवारणाय मूलयुक्तिं दर्शयति—विशेष्याया इति । भाष्ये—'उपपदस्ये'त्यस्य गुणभूतस्येत्यर्थः । सूत्रारम्भे तु नाऽयं न्याय । न्यायेन वचनस्याघोचे मानाऽभावात् । धातोः संबन्धे ताभ्यां धातुभ्यां ये ये प्रत्ययास्तेऽन्यत्रापि काले भवन्तीति वाक्यार्थंदिग्दर्शनाय ।

सूत्रारम्भे इतिनया च सूत्रस्य 'धातोरस्यादे सम्बन्धे सति धातोः प्रत्ययाः कालान्तरे' इत्यर्थं इति भाव । नन्वस्त्यादिप्रकृतिकत्वाऽभावात्कथं तद्विषयत्वमत आह—अस्त्यादिविशेषणायेति । पूर्वोक्तेनेति । गुणप्रधानभावस्यन्यायाश्रयणाऽ-

१ इदं क्वचित्। २ 'भवति'।३इदं वार्तिकमित्यन्ये।३भाष्यमित्येके।४ 'विशनात्' ।

प्रत्यया भाविन इति वक्ष्यामि॥ के पुनरस्त्यादयः ?॥ अस्तिर्भवतिरय ॥एवमपि यदाऽस्त्यादीनामेवाऽस्त्यादिभिर्योगस्तदा न ज्ञायते कः कस्य कालमनुवर्तते इति। भावि कृत्यमासीत्।पुत्रो जनिष्यमाण आसीत्॥एवं तर्हि वाक्यमेवैतद्व जातीयकं प्रयुज्यते। अग्निष्टोमयाज्यस्येनत्तस्मिन्भविता॥कस्मिन् ?॥ योऽस्य पुत्रो जनिता ॥ कदा ?॥ यदाऽनेनाग्निष्टोमेनेष्टं भवति ॥

॥क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥३।४।२॥

॥ ॥ हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् ॥ ॥ हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्। हिः परस्मैपदानां यथा स्यात्स्वः आत्मने पदानामिति ॥ किं प्रयोजनम् ?॥ लादेशप्रतिषेधार्थम्। लादेशौ हिस्वौ मा भूतामिति ॥ किं च स्याद्यदि लादेशौ हिस्वौ स्याताम् ?॥ 'तिङन्तं पद' मिति पदसंज्ञा न स्यात्॥ मा भूदेव, 'सुबन्तं पद' मिति पदसंज्ञा भविष्यति॥ कथं स्वाद्युत्पत्तिः ?॥ ॥ लकारस्य कृत्त्वात्प्रातिपदिकत्वं, तदाश्रयं प्रत्ययविधानम्॥*॥ लकारः कृत्,तस्य कृत्वात् 'कृत्प्रातिपदिक' मिति प्रातिपदिकसंज्ञा, तदाश्रया-प्रातिपदिकाश्रया-स्वाद्युत्पत्तिरपि भविष्यति ॥ यदि स्वाद्युत्पत्ति

प्र ]इत्यर्थः।आचार्य पूर्वाचिनाभिप्रायेण सूत्रप्रत्याख्यानेनैव वाक्यार्थं स्थापयति-एवं तर्हीति। अवश्यं च स्वरार्थ एव प्रत्ययविधिरेष्टव्यः। 'भावि कृत्यमासादि'त्यत्र भाविशब्दस्य भूतकालत्वे भवत्यासान्नादयो पर्यायत्वात्तुगपत्प्रयोगो न स्यात् ॥

क्रियासम। हिस्वयोरिति। सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाध प्राप्नोतीति स्थानिनिर्देशार्थं परस्मैपदात्मनेपदग्रहणं कर्तव्यमित्यर्थः। लकार कृदिति। तत्र स्थानिवद्भावाद्धिस्वयोरपि कृत्वे तदन्तस्य प्रातिपदिकत्वात्

उ ]भिप्रायेणेत्यर्थः। भाविशब्दस्येति। यदि यशाः भाविनया व्यवहृत तदासीदिति हि तदर्थ उच्येत न तु अतीतमासादिति। तथा सति पर्यायत्वापत्तिरेति भावः। भाष्ये-इत्येतत्तस्मिन्निति। इत्येन पदं तस्मिन् भवितेत्यर्थः। एवं प्रत्याख्याने सूत्रे 'वसन्ददर्श' इत्यादौ वर्तमानत्वनारोप्य शानः। तत्त्वं तु तत्समानकालत्वस्य दर्शने लभ्यं, शतृस्थले क्रिययोः समानकालत्वप्रतीतेः। यद्वा दर्शनकालिक वासस्य वर्तमानत्वाभिव्यक्त्यर्थं प्रत्ययः। एतेनैव 'ननु चोक्तमत्रैव वचनमेव चोदितं स्म' इति सहसूत्रस्यभाष्यप्रयोगोऽपपत्तिः। 'गोमत्तामा'दित्यत्र देवदत्तस्य विद्यमानत्वेऽपि गोमत्त्वस्याऽतीतत्वादुक्ते प्रत्ययः। तत्राऽर्थाद्वाक्यस्यातीतत्वप्रतीतिरेति दिक् ॥

क्रियासमभि। भाष्ये-हिस्वयोरिति। तद्विषयके इत्यर्थः। ननु परत्वात्तिङ्षु कृत्सु तेष्वेवैतौ भविष्यत इत्यत आह-सामान्येति। स्वस्य कृत्वेऽपि हिस्वयो

१ 'एवाविशेषं'। २ 'आत्मनेपदपरस्मैपदे'।

सुपां श्रवणं प्राप्नोति ॥ 'अव्यया'दिति सुब्लुग्भविष्यति ॥ कथमव्ययत्वम् ?॥ 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा ॥इह तर्हि 'स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति, 'तिङ्ङतिङ' इति निघातो न प्राप्नोति ॥२॥ समसङ्ख्यार्थं च ॥२॥ समसङ्ख्यार्थं च हिस्वयो. परस्मैपदात्मनेपदग्रहणं कर्तव्यम् । हिः परस्मैपदानां यथा स्यात् , स्व आत्मनेपदानाम् । व्यतिकरो मा भूदिति ॥२॥ न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य ॥*॥ न वा हिस्वयो परस्मैपदात्मनेपदग्रहणं कर्तव्यम् ॥ किं कारणम् ? ॥ 'तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य' । यदयं 'वा च तध्वमो'रित्याह तज्ज्ञापयत्याचार्य—'पदादेशौ हिस्वा'विति ॥*॥ तत्र पदादेशे पित्त्वादौ प्रतिषेध ॥*॥ तत्र पदादेशे पित्त्वादेश्च प्रतिषेधो वक्तव्य । पित्त्वस्य

प्र.]स्याद्युत्पत्तिर्भवतीत्यर्थ ।विभक्तीति।विभक्तिसंज्ञकहिस्वशब्दान्तयोर्हिस्वयोरव्ययत्वमित्यर्थ । व्यतिकरो मा भूदिति । यदि लकारस्यैव स्थाने हिस्वौ विधीयेयाता तदा 'लः परस्मैपद'मिति द्वयोरपि परस्मैपदसंज्ञा स्यात्, ततश्च द्वावपि परस्मैपदिभ्य एव स्यातामिति व्यतिकरः स्यादित्यर्थ । न वेति । यदि लस्यैव हिस्वौ स्याता तदा तध्वमोर्वेद्स्थानिनोरभावाद्वा च तध्वमोरिति स्थानित्वेनोपादानमनुपपन्नं स्यादिति तध्वमो. स्थानित्वेनोपादानाल्लोट्शब्देन लोडादेशाना परस्मैपदात्मनेपदानां स्थानित्वमवसीयत इत्यर्थ । पदादेशस्येति । पदशब्देन पदसंज्ञानिमित्तानि तिङ उच्यन्ते । अथ वा 'सर्वे सर्वपदादेशा' इति न्यायात्तिङन्तस्य हिस्वान्तादेशा प्रवृत्ते । पित्त्वस्येति । तिप्सिप्मिपां स्थाने विधीयमानो हि स्थानिवद्भावात्पित्स्यात्, ततश्च ङित्त्वाऽभावाल्लुनीहि लुनीहीतीत्वं न स्यात्।अनुदात्तत्वं च हे प्रसज्येत 'लुनीहि लुनीहि स भवा'नित्यादौ परस्य तु लुनीहिशब्दस्य 'तस्य

उ.]क्रियापदमित्यत आह—तत्रेति।अव्ययत्वमिति। तदन्तस्य विभक्त्यन्तप्रतिरूपकत्वादव्ययत्वमिति भाव । 'हिस्वयो'रित्यस्य हिस्वान्तयोरित्यर्थ । ननु 'व्यतिकरो नामाऽऽत्मनेपदिभ्योऽपि हि , परस्मैपदिभ्योऽपि स्व' इत्याकार , स चाऽनुपपन्न,आत्मनेपदसंज्ञाऽभावेन स्वदेशत्वेन परस्मैपदादेशत्वेन चात्मनेपदिभ्यो विधानाऽनुपपत्तेरत आह—यदीति । ननु तिङो हिस्वौ, न च तावन्मात्रं पदं, तदन्तस्य पदत्वादिति 'पदादेशस्ये'त्ययुक्तमत आह—पदशब्देनेति। निमित्तानीति। निमित्तशब्दो नित्यनपुंसक इति भाव । केचित्तु नामैकदेशग्रहणेन परस्मैपदात्मनेपदे 'पद'शब्देन भाष्ये उच्येते इत्याहु । स्थानिवद्भावादिति । न च 'गाङ्कुटादिभ्यो'ऽञ्णिन्ङि'दिति ङित्त्वं स्यात्परत्वादिति वाच्यम्, एतद्विषयेऽपि स्थानिवद्भावप्रवृत्त्याऽऽनिर्दिष्टपित्त्वमादायाऽपिदिति निषेधप्रवृत्ते , अन्यथा 'एतु''अस्तव'मित्यादौ

तावत्स्म-भरॉत्लुनीहि लुनीहीत्येवाय लुनाति।आट खल्वपि-'सोऽह लुनीहि लुनीहीत्येवै लुनानि ॥ पित्वस्य तावन्न वक्तव्य । पित्प्रतिपेधे योगविभाग करिष्यते।इह-['से³हिं '] सर्हिर्भवति । तत 'अपिच्च'।'अपिच्च भवति यावान् हिर्नोमे'ति । आटश्चापि [प्रतिपेधो⁴] न वक्तव्य । आटि कृते साङ्कस्यादेशो भविष्यति॥ इदमिह सम्प्रधार्यम्,-आट्क्रियतामादेश इति किमत्र कर्तव्यम् ?॥ परत्वादाडागम ॥ नित्य आदेश । कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ आडपि नित्य । कृतेप्यादेशे प्राप्नोत्यकृतेपि प्राप्नोति॥ अनित्य आट् । अन्यस्य कृतेऽप्यादेशे प्राप्नोत्यन्यस्याऽकृतेपि प्राप्नोति, शब्दान्तरस्य च प्राप्नुवन्विधि-रनि यो भवति ॥ आदेशोप्यनित्य । अन्यस्य कृते आटि प्राप्नोति, अन्यस्याऽकृते प्राप्नोति, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययो परत्वादाडागम । आटि कृते साङ्कस्यादेशो भविष्यति ॥ इद तर्हि-सोऽह⁵ भुङ्क्ष्व भुङ्क्ष्वेत्येवै भुनजै इति।'श्नसोरल्लोप' इत्यकारलोपो न प्राप्नोति॥ समसङ्ख्यार्थत्व चाप्यपरिहृतमेव ॥५॥ सिद्ध तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् ॥६॥ सिद्धमेतत् ॥ कथम् ? ॥ [ लोण्मध्यम पुरुषैकवचस्य क्रियासमभिहारे द्विर्वचनात्⁷। ]। लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ॥ केन विहितस्य क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते ? ॥

प्र ]परस्मात्तिङन्तमनुदात्तमे'त्यनुदात्तत्व भवति।याव।निति।योगविभागकरणसामर्थ्यादान न्तर्य नाऽपेक्ष्यत इत्यर्थ । भुङ्क्ष्वभुङ्क्ष्वेति।परत्वादाटि कृते उत्तमस्य पित्त्वे च स्वादेश स्थानिवद्भावात्पित्स्यादिति टित्वाऽभावात्तेषाऽप्रसङ्ग । समसङ्ख्यार्थत्वमिति । सर्वेषा तिङा द्वावपि पर्यायेण स्यातामित्यर्थ । एतदेवेति। 'वृद्धकुमारीवर'न्यायेन

उ ]गुणाऽनापत्तिरिति दिक्।स भवानित्यादावितिं।'आदिस'न्ते' इति शेष । तद्ध्वन यन्नाह-परस्येति । न'न्वनन्तरस्ये'ति न्यायाद्यावानित्यमङ्गतमत आह-योग-विभागेति । भाष्ये-'भुङ्क्ष्व'त्यस्याऽनुप्रयोगे 'भुनजै' इति पाठ । पित्वेन स्वादेश' इति पाठ कैयटे । सर्वेषा तिङामिति । तिङादेशत्वे ज्ञापितेऽप्ययम दोष इत्यर्थ । वृद्धकुमारीति। एतज्ज्ञाप्यवार्त्तिकस्वरसात् 'क्रियासमभिहार' इति वार्तिक लोडन्त विषयकमेव द्रष्टव्यम्,अन्यथा तस्येतो भिन्नवचनत्वे गौरव स्यादित्याहु । दोषा न्तरमप्याह भाष्ये-लोण्मध्यमेति । नन सर्वेषा स्थाने इत्यर्थेऽसम्भव परस्मैप-

१ 'रेव लुनामि' 'लुनानि' । २'पित्व'। ३ इद लुप्त स्यात् ।
४ इति क्वचित् ।५ इद क्वचित्कम् । ६ 'रयेव भुवे' । ७इद लुप्त स्यात् ।
८ 'पुरुषस्य' । ९ 'इत्यनेन न्यायेन' ।

एतदेव ज्ञापयत्याचार्यो—'भवति क्रियासमभिहारे लो'डिति —यदयं क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति ॥ कुतो नु खल्वेतत् ज्ञापकादयं लोड्भविष्यति न पुनरयं पूर्वसूत्रविशेषविहित स यदा क्रियासमभिहारे भवति तदा तस्य द्विर्वचनं भवतीति ?॥ लोण्मध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यादिमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्येते ॥ सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थं समसङ्ख्यार्थं चे'ति ॥ नैष दोषः ।

॥*॥ योगविभागात्सिद्धम् ॥*॥ [ योगविभागात्सिद्धमेतत् ] । योगविभागः करिष्यते । 'क्रियासमभिहारे [ लोट्' । क्रियासमभिहारे ] लोड्भवति । ततो [ 'लोटो हिस्वौ' ] । लोटो हिस्वौ भवतः । लोडित्येवानुवर्तते[3] लोटो यौ हिस्वाविति॥ कथं 'वा च तध्वमो'रिति?॥ 'वा च तध्वंभाविनो लोट' इत्येवमेतद्विज्ञायते ॥ [ क्रियासमभिहारे लोट् ] ।

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ३।४।४ ॥

किमर्थमिदमुच्यते[1] ॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् ।

---

प्र.]क्रियासमभिहारविषयो लोडनुमीयत इत्यर्थः । कुतो न्विति। ज्ञापकं विघटयति। विध्यादिविषयस्य लोटो विद्यमानत्वात् क्रियासमभिहारविषये तत्स्थानादेशयोर्द्विर्वचनार्थं ग्रहणं स्यादित्यर्थः । सर्वेषामिति ।'प्रसक्त'इति शेषः ।लोटो याविति। लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यत्वेन हिस्वौ भवत इत्यर्थः । तेन तदीयतदानीनिर्देशात्परस्मैपदात्मनेपदसंज्ञे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हिरात्मनेपदिभ्यस्तु स्वो भवति । हिशब्दस्य कर्ता वाच्यः, स्वशब्दस्य भावकर्मणी वाच्ये । निष्ठुत्व च भवतीति निष्ठुनिष्ठ इत्यादिकार्यं भवति । पुरुषैकवचनसंज्ञे तु सामर्थ्यात्र भवतः । यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्यात्, वचनान्तरेण तयोः सिद्धत्वात्। तध्वंभाविन इति । मुख्यार्थासंभवे गौणी कल्पनाश्रीयते, ततश्च तध्वभाविना लोटेन 'तध्व'शब्दात्मना उच्यत इति भावः । [ क्रियासमभिहारे ] ।

---

उ.]लादिग्रहणाऽभावाद् आह—प्रसक्त इति शेष इति। दोषान्तरमप्याह भाष्ये—सूत्रं चेति।लोडादेशाविति।'लो'डित्यस्य च लोडादित्यर्थः ।स्थानिवद्भावेन लोड्धर्मातिदेशस्य सिद्धे पुनर्लोडादेशाविति वचनं लोट्स्थानिकहिस्वयोर्निर्देशार्थमिति भावः । अतिदेशफलमाह—तेनेति ।। वचनान्तरेणेति । पुरुषादिसंज्ञा युष्मत्समानाधिकरणे एकत्वे च भाव्यम् । तत्र च ण्यर्थस्याविधिरिति भावः ॥

यथाविध्य । ननु क्रियाभ्यासार्थप्रतीतेः कथनमभिव्यक्तदार्थकत्वात आह—

---

1 इह कर्म स्यात् । 2 इदं प्रक्षिप्तम् । 3 'लोटो' । 4 'विषयस्य' ।

हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इदं तर्हि प्रयोजनं—'यथाविधीति वक्ष्यामी'ति ॥ एतदपि नास्ति प्रयोजनं, 'समुच्चये सामान्यवचनस्ये'ति वक्ष्यति । तत्राऽन्तरेण वचनं यथाविध्यनुप्रयोगो भविष्यति ॥ [ यथाविध्यनुप्रयोग पूर्वस्मिन् ] ।

समुच्चये सामान्यवचनस्य ॥ ३।४।५ ॥

किमर्थमिदमुच्यते ?॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इदं तर्हि प्रयोजनं,— सामान्यवचनस्येति वक्ष्यामी'ति॥एतदपि नास्ति प्रयोजनम्। सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति सामान्यवचनस्यैवानुप्रयोगो भविष्यति, लघुत्वात् ॥ [ समुच्चये सा ] ॥

प्र ] यथावि । हिस्वान्तमिति । सङ्ख्याकालपुरुषाणामनभिव्यक्तत्वात् । एतदपीति । 'समुच्चय एव धात्वन्तरस्याऽनुप्रयोग'इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यति । ननु 'समुच्चये सामान्यवचनस्यैवे'ति नियमः स्यात्, ततश्च धात्वन्तरस्यापि लोड्वृत्तिसमानार्थस्य क्रियासमभिहारेऽनुप्रयोगः स्यात् । नैतदस्ति । 'नद्योऽस्या आक्रनेश्वरिति प्रयोगो द्वितीयस्याश्च तृतीयस्याश्च भवती'ति न्यायाल्लोड्वृत्तिरेवानुप्रयोक्ष्यते।पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा, यतस्तदर्थो योगः स्यात् । [ यथाविध्यनुप्रयोग ] ।

समुच्चये।लघुत्वादिति।एतच्च लाघवं क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते न सर्वत्र, अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यान्न वनस्पत्यादिशब्दानाम् ।

उ ]सहार्थेति। न ह्येकस्या इति। एतेन 'समुच्चये एव सामान्यवचनस्ये'ति नियमेऽपि प्रकृते न पर्यायव्यावृत्तिरित्यपास्तम् । समुच्चयविषये सामान्यवचनस्येति वचनान्न्यायबाधेऽपि प्रकृतविषये तन्न्यायबाधे मानाऽभावाद्विनाऽपि वचनं सिद्धमिति भाष्याऽक्षरार्थः । नेष्टेति । अत एव 'लुनीहि लुनीहीत्येवाऽयं लुनाती'ति भाष्ये व्यवहितप्रयोगः सङ्गच्छते । तेनाऽनुप्रयोगशब्दार्थव्यभिचार उक्तः । पूर्वप्रयोगस्तु यदि नेष्टस्तदाऽनभिधानाद्वारणीयः । यद्दृष्ट एव स इत्याहुः । [ यथाविध्यनु ] ।

समुच्चये सा । भाष्ये—लघुत्वादिति । सर्वविशेषाऽनुगतैस्सामान्यवाचनाऽनुप्रयोगे सामान्यस्य सन्निहितविशेषपर्यवसानात्सर्वेषां कालाद्यभिव्यक्तौ सिद्धाया विशेषवाचकानामनुप्रयोगे गौरवादिति भावः । क्वचिदेवेति । अपर्यायविषये इत्यर्थः । एवं च तरुद्रुमवनस्पत्यादिषु पर्यायेषु लाघवगौरवाऽनादरान्न दोषः । इदं स्पष्टत्वं स्पष्टमेवेत्याहुः । [ समुच्चये सामान्यवचनस्य ] ।

१ 'मनभिव्यक्तपदार्थकं' ।

उपसंवादाशङ्कयोश्च ॥ ३।४।८ ॥

॥ ३ ॥ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिडर्थत्वात् ॥ * ॥ उपसंवादाशङ्कयो-र्वचनमनर्थकम् ॥ किं कारणम् ? ॥ 'लिडर्थत्वात्' । 'लिङर्थे लेट्'इत्येव सिद्धम् । क पुनर्लिडर्थः ? ॥ के चित्तावदाहुर्हेतुहेतुमतोर्लिङिति । अपर आहु:—वक्तव्य एवैतस्मिन्विशेषे लिङ् । प्रयुज्यते हि लोके-'यदि मे भवानिदं कुर्यादहमपि त इदं दद्या'मिति ॥ [ उपसंवादाशङ्कयोश्च ] ॥

तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैन्कध्यैन्शध्यै-शध्यैन्तवैतवेङ्तवेनः ॥ ३।४।९ ॥

तुमर्थे इत्युच्यते कस्तुमर्थं [नाम] ॥ भावे कर्तरि [तुमर्थः] ॥ यद्येवं नार्थस्तुमर्थ-ग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना सेसादयोऽपि भविष्यन्ति ॥ एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यो-

प्र ] उपसंवा।उपसंवादेति । नित्यार्थमिदमिति चेच्छन्दसि नित्योऽत्र लेड् दृश्यत इत्यत्र प्रमाणाऽभाव । व्यवस्थितविभाषया वा नित्यं लेड्भविष्यति । हेतुहेतुमतो-रिति । उपसंवाद —कर्तव्ये पणबन्ध, 'यदि मे भवानिदं कुर्यादहमपि ते इद दद्या'-मिति।तत्र करणं हेतुर्दानं हेतुमत्। आशङ्कापि कारणकार्योत्प्रेक्षेति हेतुहेतुमद्भाव । अपर इति । करणमवधिर्दानमवधिमदित्यवध्यवधिमद्भाव उपसंवादे प्रतीयते न तु हेतुहेतुमद्भाव । आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति भाव । लिङ्-प्रयोगसिद्धये अवश्यवक्तव्यो लिङ् , न तु सूत्रप्रत्याख्यानायैव । [ उपसंवादा ] ।

उ.] उपसंवादा । इद नित्यं लेड्विधानार्थं, तदाह—नित्यार्थमिति । पूर्वसूत्रे हि 'लिङर्थे लेट्'इत्यनाऽन्यतरस्याग्रहणमनुवर्तत इति भाव । व्यवस्थितेति । वेदे आपादरूपाऽभावात्सर्वविधीना छन्दसि वैकल्पिकत्वाददोष इत्यन्ये । करणं हेतु-रिति । तदुत्तरकालत्वाद्दानस्येति भाव । करणमवधिरिति । तद्वस्तुदानस्य तत्क-रणाऽभावेपि बहुशो दृष्टत्वात्तत्करणे सत्यपि बहुदानदानाऽभावाच्च व्यभिचारेणैतो यत्सति पूर्ववर्तित्वोत्तरवर्तित्वे नियमघटितकारणत्वं नैतच्छब्दतो भानं, किन्त्ववध्यवधिमद्भावस्यैवेति भाव । भाष्ये—इदमेवाशङ्काया अप्युदाहरणं । सम्भा-वनापरत्वेन तथात्वानस्य सम्भवासम्भावनेन चाऽत्राऽऽशङ्का, तदाह—आशङ्का-यामपीति । अकरणादकार्योत्प्रेक्षया क्वचित् दर्शनादिन्यदि बोध्यम् । लिङ्प्रयो-गेति । लोकेऽपीत्यर्थः । एवञ्चाऽनयोरपि लिङर्थत्वाल्लिङर्थे लेडित्येव सिद्धे इदं न कर्तव्यमिति भाव ॥ [ उपसंवादाशङ्कयोश्च ] ॥

तुमर्थे से । ननु कर्त्रादिपदाऽनुपादानात्कथं तेषु प्रवृत्तिरत आह—विषयेति।

१ इति क्वचित् । २ इद भाव· क्वचित् । ३ इदं वार्तिकमित्यन्ये । ४ 'कर्तव्य' ।

'स्यन्य कर्तुस्तुमुनोऽर्थ' इति ॥ क पुनरसौ ?॥ भाव ॥ कुतो नु खल्वे तद्भावे तुमुन्भविष्यति न पुनः कर्मादिषु कारकेष्विति । ज्ञापका[त्ताव]दय कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे आदिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे भविष्यति। तद्यथा गुप्तिज्किद्भ्यः सन् , यावादिभ्यः कन्निति। योऽसौ स्वार्थे भवन्भावे भविष्यति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'अव्ययकृतो भावे भवन्ती'त्येतन्न वक्तव्यं भवति । [ तुमर्थेसेसेन ] ॥

## उदीचां माङो व्यतीहारे ॥ ३।४।१९ ॥

किमर्थं मेङः सानुबन्धकस्याऽऽत्वभूतस्य ग्रहणं क्रियते नोदीचां मेङ इत्ये वोच्येत?॥तत्रायमप्यर्थ –उदीचां मेङ इति व्यतीहारग्रहणं न कर्तव्यं भवति॥ किं कारणम् ?॥ 'तद्विषयो हि सः' । व्यतीहारविषय एव हि मयति ॥ एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति तज्ज्ञापय त्याचार्यो 'नानुबन्धकृतमनेकान्तत्वं भवती'ति ॥ किमेतस्य ज्ञापने प्रयोज नम् ? ॥ तत्र'ऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वा'दि त्युक्तं तन्न वक्तव्यं भवति ॥ किमर्थं पुनरिदमुच्यते न समानकर्तृकयोः पूर्व काले इत्येव सिद्धम्?॥[॥ अपूर्वकालार्थं ॥]॥ अपूर्वकालार्थोऽयमारम्भ । पूर्वं ह्यसौ याचते पश्चादपमयते । [ उदीचां माङो व्यतीहारे ] ॥

प्र ] तुमर्थे सेस । कुतो न्विति । नियमात् कर्मादीनामाक्षेपात्तेष्वेव तुमुन् स्यादिति भावः । न वक्तव्यमिति । तुमर्थग्रहणानुवृत्त्या क्त्वादीनां भावे सिद्धत्वात् । साध्यमान स्वरूप भाव क्त्वादीनामर्थ । स एव[च]धात्वर्थ । घञादीनां तु धात्वर्थव्यति रिक्त सिद्धरूपो वाच्य । [ तुमर्थे सेसेनसे ] ।

उदीचाम् । नानुबन्धकृतमिति । एतच्च ज्ञापनमनुबन्धानामेकान्तत्वे उप युज्यते । अनेकान्तत्वे स्वत एव एतत्सिद्धेर्ज्ञापनप्रयोजनाऽभाव । पृथक्त्वनिर्देशो नाकारान्तत्वा'दित्येतद्दाप्प्रतिषेधग्रहणेनैव सवध्यते । दाधाघ्वदा'बित्यत्र दैपो- ऽपि पृथक् प्रतिषेधो वक्तव्य , अनाकारान्तत्वादात्त्वरूपत्वाऽभावादित्यर्थ । अपमयत

उ ]नन्वव्ययकृतो भाव इत्येतावता घञादिवन्निद्धे भावे तुमुनादय स्यु ,स्वार्थे विधाने तु साध्ये भावे इति विशेषोऽत आह–साध्यमानेति।वार्त्तिकेऽपि 'भाव'शब्देन साध्य भावस्यैव ग्रहणमिति भाव ।तुमर्थ इत्यनुवादाच्च तुमोऽपि भावे सिद्धिरिति बोध्यम्॥

उदीचाम्॥ नाऽनुबन्धेति। तेनाऽनुबन्धविशिष्टस्याप्यात्वमिति भाव । एका- न्तत्वे इति । अयमेव पक्षो न्याय्य इति 'तस्य लोप' इति सूत्रे भाष्ये ।

१ 'कारकेषु स्यादिति'।२ 'वार्त्तिकमिदमित्यन्ये । ३ 'व्यतिहार'। ४'दाप्प्रतिषेधेषु'। ५ 'तस्यलोप ' (१-३-९) इत्यत्रोक्तम् । ६ इद वार्त्तिक क्वचिन्न स्यादितिमन्ये ।

विज्ञानात् [ न सिध्यति ] ॥*॥ [ लोकविज्ञानात्सिध्यति ] । तद्यथा लोके 'ब्राह्मणाः पूर्वं आनीयन्ता'मित्युक्ते सर्वपूर्वं आनीयते, एवमिहापि सर्वपूर्वायाः क्रियायाः प्राप्नोति ॥*॥ अनन्त्यवचनात्तु सिद्धम् ॥*॥ [अनन्त्यवचनात्तुसिद्धम्] । समानकर्तृकयोरनन्त्यस्येति वक्तव्यम्॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'समानकर्तृकयोरिति बहुष्वप्राप्ति'रिति ॥ परिहृतमेतत् 'सिद्धं तु क्रियाप्रधानत्वा'दिति ॥ ननु चोक्तमेवमपि लोकविज्ञानान्न सिध्यती'ति ॥ नैष दोषः । सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यम्। स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति। एवं च कृत्वा प्रयोगो[ऽप्य]नियतो भवति स्नात्वा भुक्त्वा पीत्वा व्रजति। पीत्वा भुक्त्वा स्नात्वा व्रजतीति ॥*॥ व्यादाय स्वपितीत्युपसङ्ख्यानमपूर्वकालत्वात् ॥*॥ व्यादाय स्वपितीत्युपसङ्ख्यानं कर्तव्यम् ॥ किं पुनः कारणं न सिध्यति ?॥ 'अपूर्वकालत्वात्' । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति ॥ ॥*॥ न वा स्वप्नस्याऽवरकालत्वात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'स्वप्नस्याऽवरकालत्वात्' । अवरकालः स्वप्नः । अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति॥

विभाषाऽग्रेप्रथमपूर्वेषु ॥ ३।४।२४ ॥

किमयं प्राप्ते विभाषाऽऽहो स्विदप्राप्ते ? ॥ कथं च प्राप्ते कथं वाऽप्राप्ते?॥

प्र.]मानरे'लुके पङ्क्तौ य सर्वेषामादि स एवानीयते तथेहापि 'स्नात्वा भुक्त्वा पीत्वा व्रजती'ति स्नानस्यैव पूर्वकालत्वात्तेनैव प्रत्ययेन भाव्यं न तु भुजिपिबतिभ्यामित्यर्थः । सर्वेषामिति । आख्यातवाच्याया क्रियायाः विशेष्यत्वात्प्रधानत्वात्तां प्रति सर्वासां विशेषणत्वात्परस्परेणाऽसम्बन्धः । यथोक्तम्–'गुणानां च परार्थत्वादसम्बन्धः समत्वा'-दिति । अवरकाल इति । यद्यपि स्वप्नक्षणानां व्यादानात्पूर्वकालता तथापि व्यादानानन्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमित्यर्थः ॥

विभाषाग्रे । इहाऽग्रादयः साधनपौर्वकाल्यविषया गृह्यन्ते न तु क्रियापौर्व-काल्यविषयाः । तेषां हि क्रियापौर्वकाल्यविषयत्वे तैरेव पौर्वकाल्यस्योक्तत्वात् क्त्वाप्रत्ययो-

उ.]गुणानाञ्चेति । प्रधानक्रियाऽन्वये सम्भवति गुणभूतक्रियाऽन्वयोऽनुचित इति भावः । प्रत्येकानन्तर्यविवक्षायामिष्टाऽसिद्धिमप्याह भाष्ये–एवञ्च कृत्वेति । तेन प्रत्येकमाऽऽनन्तर्यविवक्षायां सा न स्यादित्याहुः । [ समानकर्तृकयोः ] ॥

विभाषाऽग्रे । साधनेति । साधनाऽन्तरजन्यस्वजातीयक्रियाऽपेक्षपौर्वकाल्य-विषया इत्यर्थः । न तु क्रियेति । एककर्तृकभिन्नक्रियानिरूपितपौर्वकाल्यविषया इत्यर्थः । साधनपौर्वकाल्यविषयाणामेव ग्रहणे प्रमाणमाह–तेषां हीति । पूर्वादीना-

१ इदं क्वचिन्न।भाष्यमित्यन्ये । २'पीत्वास्नात्वाभुक्त्वा' । ३'स्या पर'।४ 'वाऽप्राप्ते'।

आभीक्ष्ण्य इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते ॥ किञ्चातः ?॥ यदि प्राप्ते आभीक्ष्ण्येऽनिष्टा विभाषा प्राप्नोत्यन्यत्र चेष्टा न सिध्यति ॥ अथाऽप्राप्ते— ॥ ५॥ अमादिष्वप्राप्तविधौ समासप्रतिषेधः ॥ ५॥ अमादिष्वप्राप्तविधौ समासस्य प्रतिषेधो वक्तव्यः ॥ स तर्हि [प्रतिषेधो] वक्तव्यः ?॥ न वक्तव्यः ॥ * ॥ उक्तं वा ॥ ५॥

प्र ] गत्यर्थत्वानुपपत्त्या न भाष्यम्। न चैतत्सूत्रारम्भात्तेऽपि पौर्वकाल्ये तयोरुत्पत्तिरिति शक्यते वक्तुम्। अस्य शास्त्रपौर्वकाल्यविषयाऽप्राप्तपदस्य चरितार्थत्वात्। भाष्यकारेण च समानादिसूत्रे पूर्वशब्देन क्रियापौर्वकाल्ये उक्ते शास्त्रसम्बन्धानुपपत्ते प्रतिपादितत्वात्। यदि चात्र अमादयः क्रियापौर्वकाल्यविषया स्युस्तदा तदा तदप्राप्तविभाषेयं नित्यम् सन्देहः स्यादिति 'विभाषा प्राप्ते विभाषे'ति संशयो नैवोपपद्येत। यस्मादाभीक्ष्ण्ये णमुलोति णमुलो क्रियापौर्वकाल्य एव विधीयते। तथेदमादि विधीयते तदाऽऽभीक्ष्ण्यग्रहणानुवृत्त्याप्यप्राप्तविभाषेयं स्यात्। आभीक्ष्ण्ये द्विर्वचन मन्तरेण णमुल्भ्यां न योज्यते इति तद्योगाभावादपि तदभिधानं नोपपद्यते। तस्माच्छास्त्रपौर्वकाल्यविषया इमेऽमादय इति स्थितम्। यद्यपि देशविशेषवचनो-ऽग्रशब्दोऽस्ति—'अग्रेऽस्मै भुङ्क्ते' इति, तथापि पूर्वप्रथमशब्दसाहचर्यात्कालविशेषवृत्तिरेव गृह्यते। अनिष्टा विभाषेति। आभीक्ष्ण्ये नित्यौ णमुल्क्त्वौ इष्येते,—अग्रे भुक्त्वा भुक्त्वा व्रजतीति भावः। छन्दसस्तु नेष्यते,—अग्रे भुक्ते भुक्ते तेनो व्रजतीति भावः। अन्यत्र चेति। आभीक्ष्ण्यग्रहणानुवृत्तौ सत्यनाभीक्ष्ण्ये णमुल्न स्यादित्यर्थः। अप्राप्तविधेरिति। विभाषायामग्रादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वा निमित्तस्य चोपपदसमासविधानादुपपदसमासः प्रतिषेध्यः। अप्राप्तविभाषायां त्वमादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वं न तु प्रत्ययोत्पत्तौ, प्रत्ययोराभीक्ष्ण्ये णमुल्क्त्वेत्यनेना-ऽविशेषेण विहितत्वादिति भावः। न वक्तव्य इति। अप्राप्तविभाषा त्वनेन दर्शिता।

उ ] सत्यर्थः। सानान्तरमप्याह—भाष्यकारेण चेति। अग्रादिसूत्रभाष्यस्यार्थेऽप्युपाठ-र्थेनमेतेनाह—यदि चेति। नि सन्देहः। सन्देहाविष्यन्नेति सन्देहः। तदाऽ-नुपपत्तिं दर्शयति—यस्मादिति। तदाभीक्ष्ण्येति। उपपदार्थेन णमुल्लभ्यत इति भावः। ननु पौर्वकाल्येऽपि वस्त्वाभीक्ष्ण्ये णमुल्निपातनात्तयो प्राप्तिरत आह—आभी-क्ष्ण्येति। एवमप्यत्र द्विर्वचनेनैव तद्योगसम्भवेनाऽस्य तत्राप्यप्राप्तिरिति भावः। तयोर्विधान—तयोः प्रति। पूर्वप्रथमेति। यद्यपि पूर्वशब्दो देशवाच्यपि तथापि प्रथमशब्दस्य नियतकालिकत्वेन बोध्यम्। निमित्तस्य चेति। 'उपपद'मिति सप्तमीस्थं प्रत्ययनिमित्तस्योपपदत्व। न समासस्योपपदत्वमिति वस्तु तात्पर्यमिति भावः। भाष्ये—न वक्तव्य इत्युक्ते शङ्कते हेतुमाह—उक्तमेति। चो हेतौ। वा उक्तमे

1 'समासप्रतिषेधो'। 2 इदं क्वचित्। 'उक्तं च'। 3 'नोपपद्यते'।

च्व्यन्तस्य च मकारान्तार्थम् ॥*॥ च्व्यन्तस्य च मकारान्तत्वं निपात्यते । अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते॥ ॥ ॥ आ च तुमुनः समानाधिकरणे ॥ ॥ आ च तुमुनः प्रत्ययाः समानाधिकरणे वक्तव्याः ॥ केन ? ॥ अनुप्रयोगेण ॥ किं प्रयोजनम् ? ॥ 'स्वादुङ्कारं यवागूर्भुज्यते देवदत्तेने'ति देवदत्ते तृतीया यथा स्यात् ॥ किं [ च ] कारणं न स्यात् ? ॥ णमुलाभिहितः कर्तेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया ॥ यदि सत्यभिधाने चाऽनभिधाने च कुत

प्र ]विहितनिमित्तत्वाद्वोतो गुणवचनादिति ङीप् न भवतीत्यर्थः । च्व्यन्तस्य चेति। खमुन्यपि सर्वत्र मुम् न सिध्यति, 'अनव्ययस्ये'त्यधिकारादिति भावः । यद्येव मान्तत्वमेव निपात्यतां प्रत्ययस्तु खमुञेव विधेयः । नैतदस्ति । अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीप् स्यादेव । णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्य चोत्तरार्थो णमुल् विधेय इति लाघवादित्थं विहित । आ च तुमुन इति । पूर्वोक्तवाक्यार्थापेक्षया समुच्चयप्रतिपादनार्थश्चशब्दः । न केवलं स्वादुमि मान्तनिपातनमपि तु इदमपि वक्तव्यमित्यर्थः । शकधृषादिसूत्रविहितस्तुमुन् गृह्यते । अभिविधौ चाऽयमाकारः । णमुलेति । असत्यस्मिन्वचने कर्तरि कृदिति णमुला कर्तरि भाव्यमिति भावः । अनभिहिताश्रय इति । अनभिहित इति पर्युदास आश्रीयते न तु प्रसज्य

उ ]पाठेऽप्ययमेवाऽर्थः । यत्रैव पाठ इष्टा भावप्रत्ययमात्रविषयं निपातनं, तेन खायोगेऽपीति। तत्र। स्वादीं कृत्वा यवागूं भुङ्क्ते अस्वादुं स्वादुं कृत्वा भुङ्क्ते इति भाष्यप्रयोगविरोधात् । स्वादीं कृत्वेतिवत् स्वादुङ्कारमित्यत्राऽपीकारः स्यात्तदभावाय निपातनमित्यर्थो भाष्यस्य। विहितेति । उकारान्तत्वाऽभावादित्यर्थः ।अव्ययार्थमेवेति। अपूर्वविधानात्प्रतिप्रसवस्य लघुत्वादिति भावः । 'आ च तुमुन'इत्यत्र चकारं निमपेक्ष इत्यत आह–पूर्वोक्तेति । 'मान्तनिपातन'मित्यस्य 'वक्तव्य'मिति शेषः । अभिविधौ चेति । एवञ्च तुमुनन्तवातुसन्धाऽधिकारविहिता अव्ययकृत इत्यर्थः । तुमुन्त्वसामान्यात् 'तुमुन्ण्वुला'वित्यस्याऽपि ग्रहणं बोध्यम्। अत एवाऽग्रे 'भोक्तुमोदनं पच्यत' इत्युदाहरणं सङ्गच्छते । भाष्ये–समानाऽधिकरणे इति। स्वाऽन्वयिसमभिव्याहृतास्यातवाच्यकारके इत्यर्थः । [भाष्ये]–अनुप्रयोगशब्देनेदमेवोच्यते । समानाऽधिकरणे कारके वर्तमानाद्धातोरित्यर्थः । तेन तस्य धात्वर्थं प्रति विशेषणत्वमेवेति न बोधे वैषम्यम् । ननु सत्यन्यस्मिन्कारके कर्तैव कस्मादभिधीयतेऽत आह,–असत्यन्यस्मिन्निति । नन्वभिहिते प्रतिषेधात्कथमनभिहिताऽऽश्रयो विधि

१'मकारान्तत्वं यथा स्यात्'।२'स्वादुं अस्वादुं'।३'समानाधिकरणे भवन्तीति वक्तव्यं'।

श्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, यवाग्वा द्वितीया प्राप्नोति॥ किं कारणम् ? ॥ णमुलाऽनभिहितं कर्मेति ॥ यदि पुनरयं कर्मणि विज्ञायेत ? ॥ नैवं शक्यम्, इह हि 'स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त' इति यवाग्वां द्वितीया न स्यात् ॥ किं कारणम् ? ॥ णमुलाभिहितं कर्मेति ॥

ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति ॥ किं कारणम् ?॥ णमुलाऽनभिहितः कर्तेति॥ अथाऽनेन क्त्वायामर्थः 'पक्त्वौदनो भुज्यते देवदत्तेनेति' ? ॥ बाढमर्थः । देवदत्ते तृतीया यथा स्यात् ॥ किं च कारणं न स्यात् ? ॥ क्त्वयाऽभिहितः कर्तेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, ओदने द्वितीया प्राप्नोति ॥ किं कारणम् ?॥ क्त्वयानभिहितं कर्मेति ॥ यदि पुनरयं कर्मणि विज्ञायेत ?॥ नैवं शक्यम् । इह हि 'पक्त्वौदनं भुङ्क्ते देवदत्त' इत्योदने द्वितीया न स्यात् ॥ किं च कारणं न स्यात् ? ॥ क्त्वयाऽभिहितं कर्मेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रया विधिर्भविष्यति द्वितीया ॥ यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति ॥ किं कारणम् ? ॥ क्त्वयानभिहितः कर्तेति ॥ अथानेन तुमुन्यर्थः— भोक्तुमोदनः पच्यते देवदत्तेनेति ? ॥ बाढमर्थः । देवदत्ते तृतीया यथा स्यात्॥ किं च कारणं न स्यात् ? ॥ तुमुनाऽभिहितः कर्तेति ॥ ननु च पचिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीयोदने द्वितीया प्राप्नोति ॥ किं कारणम् ? ॥ तुमुनाऽनभिहितं कर्मेति कृत्वा ॥ यदि पुनरयं कर्मणि विज्ञायेत ? ॥ नैवं शक्यम् । इह हि भोक्तुमोदनं पचति देवदत्त इत्योदने द्वितीया न स्यात् ॥ किं च कारणं न स्यात् ? ॥ तुमुनाभिहितं कर्मेति ॥ ननु च पचिप्रत्ययेनानभिहितं कर्मेति

प्र.]प्रतिषेध इति भाव । यदि पुनरिति। 'अन्ययकृत कर्मणी'ति वचनं यदि क्रियत इति भाव । अथानेनेति । 'आ च तुमुन' इत्यनेन वचनेनेत्यर्थ । अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति । पक्त्वौदनमिति। भिन्नधात्वर्थविषयकर्म-

१ 'भवति' । २ किं कारणं न स्यात्' । ३ इह कश्चित्। ४'विधिर्भविष्यति'।

प्राप्नोति ॥ शृण्वन्त एवात्र विभक्तयः । तद्यथा एकेन गोष्पदप्रेणेति ॥

करणे हनः ॥ ३।४।३७ ॥

॥ ~ ॥ हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात् ॥ ~ ॥ हनः करणेऽनर्थकं वचनम् ॥ किं कारणम् ? ॥ 'हिंसार्थेभ्यो णमुल्विधानात्' । हिंसार्थेभ्यो णमुल्विधीयते तेनैव सिद्धम् ॥ ॥ अर्थवत्त्वहिंसार्थस्य विधानात् ॥ ~ ॥ अर्थवत्तु हन्तेर्णमुल्वचनम् ॥ कोऽर्थः ? ॥ 'अहिंसार्थस्य विधानात्' । अहिंसार्थाण्णमुल् यथा स्यात् ॥ अस्ति पुनरयं कश्चिद्धन्तिरहिंसार्थो यदर्थो विधिः स्यात् ? ॥ अस्तीत्याह ॥ पाण्युपघातं वेदिं हन्ति ॥ * ॥ नित्यसमासार्थं च ॥ ॥ नित्यसमासार्थश्च हिंसार्थादपि हन्तेरनेन विधिरपिनव्यः ॥ कथं पुनरिच्छतापि हिंसार्थाद्धन्तेरनेन विधिर्लभ्यः । अनेनाऽस्तु तेन वेति तेन स्याद्विप्रतिषेधेन ॥ हन्तेः पूर्वविप्रतिषेधो वार्त्तिकेनैव ज्ञापितः यदयं 'नित्यसमासार्थं च' इत्याह । तज्ज्ञापयत्याचार्यो 'हिंसार्थादपि हन्तेरनेन विधिर्भवती'ति ॥ [ करणे हनः ] ।

अधिकरणे बन्धः ॥ ३।४।४१ ॥

इह कस्मान्न भवति ग्रामे बन्धं इति ? ॥ एवं वक्ष्यामि 'अधिकरणे

प्र ]पुरतरामित्यादि च सिध्यति । 'गोष्पदप्र'मित्यत्र तु नास्ति स्वरभेदः । कप्रत्यये थाथादिस्वरेणान्तोदात्तत्वाण्णमुलि कृल्लोपे कृते पूर्वस्योदात्तभावोऽभावात् कृत्स्वरेणाऽन्तोदात्तत्वात् । [ वर्षप्रमाणे ऊलोपश्च ] ॥

करणे । बाहुल्येन हन्तिर्हिंसार्थ इत्यत इति मन्यते—हन इति । हन्तेः पूर्वविप्रतिषेध इति । यदत्र हिंसार्थान्निमित्त 'दण्डोपघातं गा कालयती'त्युदाहरणं नोपपद्यते । नैष दोषः । यदेक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेष्यभावमनुभवति सोऽस्य विषयः । 'कषादिषु यथाविध्यनुप्रयोग' इति वचनात्, अन्यत्र भिन्नार्थसम्बन्धे तु हिंसार्थादनित्यसमासेनैव णमुल् भवति ॥ [करणे हनः ]॥

उ ]समस्ते कृदुत्तरपदप्रकृतिस्वरः । कृत्स्वरो नास्ति । प्रथमस्वरेण प्रथमस्योदात्तत्व कृदुत्तरपदप्रकृतिस्वरेणान्तत्वं । [ वर्षप्रमाणे ऊलोपः ] ।

करणे ह । बाहुल्येनेति । अन्ये तु हन्तिर्हिंसार्थ एव पदकारौ हिंसायोग इत्याहुः । भाष्ये—पाण्युपघातमिति । पाणिना यदि हन्तीत्यर्थः । हिंसा च प्राणिविषयेति भावः । सामान्येति । यत्राऽनुप्रयोगो णमुलन्तो सामान्यविशेषभावेन ऽन्वयस्तत्रेदमेव, यत्र तु भेदसम्बन्धेनाऽन्वयस्तत्र तत्रैवेति भावः । हिंसार्थं नाहिने णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति वैकल्पिकः समासः ॥

अधिकरणे । ग्रामे बन्ध इतीति । यद्यपीदं वाऽसरूपन्यायेन घञ् सिद्ध,

१ इति क्वचित् । २ 'वचनमनर्थकं' । ३ 'हिंसार्थस्य हन्तेर्णमुल्' । ४ 'पद्ध' ।

बन्ध संज्ञायां' । तत्र –'कर्त्रोर्जीवपुरुषयोर्नशिवहो'रिति॥ कथमट्टालिकाबन्धं बद्धः चण्डालिकाबन्धं बद्धः ? ॥ 'उपमाने कर्मणि चे'त्येवं भविष्यति ॥

तिर्यच्यपवर्गे ॥ ३।४।६० ॥

अयुक्तोऽयं निर्देशः । तिरश्चीति भवितव्यम् ॥*॥ सौत्रो निर्देशः ॥*॥

नाधार्थप्रत्यये च्व्यर्थे ॥ ३।४।६२ ॥

अर्थग्रहणं किमर्थम्? ॥ 'नाधाप्रत्यये' इतीयत्युच्यमाने इहैव स्यात्,–द्विधाकृत्य । इह च न स्यात्,–द्वैधं कृत्वा । अर्थग्रहणे पुनः क्रियमाणे न दोषो भवति । नाधाप्रत्यये च सिद्धं भवति, यश्चान्यस्तेन समानार्थः ॥

अथ प्रत्ययग्रहणं किमर्थम् ?॥ इह मा भूत्, हिरुक्कृत्वा पृथक्कृत्वा॥

अन्वच्यानुलोम्ये ॥ ३।४।६४ ॥

अयुक्तोऽयं निर्देशः । अनूचीति भवितव्यम् । ॥[*॥सौत्रो निर्देशः ॥*]॥ सौत्रोऽयं निर्देशः ॥

प्र ] अधिक । ग्रामे बन्ध इति । पक्षुलि सति 'ग्रामबन्धं बद्ध' इति प्राप्नोति ॥

तिर्य । सौत्रो निर्देश इति । अनुक्तिप्रकारस्याविनाशप्रश्नस्तु न परिहारो, न हि प्रयोजनानुवर्ति प्रमाणम् । [ तिर्यच्यपवर्गे ] ॥

नाधा । द्वैधं कृत्वेति । यदा 'द्वित्र्योश्च धमु'ञित्यादेः प्रत्ययपक्षस्तदेतदर्थग्रहणस्य प्रयोजनम् । आदेशपक्षे तु स्थानिवद्भावाद्धाग्रहणेन ग्रहणात्सिध्यति । तथा च 'धमुञन्तात्स्वार्थे डदर्शन'मिति डप्रत्यय उदाहार्यो 'द्वैधकृत्वे'ति । 'ना'ऽर्थमप्यर्थग्रहणं कर्तव्यमन्यथा निरनुबन्धकपरिभाषया नाजो ग्रहणं न स्यात् ।

उ.] तथाऽप्यानर्थक्यपि प्राप्नोतीत्याह–ग्रामबन्धमित्यादिना। 'ग्रामे बद्ध' इति स्वपाठ, कर्मणि णमुल् विधेये भावविषयणमुलोऽप्राप्ते । यद्यप्यत्र साध्यो भाव, स च सिद्धस्वभावस्तथापि सिद्धत्वस्याऽविवक्षयेऽपि तस्याऽक्षते । भाष्ये–एवं वक्ष्यामीति । 'संज्ञाया'मित्यनेनैव नान्यत्प्रयोजनम् । कथमिति । संज्ञात्वाऽभावात्प्रश्न । उपमान इति । एतमनधिकरणविषयेऽपि तेनैव साध्यमिति भाव । [अधिकरणे बन्ध ] ॥

तिर्यच्य । तिर्यक्शब्दोऽऋजुवाची,अपवर्ग –समाप्तिस्तद्वाची च । न हीति । सौत्रत्वेन शास्त्राऽप्रवृत्तौ तु तद्विनाशप्रश्नो बीजमित्यन्यदादिति भाव ॥[तिर्यच्यप]।

नाधाऽर्थप्रत्यये । तथा चेति । तदा चेत्यर्थः । द्वैधकृत्येति । डाऽन्तेन समासे निर्भिद्येत । एतद्भाष्यस्वरसात्प्रत्ययपक्ष एव तत्र न्याय्य इति तत्त्वम् । नाऽर्थमपीति। निरनुबन्धकस्यादाय रूपाणां सिद्धेरनिष्टाऽभावाच्च तदर्थत्व चिन्त्यम्। 'हिरु'गिति। नाऽर्थत्वाप्राप्ति ॥ [ नाधार्थप्रत्यये ] ।

१ इदं भाष्यमित्यन्ये । २ 'द्विधा कृत्वा' । ३ 'नाधार्थे' । ४ इदं [illegible] [illegible] स्यात् ।

## कर्तरि कृत् ॥ ३।४।६७ ॥

किमर्थमिदमुच्यते ? ॥*॥ कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् ॥*॥ कर्तरि कृतो भवन्तीत्युच्यते॥[किं प्रयोजन ?॥ ] 'अनादेशे स्वार्थविज्ञानात्' । अनिर्दिष्टार्था प्रत्यया स्वार्थ भवन्ति। तद्यथा गुप्तिज्किद्भ्य सन्, यावादिभ्य कन्निति । एवमिमे प्रत्यया कृत स्वार्थे स्यु । स्वार्थे मा भूवन्कर्तरि यथा स्युरित्येवमर्थमिदमुच्यते ॥ नैतदस्ति प्रयोजन, यमिच्छति स्वार्थे आह त 'भावे घञ्भवती'ति॥ कर्मणि तर्हि मा भूवन्निति ॥ कर्मण्यपि यमिच्छत्याह त 'ध कर्मणि ष्ट्रन्'निति ॥ करणाधिकरणयोस्तर्हि मा भूवन्निति ॥ करणाधिकरणयोरपि यमिच्छत्याह त 'ल्युट्करणाधिकरणयोर्भवती'ति ॥ सम्प्रदानापादानयोस्तर्हि मा भूवन्निति ॥ सम्प्रदानापादानयोरपि यमिच्छत्याह त,–दाशगोघ्नौ सम्प्रदाने, भीमादयोऽपादाने इति ॥ य इदानीमतोऽन्य प्रत्यय शेष

---

प्र ] कर्तरि । किमर्थमिति । वक्ष्यमाणोऽभिप्राय । अनादेश इति । यत्र वचनेनार्थो नादिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति । यमिच्छतीति । असत्यस्मिन् सूत्रे 'घञ्' इत्येतावत्सूत्र कर्तव्यम् । धातोर्घञ्भवतीति । तत्रानिर्दिष्टत्वाद्भावे घञ् भविष्यति । तत 'पदरुजविशस्पृशो' इति द्वितीय सूत्र कर्तव्य,ततश्च भाव इति न कर्तव्यम् । क्रियमाणं तु नियमार्थं भविष्यति–'घञेव भावे नान्य' इति । ततो धात्वर्थाक्षिप्त कर्तरि कृद्भविष्यति नार्थ सूत्रेणेत्यर्थ । कर्मणीति । तस्यापि धात्वर्थेनाक्षेपादिति भाव । ध कर्मणि ष्ट्रन्निति। 'ष्ट्रन्नेव कर्मणि नान्य'इति नियमो विज्ञास्यते । यद्यपि कर्मणो नियमात्प्रत्ययो न नियत इति कारकान्तरेऽपि ष्ट्रन् प्राप्नोति । नैष दोष । एकमिद वाक्य 'ध कर्मणि ष्ट्रन्'निति । तत्र च कर्मणि विधीयमान कथ कारकान्तरे स्यात् । अथवा द्वितीयो नियम करिष्यते 'कर्मण्येव ष्ट्रन्'निति। य इदानीमिति।ननु 'कर्तरि भुव खिष्णुच्खुकञौ' 'कर्तरि चर्षिदेवतयो'-

---

उ ] कर्तरि कृत् । ननु 'भाव' इति सूत्र धातुमात्राद्यन्विषय भावस्वरूपमत आह–घञित्येतावदिति । भावपदोपादान विनाऽप्यन्यप्रत्ययस्य स्वार्थे विधानेनैव भावे सिद्धमिति भाव । तत पदरुजेति । कर्त्रर्थमिदम् । ष्ट्रन्प्राप्नोतीति । 'ध ष्ट्रन्'नित्येक वाक्यं विध्यर्थम्, तत्र 'कर्मणी'ति नियमार्थमिति भाव । परिहरति–एकमिद वाक्यमिति । कथ कारकान्तरे इति । एकवाक्येऽपि विशेषणोपादान नियमफलमित्यर्थ । नन्वेव विधित्वमेव स्यात्,विशेषणोपादानात् कर्मण्येवेत्येव स्यान्न तु ष्ट्रन्नेवेत्यरुचेराह—अथ वेति । आवृत्त्येति भाव । धात्वर्थाक्षिप्ते कर्मणि सिद्धेर्नियमार्थत्वमिति तात्पर्यम्। एवं करणाधिकरणयोरित्यत्राऽपि बोध्यम् । सार्वे

---

१ इद सुगम स्यात् । २ 'अनादिष्टार्था । ३ 'रेवमर्थं' ।

सोऽन्तरेण वचनं कर्तर्येव भविष्यति ॥ तदेव तर्हि प्रयोजनं,—'स्वार्थे मा भूव'न्निति ॥ ननु चोक्तं 'यमिच्छति स्वार्थे आह तं-भावे धम्मवती'ति ॥ अन्य स भावो बाह्य प्रकृत्यर्थात्। अनेनेदानीमाभ्यन्तरे भावे स्युः । तत्र मा भूवन्निति कर्तृग्रहणम् ॥ कः पुनरेतयोर्भावयोर्विशेषः ? ॥ उक्तो भावभेदो भाष्ये ॥ अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥ ३॥ तत्र ल्युडादिप्रतिषेधो नानावाक्यत्वात् ॥ ४॥ तत्र ल्युडादीनां प्रतिषेधो वक्तव्यः । ल्युडादयः कर्तरि मा भूवन्निति॥ ननु च करणे ल्युडादयो विधीयन्ते ते कर्तरि न भविष्यन्ति॥ तेन च करणे स्युरनेन च कर्तरि ॥ ननु चापवादत्वाल्ल्युडादयो बाधकाः स्युः ॥ न स्युः ॥ किं कारणम् ? ॥ 'नानावाक्यत्वात्' । नानावाक्यं तच्चेदं च । समानवाक्ये ह्यपवादैरुत्सर्गा बाध्यन्ते । नानावाक्ये त्वबाधनं न प्राप्नोति॥

प्र ]रिति कर्तुरपि नियमः प्राप्नोति।नैष दोषः ।उभयत्र करणनिवृत्त्या कर्तृश्रुतिर्विघ्यर्थैव न नियमार्था। उक्त इति।'सार्वधातुके य'गित्यत्र बाह्याभ्यन्तरयोर्भावयोर्विशेषो दर्शितः । ननु चेति । ल्युडादिषु करणादिरर्थो विशेषविहितत्वात्कर्तुर्बाधको भविष्यतीति भावः । नाना वाक्यत्वादिति । 'इह ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'त्यभिन्नकालवाक्ये वाक्य विशिष्टस्य दानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते । यदा तु कालभेदेन वाक्यद्वयमुच्चार्यते 'पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयता'मिति। अपराह्णे तु 'तक्रं कौण्डिन्याय दीयता'मिति। तदा तक्रेण दधि न बाध्यते । तथेहापि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो नास्ती-

उ ] धातुके यगित्यत्रेति । नन्वाभ्यन्तरेऽपि भावे न भविष्यन्ति, 'तुमर्थे से'इति तुमर्थग्रहणेनाभ्यन्तरे भावे सदादीनां नियमनादिति चेन्न, सति ह्यस्मिन्तत्र तुमर्थग्रहणेन 'भाव'ग्रहणम्, असति त्वस्मिन् विधित्वसम्पत्तये तुमर्थग्रहणेन कर्तुरेव ग्रहणं स्यात्, तुमुनोऽप्युत्सर्गन्यायेन कर्तर्येव प्रसक्तेरित्याशयः । ल: कर्मणि च भावे चेति । भावग्रहणे तु न नियमः शक्यो विज्ञातुम्, 'अकर्मकेभ्य' इति विशेषणाय तदावश्यकत्वात् । भाष्ये—ल्युडादय कर्तरीति । अत्र भाव,—'स्वस्वविधायकैर्विहितानामप्रत्ययानां पश्चाद्देनेनाऽर्थाऽऽदेशन'मिति पक्षे यथा तृजादीनामर्थ आदेश्यत एव ल्युडादीनामप्यादिश्यतेऽविशेषात् । ततश्च तेऽप्यनेन कर्तरि स्युः, तत्तद्वाक्ये उपादानात्करणादिषु चेति करणादिरर्थो विशेषविहितत्वादिति । कर्त्रंश उत्सर्गेऽप्यस्मिन् शास्त्रमात्रगम्यत्वेन विधित्वमिति भावः । भाष्ये—ननु चापवादत्वादिति । ल्युडादिरत्रोपात्तः करणादय इत्यर्थः । इहापि कालभेदेनेति । पूर्वं करणे विधानं, तदा तु न कर्त्रंशप्रसक्तिरिति बाधाऽभाव,

१ 'स्वार्थे यमिच्छति' । २ 'भावो' । ३ 'तेन कर्तरि' । ४ 'समाने वाक्ये चाऽप'।

वृद्धिः समावेशवचनं ज्ञापकमसमावेशस्य ॥*॥ [ ऋषिदेवतयोस्तु वृद्धि समावेशवचनं ज्ञापकमसमावेशस्य ] । यदयं 'कर्त्तरि चर्षिदेवतयो'रिति सिद्धे सति समावेशे समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यो–'न भवति समावेश' इति ॥ किमर्थं तर्हि कृत्येष्वेवकारः क्रियते ?॥*॥ एवकारकरणं च चार्थे ॥*॥ एवकारकरणं च चार्थे द्रष्टव्यम् । तयोर्भावकर्मणोः कृत्या भवन्ति, भव्यादीनां कर्त्तरि चेति ॥ किं प्रयोजनम् ?॥*॥ तत्र भव्याद्यर्थम् ॥*॥ [तत्र भव्याद्यर्थम्] । भव्यादिषु समावेशः सिद्धो भवति। गेयो माणवकः साम्नां, गेयानि माणवकेन सामानीति ॥ यत्तावदुच्यते 'ऋषिदेवतयोस्तु वृद्धि समावेशवचनं ज्ञापकमसमावेशस्ये'ति । नैतज्ज्ञापकसाध्यमपवादैरुत्सर्गा बाध्यन्त इति । एष एव न्यायो यदुतापवादैरुत्सर्गा बाध्येरन् ॥ ननु चोक्तम्–'नानावाक्यत्वाद्बाधनं न प्राप्नोती'ति ॥ न विदेशस्थमिति कृत्वाऽतो नाना वाक्यं भवति । विदेशस्थमपि सदेकवाक्यं भवति। तद्यथा–द्वितीयेऽध्याये लुगुच्यते, तस्य चतुर्थषष्ठयो-

---

प्र ]वृद्धिरिति जातौ बहुवचनम्। अत्र च यथासङ्ख्यं वार्त्तिककारस्याभिमतम्। अन्यथा हि चशब्दस्य ज्ञापकत्वं स्यात्, समावेशाऽभावात्। भव्याद्यर्थमिति। भव्यगेयादिसूत्रं न कर्त्तव्यं भवतीत्यर्थः । अन्ये तु कृत्यादयोऽनभिधानात्कर्त्तरि न भविष्यन्तीति भावः । इदानीं भाष्यकारो वार्त्तिकदूषणमाह–यत्तावदिति । न विदेशस्थमिति । न स्थलभेदान्नानावाक्यत्वं भवति । शास्त्रे विदेशस्थानामप्यनन्तरवाक्यानां नानासङ्ख्यावशादेकवाक्यत्वदर्शनात् । देशग्रहणं चाऽत्र कालस्योपलक्षणम् । शब्दतत्त्वस्य कालकृतत्वात् । चतुर्थषष्ठयोरिति । चतुर्थे 'गोत्रेऽलुगची'ति । षष्ठे तु

---

उ ]वेशेति। करणस्युपरक्षा समावेशज्ञापकस्यैवकारकरणादित्यर्थः । प्रत्ययस्यैकत्वादर्थभेदेऽपि द्वित्वाद्बहुवचनमनुपपन्नमत आह—जाताविति । जातिविवक्षायामेकवचनस्य, व्यक्तिविवक्षायां बहुवचनस्य साधनेन भाष्ये 'जात्याख्याया'मिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् । प्रयोगभेदेनाऽर्थबहुत्वाद्बहुवचनमिति वक्तुं युक्तम् । भाष्ये–वृद्धिरित्यस्य वृद्ध्यर्थकर्तृकरणयोरित्यर्थः । ननु तत्र ऋषौ करणे देवतायां कर्त्तरीत्यसमावेश एव नास्तीत्यत आह–अत्र च यथासङ्ख्यमिति । तत्सत्त्वे हि तथा सम्बन्धार्थमेव चस्य सार्थकत्वादसति प्रयोजने ज्ञापकत्वं न स्यादिति भावः । भाष्ये–समावेशवचनमिति । समावेशबोधकचकारवचनमित्यर्थः । सूत्रं नेति । भव्यादीनां कर्त्तरि चेति भाष्यस्वरसेन सूत्राऽभानस्यैव लाभादिति भावः । ननु तत्सूत्राऽभावे पूर्वोक्तरीत्या अन्येऽपि कृत्याः कर्त्तरि स्युरत आह–अन्ये त्विति । यत्ताव-दितीति। [illegible] शेषः । तथा च समानशास्त्रनाऽनिर्दिष्टार्थेषु चरि-

---

१ इदं भाष्यमित्यन्ये। पूर्वं भाष्यमिदं वार्त्तिकमित्यपरे। २ क्वचित्। ३ 'गेयानि'।

रलुगुच्यतेऽपवाद । यदप्युच्यते–'एवकारकरण च चार्थ' इति । कथं पुनरन्यो नामाऽन्यस्यार्थे वर्तते । कथमेवकारश्चार्थे वर्तते ?॥ स एष एवकार स्वार्थे वर्तते ॥ किं प्रयोजनम् ?॥ ज्ञापकार्थम् ॥ किं ज्ञाप्य ?॥ एतज्ज्ञापयत्याचार्य 'इत उत्तर समावेशो भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ 'तत्र भव्याद्यर्थम्' । भव्यादिषु समावेश सिद्धो भवति, गेयो माणवक साम्ना, गेयानि माणवकेन सामानीति ॥ यद्येतज्ज्ञाप्यते इहापि समावेश प्राप्नोति,–दाशगोघ्नौ सम्प्रदाने, भीमादयोऽपादान इति॥ अत्रापि सिद्ध भवति यदयमादिकर्मणि क्त कर्तरि चेति सिद्धे समावेशे समावेशार्थं चकार शास्ति तज्ज्ञापयत्याचार्य –'प्रागमुत समावेशो भवती'ति ॥

प्र ]'अलुगुत्तरपदे' इति।तदुक्त हरिणा–'अनेकाख्यातयोगेपि वाक्यन्यायापवादयो । एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥ नियम प्रतिषेधश्च विशेषश्च तथा सति । द्वितीये यो लुगाख्यातस्तच्छेषमलुक विदु ॥' इति ॥ कथमिति । एवकारस्य लौकिक प्रयोगे न क्वचिच्चाऽर्थवृत्तित्व दृश्यत इति भाव ।उत्तरमिति। कर्तरि कृ'दित्यस्मादुत्तरमित्यर्थ । तत्रेति । भव्यगेयादिसूत्रे 'वे'ति न कर्तव्य भवतीत्यर्थ । यदयमिति। 'आदिकर्मणि क्त कर्तरी'त्येतावदस्तु नाऽर्थश्चशब्देन। समावेशोऽप्येवकारज्ञापितो भविष्यति । कृतस्तु 'च'शब्दो ज्ञापयति–आदिकर्मणी-

उ ]नार्थस्याऽस्य निदेशार्थनिर्देशेन बाध इति भाव । यद्वा तेषामर्थांशे निराकाङ्क्षत्वात्स्वनुपस्थितिरेव । तृजादिविधौ तु तेषामर्थाऽऽकाङ्क्षासत्त्वात् 'कर्तरी'त्यस्याऽप्यर्थस्याकाङ्क्षासत्त्वेनोभयाऽऽकाङ्क्षया तत्रैवाऽन्वयो, न ल्युडादिषु, साक्षादर्थनिर्देशेन तेषा निराकाङ्क्षत्वादिति तत्त्वम्। अनेकाख्यातयोग –'यण् भवति' 'दीर्घो भवती'त्यादिरूप । न्याय –उत्सर्ग । 'विधिशेष' इति पाठे नियमप्रतिषेधौ विधिशेषावेव न तु स्वतन्त्रावित्यर्थ । तदुदाहरणमाह–द्वितीये इति। विशेषश्च तथे'ति पाठे विशेषोऽपवाद । एतत्रितय विध्येकवाक्यतापन्नमित्यर्थ ।न कर्तव्य भवतीति । न च चार्थे वृत्तिमाश्रित्य सूत्रमेव न कार्यम् , अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति प्रागुक्त युक्तम्, अनभिधानेन प्रत्याख्यानस्याऽयुक्तत्वादिति यातु ।एवच स्वार्थे कृता व्यावृत्तये सूत्र सार्थं, ल्युडादिषु च करणरूपार्थेन बाधात्र दोष । तत्र 'निमित्तपूर्वत्वस्याऽर्थं बोधक प्रत्ययमितरार्थेभ्यो व्यावर्तयति, किं वा तत्राऽर्थे लोके प्रयुज्यमानस्यैव कृदादिशब्दति प्रतिपादयती'ति सन्दिह्य,–तत्र द्वितीयस्य सिद्धान्तत्वकरणेनाऽपि'ल्युडादीनां तत्र प्रतिषेध'इति वार्तिक प्रत्याख्यातुमुपक्रमते भाष्ये–किम्पुनरिति । कृत्प्रत्ययो नियम्यत इति । एतावानेव सूत्रव्यापार, 'कर्तार भुवन्

१ 'विदुर्' । २ 'ज्ञाप्यते' । ३ 'समावेशं शास्ति' ।

नियमे पुन सति परिगणिताभ्य प्रकृतिभ्य पर क्तो नियोगत कर्तारमाह न चेमास्तत्र परिगण्यन्ते प्रकृतय ॥*॥विभक्तादिषु चाऽप्राप्ति प्रकृते प्रत्ययपर वचनात् ॥*॥ विभक्तादिषु च प्रत्ययनियमस्याऽप्राप्ति ॥ किं कारणम् ? ॥ प्रकृते प्रत्ययपरवचनात्'। परिगणिताभ्य प्रकृतिभ्य पर क्त स्वभावत कर्तारमाह, न चेमास्तत्र परिगण्यन्ते ॥ न तर्हीदानीमय साधुर्भवति ? ॥ भवति साधुर्न तु कर्तरि॥कथ तर्हीदानीमत्र कर्तृत्व गम्यते?॥ अकारो मत्व र्थीय । विभक्तमेषामस्ति विभक्ता । पीतमेषामस्ति पाता इति ॥ ॥[*॥उत्तरपदलोपो वा ॥*]॥ अथ वोत्तरपदलोपोऽत्र द्रष्टव्य । विभक्तधना विभक्ता । पीतोदका पाता इति ॥ [ कर्त्तरि कृत् ] ॥

---

प ]ति दोषोपन्यास ।प्रकारान्तरेण साधुत्व दर्शयिष्यते। प्रत्ययनियमवादिनस्त्वय मदोष। गत्यर्थाकर्मकेत्यत्र परिगणिताभ्य प्रकृतिभ्य पर क्त कर्तरि नियुज्यते। नहि तत्र भक्तिपिबती परिगणिताविन्यर्थ। सज्ञानियमवाद्याह–विभक्तादिषु चेति। ममापि गत्यर्थाकर्मकेति सूत्र न दण्डवारितम्।तत्र गत्यर्थादिभ्य एव क्त स्वभा वत कर्तरि भवन् कृत्प्रत्ययसज्ञो भवतीति भक्तिपिबतिभ्या क्तस्य कर्तरि साधुत्वा ऽप्रसङ्ग । प्रकृतेरिति । गत्यादिकाया इत्यर्थ। प्रत्ययपरवचनादिति। क्तप्रत्ययस्य कर्तरि वर्तमानस्य साधुत्वेन प्रतिपादनादित्यर्थ । तदेव स्पष्टयति-स्वभावतस्तेषु तेष्वर्थेषु वर्तमानस्य प्रत्ययसज्ञाविधानद्वारेण साधुत्वमन्वाख्यायते। इदानी भाष्य कार प्रश्नपूर्वक प्रयोगसमर्थन करोति–न तर्हीति । न तु कर्तरीति । 'तयो रेवे'ति वचनात्कर्मण्येव साधुरित्यर्थ ।विभक्तमिति। धनमिति भाव। पातमिति। उदकमित्यर्थ । आकृतिगणत्वादर्शआदि । अथ वेति। गम्यमानार्थस्य शब्दस्या ऽप्रयोग एव लोपोऽभिमत । विभक्ता भ्रातर' इत्यत्र च धनस्य यद्विभक्तत्व तद्भ्रातृपूपचर्यते । 'पीता गाव' इत्यत्राप्युदकस्य पीतत्व गोष्वारोप्यते । [कर्त्तरि]॥

---

उ ] सिध्यतीत्यर्थ इति भाव। असाधुत्व बोधयन्नाह–क्रियाकारकसम्बन्धेनेति। धन कर्मकविभागकर्त्तार इत्यर्थ इति भाव।प्रकारान्तरेण–मत्वर्थयविधित्वेन बोध इत्य र्थ । क्त कर्त्तरि नियुज्यत इति। शास्त्रेण बोध्यत इत्यर्थ । भाष्य प्रकृते प्रत्ययति। प्रकृतिविशेषणत्वात् परस्य क्तप्रत्ययस्य कर्त्तरि साधुत्ववचनादित्यर्थ। तदाह–क्तप्रत्ययस्येति । 'भवति साधुर्न तु कर्त्तरी'ति भाष्याशयेन कर्मणि स्वरसतो विधत्त तत्रेति स्पष्टयन् इत्याशयेनाह–धनमिति भाव इति। एतेन इदम्भाष्य सकर्मकेभ्योऽपि भावे क्ते साधुत्वमुपपद्यत इत्युक्त परास्तम्। उत्तरपद लोपविधायकवचनाऽभावादाह–गम्यमानेति। [ कर्त्तरि कृत् ] ॥

---

१ 'तर्हि कथ'। २ इद वार्तिकमित्यन्ये। ३ 'मत्सीति'। ४ इद उत स्यात्।

**लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ३।४।६९ ॥**

किमर्थमिदमुच्यते ? ॥ ल एतेषु साधनेषु यथा स्यात्,-कर्त्तरि च[1], कर्मणि च, भावे चाकर्मकेभ्य इति॥ नैतदस्ति प्रयोजनम् । भावकर्मणोरात्मनेपदं विधीयते शेषात्कर्त्तरि परस्मैपदम्, एतावांश्च लो यदुत परस्मैपदमात्मनेपदं च । स चायमेव विहितः ॥ अत उत्तरं पठति ॥ ॥ लग्रहणं सकर्मकनिवृत्त्यर्थम् ॥ १॥ लग्रहणं क्रियते॥ [किं प्रयोजनं ?] ॥ सकर्मकनिवृत्त्यर्थं । सकर्मकाणां भावे लो मा भूदिति॥ यदि पुनस्तत्रैवाऽकर्मकग्रहणं क्रियेत ?॥

प्र ] ® कर्मणि । लचित इति प्रथमां व्याचक्षते । अपरे षष्ठीं, लस्य य आदेश इति । तत्र लकारो द्विविधः तिङ्भावी अतिङ्भावीति । तत्र तिङ्भाविनः कृत्संज्ञानिषेधात् 'कर्त्तरि कृ'दित्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति । अतिङ्भाविनस्तु 'कर्त्तरि कृ'दिति वचनात्कर्त्तर्येव प्राप्नोतीति वचनम् । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । ल एतेष्विति । लकार इत्यर्थः । अथ वा लस्य य आदेश इति भावः । भावकर्मणोरिति । अनन्तरस्मिन् सूत्रे भावकर्मणोरात्मनेपदविधानात् शेषात्कर्त्तरीति च परस्मैपदविधानाल्लकारस्य भावकर्मकर्त्तारोऽर्था अनुमास्यन्ते । लकारस्य प्रयोगासमवायाद्वा लादेशानामेवैतेऽर्था भविष्यन्तीत्यर्थः । एतावानिति । नन्वाम्विषयेऽपि लो विद्यते। नैष दोषः । तस्य लुगपहारात्, अनुप्रयोगलकारेण भावादीनां प्रतिपादनात् । लग्रहणमिति । यदीदं नारभ्येत तदा यथा भावे विधीयमाना घञादयः सकर्मकेभ्यो भवन्ति-'ओदनस्य पाक' 'सुभ्रस्य कृति'रिति तथा भावकर्मणोरित्यनेन भावे आत्मनेपदं सकर्मकेभ्योऽपि स्यात् । ततश्च 'पच्यते यवागू देवदत्तेने'त्यपि स्यात् । यदि पुनरिति। 'भावकर्म

उ ] ® कर्मणि च । केचिदिति । उच्चारणार्थाकारेण सूत्रे लस्येति षष्ठ्येकवचनवत् प्रथमैकवचनं जानते । एतावांश्च लो यदुत परस्मैपदमिति भाष्ये परस्मैपदादिशब्दस्तद्विषये लक्षणेति तद्भावः । अपरे इति । लस्य प्रयोगाऽसमवायित्वात्तस्याऽर्थकथनं व्यर्थं, भाष्ये लक्षणाप्रसङ्गश्चेति तद्भावः ।'वर्तमाने ल'डित्यादौ प्रतिपादितयोगस्य यथा लकारस्य तथाऽत्रापि भविष्यतीत्याचलनमेव युक्तम्, अन्येऽपि वाक्यैकदेशन्यायेन प्रयोगस्य लक्षणया समन्वात् । ननु भावादिष्वात्मनेपदादिविधानेऽपि ला विभागनमन आह-अनन्तरेत्यादि । भावकर्मणोरात्मनेपदेति । भावकर्मणोरेवाऽऽत्मनेपदमिति तदर्थः । आदेशानामेवेति । लस्य स्थाने भावकर्मणोरात्मनेपदमित्यर्थं इति भावः । तस्य लुकेति । एतद्विषयनिष्कर्षमग्रे वक्ष्यति । अनुप्रयोगेति । एतच्च निरर्थक एव, सङ्ख्याप्रतिपत्तये

१ च क्वचित् । २ 'लकारो यदुत' । ३ इदं क्वचित् । ४ 'क्रियते' ।

तत्तत्राऽकर्मकग्रहणं कर्तव्यम्॥ ननु चेहापि 'क्रियते भावे चाकर्मकेभ्य' इति॥ परार्थमेतद्भविष्यति–'तयोरेव कृत्यक्तखलर्थाः', भावे चाकर्मकेभ्य इति॥ यावदिह लग्रहणं तावत्तत्राऽकर्मकग्रहणम्। इह वा लग्रहणं क्रियेत तत्र वाऽकर्मकग्रहणं को न्वत्र विशेषः[1]॥ अयमस्ति विशेषः,–इह लग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति। तत्र पुनरकर्मकग्रहणे क्रियमाणे आनः कर्तरि न प्राप्नोति॥ तत्रा-प्यकर्मकग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति॥ कथम्[2]॥ भावकर्मणोरि-त्यतो यदन्यदात्मनेपदानुक्रमणं तत्सर्वं कर्त्रर्थम् ॥३॥ विप्रतिषेधाद्वाऽऽनः कर्तरि ॥४॥ विप्रतिषेधाद्वाऽऽनः कर्तरि भविष्यति । तत्र भावकर्मणोरित्येतदस्तु

प्र.]णोरकर्मका'दित्येव करिष्यते, सामर्थ्याच्चाकर्मकग्रहणं भावार्थं भविष्यति। अकर्म-काणां कर्माऽसम्भवात्। सूत्रारम्भवाद्याह–तत्रेति। सूत्रप्रत्याख्यानवाद्याह–ननु चेति। 'क्रियते'ति शेषः । आरम्भवाद्याह–परार्थमिति । सूत्रप्रत्याख्यानवाद्याह–याव-दिहेति । कर्मणि च भावे चाकर्मकेभ्य इत्येतदत्र प्रदेशे द्वाभ्यामपि वक्तव्यम् । त्वया तु 'ल' इत्येतत्पदमत्र कर्तव्यम् , मया 'भावकर्मणो'रित्यत्र अकर्मकग्रहण-मिति पदेन पदस्य साम्यम् । मात्रालाघवं त्वत्र न विवक्षितम् । आरम्भवाद्याह–अयमस्तीति । आन इति । आत्मनेपदसंज्ञत्वाद्भावकर्मणोरिति वचनाद्भावकर्मा-भिधायित्वमेव स्यात् न तु कर्तृवाचित्वमिति 'शयान' इत्यादौ कर्तर्यानो न स्यात् । सूत्रारम्भे तु कर्तर्यप्यानः सिध्यतीत्यर्थः । प्रत्याख्यानवाद्याह–तत्रापीति । 'अनु-दात्तङित' इत्यादिभिः सूत्रैः कर्त्रात्मनेपदविधानार्थैरानः कर्तरि 'शयान' इत्यादौ भविष्यतीत्यर्थः । विप्रतिषेधाद्वेति । 'भावकर्मणो'रित्यस्य तदपवादः, यत्र कृ-त्स्नाया अभावात्कर्तरि ङित्त्वेन न प्रवर्तते 'आस्यते पच्यते' इति । 'कर्तरि

उ.]तदनुसरणस्याऽऽवश्यकत्वादिति भावः । स चाऽयमेवविहित इति । सोऽयं लकार एवं 'ल कर्मणि चे'ति सूत्रकारेण यथा विहितस्तथा विदित इत्यर्थः । अतोऽपि 'ल' इत्यस्य षष्ठ्यन्तत्वपक्षोऽयुक्तः । तथा सति 'ते चेत्' इति वदेत् । भाष्ये–इत्यपि स्यादिति । लकारेण कर्तृकर्मणोरनभिधानादिति भावः । इत्येत-दत्र प्रदेश इति । तयोरेवेति सूत्रार्थमित्यर्थः । पदेनेति । पदमनुदात्तङितके सूत्रे भगवान्कात्यायनो नाद्रियत इति भावः । वस्तुतस्त्वत्र लग्रहणे कर्मभावाभ्यां कर्तृ-त्वाऽर्थोऽनाधाय 'च'द्वयं कार्यम्, उत्तरसूत्रे च 'तयो'रिति वाच्यम् । ननु कर्मणि कृत्यक्तखलर्थाः भावेऽकर्मकेभ्य इत्येवेति मात्रालाघवमत्यल्पमेवेति बोध्यम् । भाष्ये सूत्राऽनुसारेण 'च'घटितो न्यासः, कैयटे च तथैव न्यासो दर्शितः ।

१ 'एवमपि यावदिह' । २ 'क्रियते' । ३ 'तोऽन्यद्यदा' ।
४ 'सर्वं तत्' । ५ भाष्यमिदमित्यन्ये ।

कर्तरि कृदिति,–कर्तरि कृदित्येतद्भविष्यति विप्रतिषेधेन ॥१॥ सर्वप्रसङ्गस्तु ॥*॥ सर्वेभ्यस्तु धातुभ्य आन कर्तरि प्राप्नोति । परस्मैपदिभ्योपि ॥ नैष दोष । अनुदात्तङित इत्येष योगो नियमार्थो भविष्यति॥ यद्येष योगो नियमार्थो विधिर्न प्रकल्पते । आस्ते शेते इति ॥ अथ विध्यर्थ ,आनस्य नियमो न प्राप्नोति । आसीन शयान[इति] । तथा नेर्विश इत्येवमाद्यनुक्रमण यदि नियमार्थं, विधिर्न प्रकल्पते । अथ विध्यर्थमानस्य नियमो न प्राप्नोति ॥ अस्तु तर्हि नियमार्थम् ॥ ननु चोक्त 'विधिर्न प्रकल्पते' इति ॥ विधिश्च प्रक्लृप्त ॥ कथम् ? ॥ 'भावकर्मणो'रित्यत्राऽनुदात्तङित इत्येतदनुवर्तिष्यते ॥ यद्यनुवर्तते एवमप्यनुदात्तङित एव भावकर्मणोरात्मनेपद प्राप्नोति ॥ एव तर्हि योगविभाग करिष्यते । 'अनुदात्तङित [ आत्मनेपदम्' । अनुदात्तङित ] आत्मनेपद भवति । ततो 'भावकर्मणो ' । तत 'कर्तरि' । कर्तरि चात्मनेपद भवति । 'अनुदात्तङित'इत्येव । [आस्ते शेते]। 'भावकर्मणोरिति निवृत्तम् । तत 'कर्मव्यतिहारे' । 'कर्तरी'त्येवानुवर्तते । 'अनुदात्तङित' इत्यपि निवृत्तम् ॥ यदप्युच्यते 'तथा नेर्विश इत्येवमाद्यनुक्रमण यदि नियमार्थं विधिर्न प्रकल्पते, अथ विध्यर्थमानस्य नियमो न प्राप्नोती'ति । अस्तु

प्र ]कृ'इत्यस्य तृजादिगोचरता ।आनस्य तूभयप्रसङ्गे कर्तरि कृदिति परत्वात्कर्तर्यर्थो भविष्यतीत्यर्थ । आरम्भवाद्याह–सर्वप्रसङ्ग इति । परस्मैपदिभ्यो धातुभ्य आन कर्तरि प्राप्नोतीत्यर्थ । प्रत्याख्यानवाद्याह–नैष दोष इति । 'अनुदात्तङित आत्मनेपद नान्यस्मा'दिति नियमादान कर्तरि परस्मैपदिभ्यो न भविष्यतीत्यर्थ । आरम्भवाद्याह-यदीति । भावकर्मणोरात्मनेपदविधानात्तयोऽनुदात्तङितो न प्राप्नुवन्ति । 'अनुदात्तङित' इत्यनेन आन एव धातुविशेषे नियम्यत इत्यपरत्वादेतस्य वाक्यस्य विधिनियमार्थत्वेन सूत्रेण न प्रकल्प्यते इत्यर्थ । प्रत्याख्यानवाद्याह–अस्तु तर्हीति । भावकर्मणोरित्यत्रेति । 'अनुदात्त[ङि]त आत्मनेपद'मित्यनेनैकेन वाक्येन आनस्य नियम क्रियते । 'भावकर्मणो'रित्यत्र त्वनुवृत्त्या द्वितीयेन वाक्येन तदा विधि क्रियत इत्यर्थ । एवमपीति । भावकर्मणो'रित्यत्रानुदात्तङित इत्यनेनैव

उ.]भृ आदय इति । तदात्मनेपदादिसंज्ञाऽभावादिति भाव ।परत्वात्कर्त्रर्थ इति। इद चार्धशाब्दवादे । एव हि भावकर्मणोर्न स्यादिति त्वप्रे भाष्य एव स्पष्टम् । सर्वप्रसङ्ग इति । विप्रतिषेधवादे दूषणम् । तदोऽनुदात्तेति । कर्तरी'ति शेष । एवं 'नेर्विश' इत्यादीना नियमत्वे कर्तरि तङ् न स्यात्, विधित्वे चैवमदस्यान स्यादित्यादि बोध्यम् । तद्वा विधिरिति । 'कर्तरी'ति शेष । भावकर्मणोरिति ।

१ इति क्वचित्। २ इद तुम स्यान् । ३ 'नियम.' ।

लस्य ॥ ३।४।७७ ॥

॥ * ॥ लादेशे सर्वप्रसङ्गोऽविशेषात् ॥ * ॥ लादेशे सर्वप्रसङ्ग । सर्वस्य लकारस्यादेश प्राप्नोति । अस्यापि प्राप्नोति,—लुनाति लभते॥ किं कारणम्?॥ 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयते एवजातीयस्य लकारस्यादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्ग ॥ ॥ ॥ अर्थवद्ग्रहणात्सिद्धम् ॥ * ॥ अर्थवतो लकारस्य ग्रहणम् । न चैषोऽर्थवान् ॥ * ॥ अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु ॥ ॥ अर्थवद्ग्रहणात्सिद्धमिति चेत्तन्न ॥ किं कारणम्?॥ वर्णग्रहणमिदम् । न चैतद्वर्णग्रहणेषु भवत्यर्थवद्ग्रहणे नानर्थकस्येति ॥ * ॥ तस्माद्विशिष्टग्रहणम् ॥ * ॥ तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम् ॥ न कर्तव्यम् । 'धातो'रिति वर्तते ॥ एवमपि शाला माला मल्ल इत्यत्रापि प्राप्नोति । ॥ * ॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ * ॥ एवमपि नन्दन अत्रापि प्राप्नोति॥ इत्सञ्ज्ञाऽत्र बाधिका भविष्यति॥इहापि तर्हि बाधेत-पचति पठतीति ॥ इत्कार्याऽभावादत्रेत्सञ्ज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं 'लिति प्रत्ययात्पूर्वमुदात्त भवती'त्येष स्वरो यथा स्यात् ॥ 'लिती'त्युच्यते न चाऽत्र

प्र ] लित प्रयोगेऽश्रवणेऽपि लुरोर्थवत्त्वम्, अनुप्रयोगात्तु तदर्थाभिधानव्यक्तिरित्यदोष ।

लस्य । अर्थवद्ग्रहणादिति । लदादय एव भावाद्यर्थाभिधायिन स्थानित्वेन गृह्यन्त इत्यर्थ । न वर्णग्रहणेष्विति । लस्येत्यत्र लकारेऽकार उच्चारणार्थ । ततश्च वर्णमात्रस्याऽत्र निर्देश ।वर्णनिर्देशेषु च विद्यमानाप्यर्थवत्ता शब्देन नाश्रिता, वर्णरूपमात्रस्याश्रयणात् । तथा च यस्येति लोपोनर्थकस्यापि भवति—दैवदत्तिरिति। तस्मादिति।भावाद्यर्थाभिधायिनो लस्येति वक्तव्यमित्यर्थ । धातोरिति वर्तत इति । लितिविशेषण च धातुग्रहणमाश्रीयत इत्यभिचिऽभ्यत इत्यत्रापि न भवति । शालेति । शाकमनलिभ्य औणादिको लप्रत्यय । इत्सञ्ज्ञात्रेति । तस्या च तस्या लोपे [च] कृते स्थान्यभावाद्बाधित्वाच्च स्थानिवद्भावाऽभावादादेशो न भविष्यती-त्यर्थ । इहापीति । तत्श्चानाष्यादेशा न स्युरित्यर्थ । लितीत्युच्यत इति ।

उ ] सूत्रयतीत्यत्र सकर्मकनिवृत्त्यर्थमिति भाष्याच्च।प्रत्ययान्तत्वे ल इति ग्रहणमिति स्यात् । सम्मर्गेऽपि विभक्तिलोपेऽकारश्रवणाऽनापत्ति, अलोपे विसर्गश्रवणापत्ति । अन्यदपि प्रयत्नान्तरसाधकमग्रुक्तम् ॥ [ ल कर्मणि च ] ॥

लस्य । भावाद्यर्थाऽभिधायिन इति । शास्त्रप्रतिज्ञानाऽर्थवन्त इति भाव । अकार उच्चारणार्थ इति । अन्यथा लिडादीना लितो न स्यु । ततश्च 'परस्मै-

१'सर्वस्य'। २आपि क्वचित्।३दद वार्तिक वाचनिकी वार्त्तिकत्वेन परिभाषा। भाष्यनिरूप्ये। ४ 'इत्यत्र'। 'अत्र'।

लित पश्याम ॥ अथापि कथं चिद्वचनाद्वाऽनुवर्तनाद्वेत्यनूक्तनादेश स्या-देवमपि न दोष । आचार्यप्रवृत्तिर्ज्ञापयति-'न लादेशो लित्कृतं भवती'ति यदय णल लित करोति ॥ अथाप्युणादयो व्युत्पाद्यन्ते एवमपि न दोष । क्रियते विशिष्टग्रहणं 'लस्ये'ति ॥*॥ लादेशो वर्णविधे पूर्वविप्रतिषिद्धम् ॥-॥ लादेशो वर्णविधेर्भवति पूर्वविप्रतिषेधेन । लादेशस्यावकाशः-पचतु पठतु ।

प्र ]ल इदस्येति बहुव्रीहिराश्रित । तत्र च लस्य लत्वे कृते न वर्णितस्वर इत्यत्र प्रत्ययोऽस्तीत्यर्थ । अथापीति । ल स्यवेत्-लिदित्येव तपुरुषो यद्याश्रीयत तथापि लस्येति स्थानिवत्वेनाश्रयणात्सत्यामपीत्संज्ञाया लोपो न क्रियते । अनुवर्तनाद्वेति । भावादीनामनुवृत्त्या भावकर्मकर्तृवाचिनो लस्यादेश । न च लोपे सति भावाद्यर्थाभिधायित्व सम्भवतीत्युक्तलोपालाभेव लकारस्यादेशा वक्ष्यन्ते । तापरन्तु लित्स्वरो न भविष्यतीत्यर्थ । क्रियत इति । अनुनासिको लकार स्थानित्वेनोपात्त इत्यर्थ । अथ वा ल अस्य लस्येत्येव निर्देश कृत । अस्येति सर्वनाम्ना भावाद्यर्थाभिधायी परामृश्यते । पचत्वेति । अकृत्स्य विभक्त्यन्तस्यानं

उ ]शना ण स्थायमङ्गत स्यादिति भाव ।विहितविशेषणमिति। न चैव 'शाल दिषु प्रात्नेत्ता'ति भाष्याऽसङ्गति , समुदायस्य ततो विधानेऽपि निर्दिष्टस्य लकारस्य वर्णस्य ततोऽविधानादिति वाच्यम् ,समुदायविधानेऽवयवविधानस्यापि सत्त्वमित्य-भिमानेन एवमपीत्यादिभाष्यस्यैव देश्युक्तित्वेनाऽदर्शने । एतेन त्युट्प्रत्ययविहिता न तु लकार इति परास्तम्।अथाऽपिकथञ्चिदिति।अस्य 'लित्स्वरार्थमित्व स्या'दितिशेष । तदेवाह-ल एवेदिति।ननेत्संज्ञासामर्थ्यात्लोपात्पूर्व,लोपेऽपि स्थानिवत्त्वाद्वा स्वर इति भाव ।नतुरुपत्वे ण्वुल्यादौ कथ स्वर इति चिन्त्यम्। इत्संज्ञकस्य परत्वाऽभावान्, तदव्यवहितपूर्वस्य तदनिर्देश । तस्माद्बहुव्रीहिरेव । 'अथाऽपि कथञ्चि'दिति भाष्यस्य 'व्यपदेशिवद्भावेने'त्यादाय उक्तिन । 'वचनाद्वे'त्यस्यै'रवे भवत्यादेशा न स्युस्तथाऽपी'त्यादिनाह-तथाऽपि लस्येति । एवञ्चानुनासिकस्यादेशस्येत्संज्ञाविधानादिति हितस्य लस्य। ल्युटि तु दोष । भाष्य-एवमपीति । एवञ्चात्र प्रयोजनाऽभावा-दित्वाऽभावेन लादेशात्स्वराऽभावौ सिद्धौ । ल्युटि तु इत्संज्ञा लोपेन च त्यागात दोष इति भाव । ल् अस्येति। अत्र पक्षे 'ल' इति लुप्तषष्ठीकम्, 'अस्ये'ति समानाऽधिकरण तस्य विशेषणम्। वस्तुतो धातोरित्यनुवृत्त्या धातुविहितलकारस्य वर्णस्य तत्र ग्रहणम् । अक्षरस्योच्चारणार्थत्वात् । शाल्दौ तु न व्यञ्जनमात्र धातोर्विहित, किन्त्वकारविशिष्ट इति भाष्यार्थ । भाष्ये-लादेशो वर्णविधेरिति । लस्यादेश इत्यर्थ । ननु वर्णविधिलादेशयोर्युगपत्प्राप्त्यभावेन विप्रतिषेधाऽसम्भव इत आह—

१ 'अनुवर्तनसामर्थ्याद्वेत्यनन्तरस्य नामादेश '। २ 'लादेशेषु'। ३ 'विधेर्भव' ।

तस्मात्सिद्धेप ॥ आदिस्तर्हि कस्मान्न भवति ?॥ सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमिति कृत्वाऽऽदिर्न भविष्यति ॥

पर्यवपाद्यस्य तर्हि कस्मान्न भवति–लविषीष्टेति ? ॥ 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण' इति ॥ इदं तर्ह्युक्त–'प्रकृतानामात्मनेपदानामेत्वं भवती'ति ॥ के च प्रकृता. ? ॥ तादय. ।

॥३॥ आने मुग्ज्ञापकं त्वेते टित्त्वमिणिशीरिच ।

डारौरसु टिदित प्रकृते तद्गुणे च यम् ॥३॥

प्र ]यत्र च छन्दस्युभयथेत्यार्द्धधातुकत्वमिट एष्टव्यम् । आर्द्धधातुक इत्यादेशविधानात् । सप्तदशेति । लस्येत्येषा षष्ठी, सा यद्यवयवावयविसम्बन्धे स्यात्तदा इट एवानुग्रहः स्यान्न तिबादीनाम्, तस्माद्भूयसा स्थान्यादेशसम्बन्धस्य प्रयोजकत्वाल्लस्येति स्थानेयोगा षष्ठीत्यादेश एवेङ्गवति न त्वागम । असिद्धमिति । वल्यार्द्धधातुकापेक्षत्वादङ्गापेक्षत्वाच्च बहिरङ्ग इडागम । 'इटोऽ'दित्यकारस्तु लिङ सम्बन्धीडपेक्षणादन्तरङ्ग । तत्र कर्तव्ये आगमस्यासिद्धत्वादन्त्याभाव । प्रकृतानामिति । तिबादय इहानुवर्तन्ते, तैरात्मनेपदानि विशेष्यन्ते । अथवा प्रकरणस्य विशेषस्थितिहेतुत्वात्प्रकृतान्येवात्मनेपदानीहात्मनेपदशब्देनोच्यन्ते । ज्ञापकमप्याह–आने मुगिति । यद्येत्वमानस्य स्यादानेमुगिति वक्तव्यं स्यादित्यर्थ । टित्त्वमिति । टित स्थाने ये तत्र तेषामेत्व न त्वानस्यापि । अथाप्येतेन्यादौ डारौरसामेत्वं कस्मान्न भवतीत्याह–इणिशीरिच इति । 'लिटस्तझयोरेशिरेच्' 'थास से' इत्येताभ्या सूत्राभ्या त्वपवाद इश् सि इरिच् इत्येते आदेशा विधेया । एत्वस्याऽनेन सिद्धत्वात् । ज्ञापनाय तु सप्तादयो विहिता त्वदेशादेशानामेत्वाऽभावस्य । टिदिति

उ.]आर्द्धधातुकत्वाऽभावादाल्लोपो न स्यादत आह–अत्र चेति।स्थान्यादेशसम्बन्धस्येति । स्थान्यादेशसम्बन्ध प्रति भूयसा प्रयोजकत्वात्स्थानषष्ठीत्यन्वय । टकारस्तु 'इटोऽदि'त्यत्र विशेषणार्थ । वल्यार्द्धधातुके इति । अनेन प्रकृतिप्रत्यययोभयापेक्षत्वमागमस्य दर्शयति । भाष्ये–इदन्तर्ह्युक्तमिति । इदमपि 'गाङ्कुटि'त्यत्रैवोक्तम् । तैरात्मने इति । तिबादीना मध्ये यान्यात्मनेपदानीत्यर्थ । न च तन्मध्ये शानज्निविष्ट इति भाव । अनुवृत्ति विनाऽपीष्टसिद्धिमाह–अथ वेति । भाष्ये एकदेश्याह–आने मुगिति । 'आनयो'रिति प्रयोगे इत्यनानरूपस्यैवानुकरण न्याय्यमिति भाव । वस्तुतस्त्वत्वदेशे शानचानशादिसंबन्धानेऽपि मुक्सिद्धये तथा निर्देश आवश्यक । पचमानो यजमान इति । भानश्चोरप्रकृतत्वे न ते त्वदेशा इति,–शानचोऽप्रकृतत्वेऽस्त्विति–प्रकृते तदिति । ज्ञापनाय तु सप्तादय इति । ननु परत्वादेत्वे पुन प्रसङ्गविज्ञानेन टादिषु 'लक्ष्ये लक्षणस्ये'ति न्यायेनैत्वाऽप्रवृत्तौ किम-

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३।४।८२ ॥

॥*॥ णल शित्करणं सर्वादेशार्थम् ॥*॥ णल्शित्कर्त्तव्य.॥ किं प्रयोजनम्?॥ 'सर्वादेशार्थं'। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥*॥ उक्तं वा ॥*॥[उक्त वा]॥ किमुक्तम् ?॥ 'अनित्वात्सिद्ध'मिति। णकार क्रियते तस्याऽनित्वात्सिद्धम् ॥ क नैष परिहारो न्याय्य —शकारमसि चोदितो 'णकार करिष्यामि शकार न करिष्यामी'ति। णकारो वाऽत्र क्रियेत शकारो वा कोऽन्यत्र विशेष ?॥ अवश्यमत्र णकारो वृद्ध्यर्थं कर्तव्यो 'णिती'ति वृद्धिर्यथा स्यात् ॥ नार्थो वृद्ध्यर्थेन णकारेण। णित्वे योगविभाग करिष्यते। इदमस्ति 'गोतो णित्'। तत 'अल्'। अल्च णिद्भवति। तत 'उत्तमो वे'ति ॥ एव तर्हि लकार क्रियते तस्याऽनित्वात्सिद्धम् ॥ एतमपि क एष परिहारो न्याय्य शकारमस्मि चोदितो 'लकार करिष्यामि शकार न करिष्यामी'ति। लकारो वा क्रियेत शकारो वा कोऽन्यत्र विशेष ?॥ [अयमस्ति विशेष ]॥ अवश्यमेवात्र

प्र ]इति—'अजुर्वी'त्यत्र परिहार। गटितो लङ स्थाने टिदिद् कृत इत्येत्व न भवति। प्रकृते तद्दिति। तत्—एश्च प्रकृते तन्यात्मनेपदे भवति न त्वाने। गुणे कथमिति। श्लोकपूरणार्थमेतदुक्तम्। एत ऐ इत्यत्र पचावेदम् इत्याद्गुणे कृते कथमेत्व न भवतीति चोद्यम्। परिहारस्तु वक्ष्यते,—बहिरङ्ग आद्गुण इति ॥ [टित आत्मने] ॥

परस्मै। णल इति। क पुनरस्य शकार क्रियते, यथादौ णकारस्य अनादित्वादित्संज्ञा न प्राप्नोति। मध्ये शस्येत्संज्ञाया अभाव। अन्ते तु लस्येत्संज्ञाया अप्रसङ्ग। एव तर्हि लन्निपातनस्य। लकुत्तमो वेति करिष्यते। योगविभागश्चेति मन्यते। अथवा णल् शिदिति निर्देश कर्तव्य। अक्रियमाणे हीति। नानुबन्ध-

उ.]र्थमिद, शाख्रे 'ङा'विधायके भाष्ये एतदिति चक्र, एकदेशयुक्तित्वनाऽश्रने। शापकस्य फलाऽभावाद्याऽस्यान्तरम्। 'एधन्त' इत्यादौ परत्वा'द्वार्णादाद'मिति वा पूर्वमनादेशो पूर्वत्वे 'सर्वे सर्वपदादेशा' इति न्यायेनाऽन्तस्याऽऽदेशादेशत्वेन शापकेन नैत्वाऽऽपत्तिरित्यन्ये। श्लोकेति। श्लोकपूरणयाऽन्यमुत्रविषयपूर्वपक्षोऽत्र दर्शित इति भाव। तद्गुणप्रसङ्ग—एत ऐ इत्यत्रेति। अनेनाऽस्य श्लोकस्यैकदेशयुक्तित्व स्पष्टीकृतम् ॥ [ टित आत्मनेपदाना टेरे ] ॥

परस्मैपदानां। मध्ये शस्येति। 'अनादित्वा'दिति शेष। प्रथमपुरुषे 'पपाचे' त्यादौ वृद्धिसिद्धय आह—योगविभागश्चेति। धात्वधिकारे ल्विति। परनिर्देशग-

१ इद क्वचिन्न। २ 'णिद्भवति'। ३ 'कथमेत्व'। ४ इद भाष्य वार्तिकमेति सन्दिग्धम्। ५ अय पाठ क्वचिन्न। ६ 'मत्र'।

स्वरार्थो लकार इत्कर्तव्य । 'लिति प्रत्ययात्पूर्वमुदात्त भवती'त्येष स्वरो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । धातुस्वरे कृते द्विर्वचन, तत्रान्तर्यतोऽन्तोदात्त-स्याऽन्तोदात्त आदेशो भविष्यति ॥ कथ पुनरयमन्तोदात्त स्याद्देशाच्? ॥ व्यपदेशिवद्भावेन ॥ यथैव तर्हि व्यपदेशिवद्भावेनाऽन्तोदात्त एवमाद्युदात्तोपि, तत्रान्तर्यत आद्युदात्तस्याऽऽद्युदात्त आदेश प्रसज्येत ॥ सत्यमेवमेतत् । न त्विद लक्षणमस्ति 'धातोरादिरुदात्तो भवती'ति,इद पुनरस्ति 'धातोरन्त उदा

प्र ]कृतमनेकान्त्वमित्यन्त्यस्य स्यादित्यर्थ ।एतच्च प्राक्लादेशाद्धात्वधिकार इति पक्षमा श्रित्योच्यते । धात्वधिकारे तु सन्यादे परस्येत्यादे प्राप्नोति । धातुस्वर इति । प्रत्ययस्य पित्त्वादनुदात्तत्वाद्धातुस्वर प्रवर्तते । यदेकाजिति । योऽनेकाच् जजा गारेति,—तत्र धातुस्वरे कृते शिष्टस्यानुदात्तत्वे प्रथमैकाचो द्विर्वचन सर्वानुदात्त सिध्यतीत्येकाच एव धातुर्निरूप्यते । व्यपदेशिवद्भावेनेति । 'आद्यन्तवदेकस्मि'न्नित्य नेनेत्यर्थ । यथैवेति । धर्मातिदेश मन्यत । न त्विदमिति । शास्त्रातिदेश इति

उ ]पक्षे इदम् । निर्दिष्टविशेषणे तु तदप्रवृत्त्याऽन्त्यस्यैव प्राप्नोतीति यथाश्रुतमेव भाष्य रमणीयमिति दिक् । भाष्ये—अनित्त्वादिति ।वाक्यार्थबोधे सति प्रत्ययत्वज्ञाने इत्सज्ञा समकालमेव सर्वादर्शनेति तदाऽनेकाच्त्वस्याऽक्षतिरित्यर्थ । [भाष्ये] तस्याऽनित्त्वा दिति । वाक्यार्थबोधात्प्रागनित्त्वादस्याऽन्वाख्यातुरनित्त्वज्ञानादित्यर्थ । एवचाऽ नुबन्धलक्षणाऽभावात्तत्समये 'नाऽनुबन्धकृत'मित्यस्याऽप्राप्तिरिति भाव । यदि तु भाष्यनुबन्धत्व गृहीत्वा तदप्रवृत्तिस्तदा 'डा'वत् 'ण-अट्' इति प्रश्लेषणाऽनेका च्त्वात्सर्वादेश स्यात्म् । निरूपितश्चेद 'टुट प्रथमस्ये'ति सूत्रेऽस्माभि । क एष परिहारो न्याय्य इति । अन्याय्य एष परिहार क उच्यत इत्यर्थ । एव तर्हि लकार इति । 'ल' इति 'ल'णिति वादेश कार्य इति भाव । धातुस्वर प्रवर्तेत इति । प्रवृत्त सतिशिष्टस्वरेण न निवर्तेत इत्यर्थ । भाष्ये—अन्तोदात्त आदेश इति । स्थाने द्विर्वचनमिति भाव । सर्वाऽनुदात्तम्—अनुदात्ताऽभ्यासमित्यर्थ । निरूप्यत इति । विचारविषयीक्रियत इत्यर्थ । भाष्ये—कथम्पुनरयमिति । द्विर्व-चनप्रवृत्तिरित्यर्थ । यदेकाजिति । यदेकाचिगादि प्रवृत्तिरित्यर्थ । धातोरन्तो ऽनुदात्त इत्यर्थ इति भाव । व्यपदेशिवदिति । तत्राऽतिदेशेनाऽन्त वातिदेशा-त्स्वरसिद्धिरित्यर्थ । अस्य आद्यन्तव सूत्रपरतया कैयटोक्ते व्याख्याने बीज चि-न्त्यम् । इतरोऽन्तोदात्तत्वव्यवहार एवाऽनेन व्यपदेशिवद्भावेनोक्त इति मत्वाह—यथैवेति । अन्तोदात्तत्वादिधर्माऽतिदेश एव कैयटे धर्मातिदेशपदेनोक्त । नत्वि-दमिति । एवचाऽनेनाऽन्तत्वाऽतिदेशे शास्त्रेणाऽन्तत्वप्रयुक्तोदात्तत्वे तद्व्यवहार-सिद्धि, आद्युदात्तविधायकशास्त्राऽभावात्तु न तद्व्यवहार इति भाव । 'तस्याऽनि

त्तो भवती'ति । गोऽस्मौ' लक्षणेनान्तोदात्तस्तत्रान्तर्यतोऽन्तोदात्तस्याऽन्तोदात्त आदेशो भविष्यति ॥ एतदप्यादेशे नास्ति-'आदेशस्यान्त उदात्तो भवती'ति, प्रकृतितोऽनेन स्वरो लभ्य । प्रकृतिश्चाऽस्य यथैवान्तोदात्तैवमाद्युदात्ताऽपि । द्वि प्रयोगे चैत्यपि द्विर्वचने उभयोरन्तोदात्तत्वं प्रसज्येत ॥ 'अनुदात्तं पदमेकवर्ज'मिति नास्ति यौगपद्येन सम्भव ॥ पर्याय प्रसज्येत । तस्मात्स्वरार्थो लकार कर्तव्य ॥ लकार क्रियते, तदप्यऽनिष्टासिद्धम् ॥*॥ अकारस्य शित्करणं सर्वादेशार्थम्॥ ॥ अकार शित्कर्तव्य ॥ किं प्रयोजनम्?॥ 'सर्वादेशार्थं' । शित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्ती'त्यन्त्यस्य प्रसज्येत ॥ ननु चाऽकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेण शकारं सर्वादेशो भविष्यति ॥ अस्त्यन्यदकारस्याऽकारवचने प्रयोजनम् ॥ किम् ? ॥ ॥*॥ अकारवचनं समसङ्ख्यार्थम् ॥*॥ [ अकारवचनं क्रियते॥किं प्रयोजनम्?॥ 'समसङ्ख्यार्थम्']॥ 'सङ्ख्यातानुदेशो यथा स्यात् । ॥*॥तस्माच्छित्करणम् ॥*॥ तस्माच्छकार कर्तव्य ॥ न कर्तव्य । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम् अं अ इति । गोऽर्णसनेकाल् । अनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति ॥

प्र ]भाष ।एतदपीति। 'स्थानिवदि'ति'कार्यातिदेश ,प्रा गन्त्यादिति भाव । प्रकृतित इति । स्थानिन इत्यर्थ । द्वि प्रयोग इति । पाक्षिक द्विर्वचनं द्वि प्रयोगो न तु स्यात् द्विर्वचनमिति निर्णय । एकार इति । ततश्च णल उत्तमो वे'ति कर्तव्य, योगविभागश्च कार्य । अकारस्येति । यस्यास्य स्थाने विधीयते तस्येत्यर्थ । एतदपि प्राग्गदेशव्यालाधिकार इति पक्षाश्रयेणोच्यते । धात्वधिकारे त्वादे परस्यादकारे सति रूपं सिद्धम् । अ अ इति । अकारद्वयसमुदायस्य आदेशत्वमित्यर्थ ।

उ ]देश' इत्यस्य शास्त्रप्रवृत्तौ निमित्तस्याऽन्तरस्याऽनेनाऽतिदेश इत्यर्थ । भाष्येऽस्मादिति । प्रकृतिभूतो धातुरित्यर्थ । अन्तोदात्त –तथान्यवहारविषय । तदुपयति–एतदपीति । 'अन्तोदात्त आदेश'इति वचनं नास्तीत्यर्थ । 'स्थानिव'दिति न धर्मोऽतिदेशमित्याह–स्थानिवदिति । कार्यातिदेश प्रकृतित इति । आदेशे प्रकृतिगतस्वरबोधका'स्थानेऽन्तरतम' सूत्रादित्यर्थ । गादस्यव तद्वृत्तिधर्मवत्त्वम् । स च यथा व्यवहितस्थानतोऽन्तोदात्तत्वात् तथाऽनुदात्ततानपीति भाव । स्थाने द्विर्वचनपक्ष स्याऽगतत्व इत्याह–द्वि प्रयोगे चापीति । तदाह–निर्णय इति । योगविभागश्चेति । णकाराऽभावे इदम् । धात्वधिकार इति । परिनि-

१ 'गाऽयं' । २ 'चापि' । ३इद कचित् ।४ 'स्थित्करणस्य' ।
५ 'अ-ग अ इति' । ६ 'गोऽनेकाल्शित्सर्वस्येति' । ७ 'प्रकृतिधर्मवत्त्व' ।

## लोटो लङ्वत् ॥ ३।४।८५ ॥

॥ ॥ लङ्वदतिदेशे जुस्भावप्रतिषेधः ॥*॥ लङ्वदतिदेशे जुस्भावस्य प्रतिषेधो वक्तव्यः । यान्तु वान्तु । 'लङः शाकटायनस्यैवे'ति जुस्भावः प्राप्नोति ॥*॥ उत्ववचनात्सिद्धम् ॥*॥ [उत्ववचनात्सिद्धम्] । उत्वमत्र बाधकं भविष्यति॥ अनवकाशा हि विधयो बाधका भवन्ति, सावकाशं चोत्वम् ॥ कोऽवकाशः ? ॥ पचतु पठतु । अत्रापीकारलोपः प्राप्नोति । तद्यथैवोत्वमीकारलोपं बाधते एवं जुस्भावमपि बाधते ॥ न बाधते ॥ किं कारणम् ? ॥ येन नाप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते इकारलोपे उत्वमारभ्यते, जुस्भावे पुनः प्राप्ते चाऽप्राप्ते च। अथ वा 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते' इत्येवमिदमुत्वमिकारलोपं बाधते जुस्भावं न बाधते ॥ एवं तर्हि वक्ष्यति तत्र लङ्ग्रहणस्य प्रयोजनम् 'लङेव यो लङ् तत्र यथा स्याल्लङ्वद्भावेन यो लङ् तत्र मा भूदिति ॥

## सेर्ह्यपिच्च ॥ ३।४।८७ ॥ मेर्निः ॥ ३।४।८९ ॥

॥*॥ हिन्योरुत्वप्रतिषेधः ॥*॥ हिन्योरुकारस्य प्रतिषेधो वक्तव्यः । लुनीहि । लुनानि । एरुरित्युत्वं प्राप्नोति ॥*॥ न वोच्चारणसामर्थ्यात् ॥*॥ न वा वक्तव्यः ॥ किं कारणम् ?॥ ['उच्चारणसामर्थ्यात्'] । उच्चारणसामर्थ्यादत्रोत्वं न भविष्यति । अल्पीयश्चैव हीकारोच्चारणमुकारोच्चारणात् । इकारं चोच्चारयत्युकारं च नोच्चारयति । तस्यैतत्प्रयोजनमुत्वं मा भूदिति ॥[ मेर्निः ] ॥

प्र ] लोटो ल । 'लोट' इत्युभयेयं षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते, तेन लङो यत्कार्यं तल्लोटोऽतिदिश्यते न तु लङि यत्कार्यं तदित्यडाटौ लोटि न भवतः । उत्ववचनादिति । नाप्राप्ते लङ्वद्भावे उत्वमारब्धं तस्य बाधकमित्यर्थः । अत्रापीति । लङ्वद्भावादित्यर्थस्त्वनेनेत्यर्थः । [ लोटो लङ्वत् ] ॥

सेर्ह्य । अल्पीय इति । उकारे सति प्रक्रियाया लाघवं भवति । इकारे तु

उ.]णे इदम् । विहितविशेषणपक्षे लन्त्यादेश एव प्राप्नोति । अत एव 'नित्यं ङितः' इत्यादौ न दोष इति बोध्यम् । अकारद्वयेति । एवं 'ण-अस्मिन्नपि प्रश्नो बोध्यः ॥

लोटो ल । अस्मादतिदेशादाटि अनाट्यपि प्रसक्ते इत्यत आह–लोट इतीति । ननु द्विविधेऽपि परत्वाज्जुसा 'इतश्चे'त्यस्य बाधात् तस्मादन्येन द्विपक्षे सर्वत्र प्राप्ति, जुसा इकारापहारे तदभावाद् 'इतश्चे'त्यस्याऽप्राप्तिः । इकारलोपे च परभावाज्जुसोऽप्राप्तिरिति यौगपद्याऽसम्भवात् । स्थानिवत्त्वन्तु आदेशप्रवृत्तेरुत्तरं, न तत्समकालम् , एवं सम्यन्यनरविषयत्वं नानाऽभावद्विति ममतावेरहेणोत्सवनाऽभावं स्यादत आह भाष्ये–अथ वा पुरस्तादपवादा इति। तत्र लङ्ग्रहणस्येति । तत्र–'लङः शाकटायनस्यै'ति सूत्र इत्यर्थः ॥ [ लोटो लङ्वत् ] ॥

सेर्ह्यपिच्च । भाष्ये–अल्पीयश्चैव हीति । मात्राकृतलाघवाऽभाव इत्यर्थः ।

१ इद तुम । २ 'वाचेन' ३ 'वमुत्व' । ४ 'रनस्य' । ५ कचित ।

## एत ऐ ॥ ३।४।९३ ॥

॥*॥ एत ऐत्वे आट्गुणप्रतिषेधः ॥*॥ एत ऐत्वे आट्गुणस्य प्रतिषेधो वक्तव्यः । पचावेदम् । पचामेदम् । आट्गुणे कृते 'एत ऐ' इत्यैत्वं प्राप्नोति । ॥*॥ न वा बहिरङ्गलक्षणत्वात् ॥ ॥ न वा वक्तव्यः ॥ किं कारणम् ? ॥ 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षण आट्गुणः, अन्तरङ्गमैत्वम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' । [ एत ऐ ] ॥

## लिङः सीयुट् ॥ ३।४।१०२ ॥

॥*॥ यासुडादेः सीयुट्प्रतिषेधः ॥*॥ यासुडादेः सीयुटः प्रतिषेधो वक्तव्यः । चिनुयुः । सुनुयुः । 'लिङः सीयुट्'इति सीयुट् प्राप्नोति ॥*॥ न वा वाक्यापकर्षात् ॥*॥ न वा वक्तव्यः ॥ किं कारणम् ? ॥ 'वाक्यापकर्षात्' । वाक्यापकर्षाद्यासुट् सीयुटं बाधिष्यते । ॥*॥ सुट्तिथोस्त्वपकर्षविज्ञानम् ॥*॥ सुट्तिथोस्त्वपकर्षो विज्ञायेत । कृषीष्ट [ कृषीष्टाः । हृषीष्ट हृषीष्टाः ] । ॥*॥ अनादेशे सुड्वचनम् ॥*॥ अनादेशे सुड्वक्तव्यः । कृषीयास्ताम् । कृषीयास्थाम् । तकारथकारादेर्लिङ इति सुट् न प्राप्नोति ॥*॥ न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'तिथोः प्रधानभावात्' । तिथावेवाऽत्र प्रधानं, तयोर्विशेषणं लिङ्ग्रहणम् । नैवं विज्ञायते तकारथकारादेर्लिङ इति ॥ कथं तर्हि ? ॥ तकारथकारयोः सुड्भवति तौ चेल्लिङ' इति ॥

प्र ]सति लक्षणान्तरेणोक्ते प्रक्रियागौरवं स्यात् । न चेकारोच्चारणे लाघवं भवति । तस्मादिकारोच्चारणमुक्तस्य बाधनमेवेत्यर्थः । [ मेहोपिच ] ॥

लिङः सीयर्थेन कृषीढ कृषीढा इत्येवमादौ सति कृत निरो गऽभावाद्बाध्यबाधकभावाऽभावात्सीयुड्भवति, एवं यासुड्यपि कृते तस्य लिङ्भक्तत्वाल्लिङादेः सीयुड्भवतु इति मत्वाह–यासुडादेरिति । न वेति । लिङः सीयुडित्यस्य वाक्यस्य यासुडिति वाक्येनापकर्षो बाधनमित्यर्थः । विनापि निरोधेन सामान्यविधिर्विशेषविधिना बाध्यते तत्रैव दधीति भावः । अनादेशेति । तिथोरिति सप्तमी मन्यते । ततस्तादिविधिसद्भावात्तकारथकारादेरेव लिङादेशस्य सुट् स्यात् कृषीढ कृषीढा इत्यादाविति भावः । नवेति । नोभयमपि परिहृतम् । सुटस्तकारथकारागमित्वे, सीयुटस्तु लिङागम इति कार्यिभेदाद्बाध्यबाधकभावाऽभावः । तिथोरिति च षष्ठीनिर्देशः

उ ]प्रक्रियागौरवनिकारोच्चारणेऽस्यवसानि भावः । उक्तस्य बाधनमेवेति । ग्रहण मिकारस्यैवास्य प्रयोजनम् ॥ [ मेहोपिच ] ॥

लिङः सीयुट् । नन्वपवादत्वाद्यासुट् बाधकस्य तद्विषये सीयुटस्तु अप्रवृत्तिर्यथा वेति । विनाऽपीति । अत एव पूर्वमपि सीयुडुक्त, वस्त्रादीनाम् उत्सर्गाऽप्रवृत्तमिति भावः । भाष्ये–सुटोऽपीति । कर्तरि षष्ठी । कर्मणोऽनुपादानात्कृत

१ 'ऐ इतित्वे' । २ 'वक्तव्यम्' । ३ इदं क्वचित् । ४ 'यत्र' । ५ 'तद्विशेषण' ।

यासुट्परस्मैपदेषूदात्तो ङिच्च ॥ ३।४।१०३ ॥

किमर्थं यासुटो ङित्त्वमुच्यते?॥ ॥यासुटो ङिद्वचनं पिदर्थम्॥१॥[यासुटो ङित्त्वं क्रियते॥किं प्रयोजनम्?॥ 'पिदर्थम्']॥पिति वचनानि प्रयोजयन्ति॥ अथ किमर्थमुदात्तवचनं क्रियते?॥ ॥उदात्तवचनं च॥२॥[उदात्तवचनञ्च]॥किम्?॥ 'पिदर्थमेव' ॥२॥ आगमानुदात्तार्थं वा ॥३॥ अथ वैतज्ज्ञापयत्याचार्य 'आगमा अनुदात्ता भवन्ती'ति ॥ अस्त्यन्यस्मिन्प्रयोजने ज्ञापकं भवति । उक्तं चैव-यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति ॥ शक्यमनेन वक्तुं—यासुट्परस्मैपदेषु भवति अपिच ङिद्भवतीति,सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्य —'आगमा अनुदात्ता भवन्ती'ति ।

आतः ॥ ३।४।११० ॥

किमिदं जुस्याकारग्रहणं नियमार्थमाहो स्वित्प्रापकम् ? ॥ कथं च नियमार्थं स्यात्, कथं वा प्रापकम्?॥ यदि सिज्ग्रहणमनुवर्तते ततो नियमार्थम्, अथ निवृत्तं ततः प्रापकम् ॥ कश्चात्र विशेषः ? ॥*॥ जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणम् ॥१॥ 'जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणं कर्तव्यम् । 'आतः सिज्लुगन्ता'दिति वक्तव्यम् । इह मा भूत्—अकार्षुः अहार्षुः ॥ अस्तु तर्हि प्रापकम् ॥२॥ प्रापकमिति चेदन्यत्रलक्षण

प्र ]तदादिविध्यभावादनयोरपि निषेधो भवतीति ॥ [ लिङ सीयुट् ] ॥

आत । अकार्षुरिति । अत्र नाकारान्तात्सिज्विहितः, नापि परः, रेफेण व्यवधानादिति जुस्न स्यात् । ननु यच्चकार्षुरित्यादावपि नियमः स्यात्तत्र पूर्वसूत्रेण सिजन्ताज्जुस्विधानमनवकाशं स्यात् । नैष दोषः । अगुरस्तेरित्यादेरवकाशान्तरभावात्। विषयविभागश्च न लभ्यते,यतोऽकार्षुरिति जुस् भवति, अभूवन्नित्यत्र तु

उ.]ष्यभाव । सङ्कृतौ सीयुगे बाध स्यादित्यर्थः । कार्यभेदादिति। प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन कार्यभेदेऽपि बाधदर्शनाच्चिन्त्यमिदम् । 'तस्मादपकर्षो विनादेने'त्युत्तरं भाष्ये 'तस्माद्यासुडादेः सीयुटः प्रतिषेधो वक्तव्य' इति शेषः । एतदेव च वचनमस्मिन्प्रकरणे बाध्यबाधकभावाऽभावस्येति सुयुः सीयुगो न बाध इति भाव इत्युधितम् ॥ [ लिङ. सीयुट् ] ॥

यासुट् प । आगमा अनुदात्ता इति भाष्य । 'अनुदात्तपदनिर्देशकत्वान्नगपलोदनादिविधिप्रवृत्तिरप्यसन्निहितानामपि तेन निघातप्रवृत्तिर्नोप्यत इत्यर्थः । विस्तरेण चैतद्भाष्यप्रतिपत्त्यर्थं निरूपितं प्रकृतसूत्रे शब्देन्दुशेखरे च ॥

आत ।भाष्ये-इह माभूदकार्षुरिति। नियमेन व्यवच्छेदो मा भूदित्यर्थः । ननु सिचः परस्य झेर्जुस्त्वाद्याकारपरत्वमिच परस्थित्ते न दोष इत्यत आह-अत्रेति । नियम स्यादिति । नियमेन व्यवच्छेदः स्यादित्यर्थः । अनुरिति। योगविभाग-

१ इद उक्तम् । २ 'अनु' ।

प्रतिषेध ॥*॥ प्रापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्य । अभूव मिति प्रत्ययलक्षणेन जुस्भाव प्राप्नोति ॥ ॥एवकारकरण च ॥ ॥ एवकार करण च कर्तव्यम् । 'लङ शाकटायनस्यैवे'ति । नियमार्थे पुन सति नार्थ एवकारकरणेन॥ननु च प्रापकेऽपि सति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकार नियमार्थो भविष्यति॥[ इष्टतोऽवधारणार्थ *]॥ इष्टतोऽवधारणार्थस्तर्ह्येवकार कर्तव्य । यथैव विज्ञायेत-लङ शाकटायनस्यैवे'ति,मैव विज्ञायि-'लिङ एव शाकटायनस्ये'ति॥किं च स्यात् ? ॥ लुङ शाकटायनस्य न स्यात् । अदु । अयु अगु अस्थु ॥ ॥लङ्ग्रहण च॥ ॥लङ्ग्रहणं च कर्तव्यम्॥लङ शाकटायन स्यैवेति । नियमार्थ पुन सति नार्थो लङ्ग्रहणेन। 'आतो ङित' इति वर्तते । न चान्य आकारादनन्तरो ङिदस्त्यन्यदतो लङ ॥ अस्तु तर्हि नियमार्थम् ॥ ननु चोक्त 'जुस्यकारग्रहण नियमार्थमिति चेत्सिज्लुग्ग्रहण'मिति ॥ नैष दोष । तुल्यजातीयस्य नियम ॥ कश्च तुल्यजातीय ? ॥ यो द्वाभ्यामनन्तर आतश्च सिचश्च ॥ अथ तत्रैवकारकरण नैव कर्तव्यम् ? ॥ कर्तव्य च ॥

प्र ]न भवति।यद्यत्र पूर्वसूत्रे सिज्ग्रहणमकृत्वा आत सिच' इति वक्तव्य स्यात्।नैत दस्ति । उत्तरत्राऽऽत इत्यस्यानुवृत्त्यर्थ्या योगविभाग स्यात् । अथ वा योगविभागो ऽस्य नियमार्थत्वाय स्यात् । अस्य हि नियमार्थत्वे उत्तरत्र लङ्ग्रहण न कर्तव्य भवति। एवकारकरण चेति । यदा सिज्ग्रहणमिह नानुवर्तते तदानेनैव लङादेशस्य ङेरात उत्तरस्याऽयुरित्यादौ जुसि सिद्धे 'लङ शाकटायनस्यैवे'ति नियमार्थ एवकार कर्तव्य , अन्यथा अनेन अयानित्यादि यथा स्यात् । यदा तु सिज्ग्रहणानुवृत्त्या नियमार्थमिद तदा 'लङ शाकटायनस्ये'त्येत पक्षे विध्यर्थं कर्तव्य, नार्थ एवकारेण इत्यर्थ । मैव विज्ञायीति। 'लङ एव शाकटायनस्ये'ति विज्ञायमाने लुङ शाकटाय नस्य न स्यात् । ततश्च लुङि विकल्प प्रसज्येत । लङि तु नित्य स्यादित्यर्थ । तुल्यजातीयस्येति । सिज्लुक विना आत सिचश्चानन्तरो ङिर्न भवतीति सिज्लु

उ ]नर्थेऽस्त्यन्तरनुपदनेव परिहारिष्यति।अत एव दूषणान्तरमाह-विषयविभागश्चेति । अभूवमिति । अत्र प्रत्ययलक्षणेन ङित्त्वता बोध्या । योगविभाग स्यादिति । 'लङ शाकटायनस्ये'त्यत्र सिज्ग्रहणस्य 'आत' इत्यस्याऽनुवृत्त्यर्थ्या योग विभाग इत्यर्थ ।ननु 'आत सिच' इत्युच्यमानेऽपि स्वरितत्वादाऽऽगमादात इत्येता ऽनुवर्तिष्यते न तु सिच इति, उत्तरत्र लङ्ग्रहणाच्चाऽत आह-अथ वेति । नियमार्थ यायेति।तदस्तु ' अभूवन्नि'त्यत्र व्यावृत्ति । नियमपक्षे योगविभागप्रयुक्त गौरवेऽपि लाघवान्तर दर्शयति-अस्येति।ततश्च लुङीति।शाकटायनमते लङ एवा ऽन्यस्य तन्मते नेत्यर्थे लुङि शाकटायनमते निषेध ,अन्यमते जुसित्यर्थाद्विकल्प फलित । लङि तु शाकटायनमतेऽन्यमते च प्राप्त्या नित्यत्व फलतीति भाव ।

१ प्रहण' । २ 'वक्तव्य' । ३ 'एवकारण । ४ लुङ स्यात् । ५ विज्ञायत' ।

किं प्रयोजनम् ? ॥ उत्तरार्थम् ॥ लिङ् लिडाशिषि आर्द्धधातुकमेव यथा स्यात्। इतरथा हि वचनादार्द्धधातुकसंज्ञा स्यात्, तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा ॥ अथ लङ्ग्रहणं नैव कर्तव्यम् ? ॥ कर्तव्यं च ॥ किं प्रयोजनम् ? ॥ लडेव यो लङ् तत्र यथा स्याल्लुङ्भावेन यो लङ् तत्र मा भूदिति॥

## आर्द्धधातुकं शेषः ॥ ३।४।११४ ॥

॥*॥ आर्द्धधातुकसंज्ञायां धातुग्रहणम् ॥*॥ आर्द्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम्। धातोः परस्यार्द्धधातुकसंज्ञा यथा स्यात्। इह मा भूत् वृक्षत्वं वृक्षतेति। क्रियमाणे चापि धातुग्रहणे-॥*॥ स्वादिप्रतिषेधः ॥*॥ स्वादीनां प्रतिषेधो वक्तव्यः। इह मा भूत्-लूभ्यां लूभिरिति ॥ अनुक्रान्तापेक्षं शेषग्रहणम्॥एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति। तस्माद्धातुग्रहणं कर्तव्यम्॥तत्तर्हि धातुग्रहणं कर्तव्यम्?॥न कर्तव्यम्॥आतृतीयपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते॥क्व प्रकृतः?॥'धातोरेकाचो हलादेः'रिति॥एवमपि श्रीकाम्यति भूकाम्यतीति प्राप्नोति॥*॥तद्विधानात्सिद्धम्॥*॥ [ तद्विधानात्सिद्धम् ]॥विहितविशेषणं धातुग्रहणं 'धातोर्यो विहितः' इति॥धातोरेव विहितः॥ सङ्गीर्यं धातोरित्येव यो विहित इति॥ इति श्रीभगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

---

प्र ]गन्तस्याकान्तस्येह ग्रहणमिति नियमेन सिजलुगन्तमेव निवर्त्यते।उत्तरार्थमिति। अन्यथैकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्य दृष्टत्वात्तिङ्ङादेशानां सार्वधातुकसंज्ञाऽपि स्यात्। तत्सन्निमित्तविकारणप्रसङ्गः। आर्द्धधातुकसंज्ञा चेटादर्या स्यात् ॥

आर्द्धधा। अनुक्रान्तापेक्षमिति। अनुक्रान्ता ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्द्धधातुकसंज्ञा भवन्ति न त्वनुक्रस्यमाना इत्यर्थः। धातोरित्येवमिति। धातोरित्येव धातुशब्दमुच्चार्य ये विहिता इत्यर्थः। इति महामहोपाध्यायश्रीमज्जैयटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।

---

उ ]भाष्ये-लङ्ग्रहणञ्चेति। असति लङ्ग्रहणे लुङ्यपि विकल्पः स्यात्। न च 'शात' इति योगविभागात् ते नित्य इति वाच्यं, लुङि विकल्पो लङि नित्य इति वैपरीत्यस्यापि सम्भवादिति भावः।एवञ्च 'आत'इति सूत्रं 'सिच'इत्यनुवृत्त्या नियमार्थम्, उत्तरसूत्रन्तु विध्यर्थम्। 'शाकटायनस्यैवे'त्येवकार उत्तरार्थः। लङ्ग्रहणं लङ्वद्भावेन लोऽग्रहणार्थमिति बोध्यम्। एवञ्च 'धातो'रिति सूत्रस्यभाष्यं प्रौढ्या, एतत्सूत्रस्थभाष्यविरोधादिति बोध्यम् ॥ [ आत. ] ॥

आर्द्धधा।भाष्ये-धातोरेकाच इति।'धातो'रिति पृथक्सूत्रन्तु प्रत्याख्यानमेव। धातोरित्येवमिति। व्याख्यानादिति भावः ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥१॥